सोत्तरा

# मध्यमाप्रश्नावली

## [ चतुर्थखण्डस्य ]



व्याकरणाचार्य—

पण्डित श्रीछबिनाथ त्रिपाठिना

सम्पादिता ।

प्रकाशकः—

जयकृष्णदास हरिदासगुप्तः—

चौखम्बा संस्कृत सीरिज आफिस,

बनारस सिटी ।

द्वितीयावृत्तिः ] । १९४०

द्वितीय संस्करण ! प्रकाशित हो गया !!

काशीस्थ ग० स० कालेज सर्वविधमध्यमचतुर्थखण्ड में तथा कलकत्ता साहित्योपाधिपरीक्षा के द्वितीयपत्र में निर्धारित

'प्रबोधिनी' और 'प्रकाश' दो टीकाओं के सहित

# स्वप्नवासवदत्त नाटक–

टीकाकार काशी के दो धुरन्धर विद्वान्–
पं० अनन्तरामशास्त्री वेताल साहित्याचार्य,
पं० जगन्नाथशास्त्री हाशिङ्ग साहित्याचार्य ।

## अन्य संस्करणों से इस संस्करण की विशेषतायें–

मूल ग्रन्थ की कठिनाई को दूर करने के लिए "प्रबोधिनी" नामक संस्कृत व्याख्या में अन्वय, विग्रह, पर्याय, सुन्दर अर्थ, भावार्थ, कोश, अलङ्कार, छन्द, नाट्य–लक्षण आदि विषय और साथ ही साथ "प्रकाश" नामक प्राञ्जल भाषाटीका भी रख दी गयी है । इस कारण यह ग्रन्थ इतना सरल हो गया है कि साधारण बुद्धि सम्पन्न विद्यार्थी भी विना गुरु के पास गये ही इसे पढ़ भली भांति समझ सकता है ।

## सब से बड़ी बात–

तो यह है कि ग्रन्थ के आदि में अति सरल संस्कृतमयी विस्तृत भूमिका भी दी गयी है । जिससे ग्रन्थकार का समय उसकी विशेषतायें और प्रस्तुत ग्रन्थ की मननीय समालोचना का काम बड़े सरल ढंग से हल हो गया है । कथासरित्सागर, तथा बृहत्कथामञ्जरी के वे तरंग भी उद्धृत कर दिये गये हैं कि जिनका कथानक इस ग्रन्थ के कथानक के अनुसार है । इन विशेषताओं के अतिरिक्त संस्कृत तथा भाषा दोनों ही में सरल रीति से कथासार भी लिख दिया गया है, जिससे संक्षेप में इसका कथानक समझने में बड़ी सरलता हो गई है ।

## विश्वास रखिये–

परीक्षोपयोगी संपूर्णविषयों से युक्त "प्रबोधिनी" तथा "प्रकाश" २ टीकाओं से युक्त स्वप्नवासवदत्त नाटक का दुसरा कोई भी संस्करण नही हैं । गवर्नमेन्ट कालेज काशी के माननीय महामहोपाध्याय एवं सुयोग्य प्रतिष्ठित विद्वानो ने मुक्तकंठ से इसी संस्करण की प्रशंसा की है । विद्यार्थियों के लिए यही ग्रन्थ उपयोगी है । यदि आपने अभी तक इसे न खरीदा हो तो शीघ्र खरीद लीजिए ।

द्वितीय संस्करण सजिल्द पुस्तक का मूल्य १)

---

प्राप्तिस्थानम्—चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी ।

सोत्तरा

# मध्यमाप्रश्नावली

[ चतुर्थखण्डस्य ]

व्याकरणाचार्य—

पण्डित श्रीछविनाथ त्रिपाठिना

सम्पादिता ।

पं० श्रीविश्वेश्वरझा शास्त्रिणा परिष्कृता संशोधिता च ।

प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

वि० सं० १९९७

॥ श्रीः ॥

## व्याकरणमध्यामचतुर्थखण्डप्रश्नोत्तरावल्याः

# प्रयोगाणामकारादिक्रमेणानुक्रमणिका ।



इति।

प्राप्तिस्थानम्—

**चौखम्बा संस्कृत पुस्तकालय,**

**बनारस सिटी।**

श्रीगणेशाय नमः ।

# सिद्धान्तकौमुद्याम्

## व्याकरणमध्यमचतुर्थखण्डे-प्रश्नाः ।

कोऽयं द्वारि हरिः प्रयाह्युपवनं शाखामृगस्यात्र किम्' ?
कृष्णोऽहं दयिते बिभेमि सुतरां कृष्णादहं वानरात् ।
राधेऽहं मधुसूदनो व्रज लतां तामेव तन्वीमलम्'
इत्थं निर्वचनीकृतो दयितया ह्रीणो हरिः पातु वः ॥ १ ॥

श्रीश्यामवर्णपुत्रेण छविनाथेन धीमता ।
परीक्षोदधिलाभाय कृता प्रश्नोत्तरावली ॥ २ ॥

१९२५

प्रथमपत्रम् ।

१—अजुहवुः, बिभरामास, अपिपः, धत्तः, अनात्सीत्, मोढा एषां साधनं विधेयम् ।

२—रुन्धः, विविजिथ, संस्कुर्वन्ति, सञ्चस्करिथ, अबान्धाम्, अभ्यषत्, अपारिष्टाम्, खौनीहि, साधु साधनमेषां कुरुत ।

३—प्राथयति, कंसमजीघतत् अत्रत्यं वृत्यं विलिख्य । अदुद्रुवत्, प्रत्याययति, प्राणिणत्, साधनीया एतेऽपि सूत्रनिर्देशपुरस्सरम् ।

४—ऊर्णुनविषति, सोसूचाञ्चक्रे, अपास्पाः, अजङ्गमीत्, मामोति, एषां साधनं कार्यम् ।

५—राजीयति, औस्रीयत्, त्वापयति, गरयति, बुभाव, अमालात्, पुत्रीयति छात्रम् । विशदतया साधनीयाः सर्वे प्रयोगाः ।

## १—प्रश्नोत्तराणि ।

१—अजुहवुः—दाने अदने चार्थे हु इत्यस्य "भूवादयो धातवः" इत्यनेन धातुसंज्ञायां लङि झिप्रत्यये "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्व-

धातुकसंज्ञायाम् **"कर्तरि शप्"** इत्यनेन शपि **"जुहोत्यादिभ्यः श्लुः"** इत्यनेन शपश्श्लौ **"श्लौ"** इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् **"लुङ्लङ्लृङ्क्ष्वडुदात्तः"** इत्यनेनाडागमे **"कुहोश्चुः"** इत्यनेन चुत्वे **"अभ्यासे चर्च"** इत्यनेन जश्त्वे **"सिजभ्यस्तविदिभ्यश्च"** इत्यनेन जुस्यनुबन्धलोपे **"हुश्नुवोः सार्वधातुके"** इत्यनेन यणि प्राप्ते तं बाध्य परत्वात् **"जुसि च"** इत्यनेन गुणेऽवादेशे सकारस्य रुत्वे विसर्गे च कृते **'अजुहवुः'** इति रूपं सिद्ध्यति ।

**बिभरामास**—भृ इत्यस्माद्धातोर्लिटि **"भीह्रीभृहुवां श्लुवच्च"** इत्यनेन विकल्पेन आमि **"श्लौ"** इत्यनेन द्वित्वे **"पूर्वोऽभ्यासः"** इत्यनेन अभ्याससंज्ञायाम् **"उरत्"** इत्यनेन-अत्वे रपरत्वे **"हलादिः शेषः"** इत्यनेन लोपे **"भृञामित्"** इत्यनेन इत्वे **"अभ्यासे चर्च"** इत्यनेन अभ्यासजश्त्वे च कृते **"आमः"** इत्यनेन लिटो लुकि ततः **"कृञ्चानुप्रयुज्यते लिटि"** इत्यनेन लिट्परकास्धातोरनुप्रयोगे अनुबन्धलोपे तिबादेशे अनुबन्धलोपे आर्धधातुकत्वे णलादेशे अनुबन्धलोपे **"सार्वधातुकाऽऽर्द्धधातुकयोः"** इत्यनेनानभ्यासस्य गुणे रपरत्वेऽसो द्वित्वेऽभ्याससंज्ञायां **"हलादिः शेषः"** इत्यनेन सकारस्य लोपे **"अत आदेः"** इति दीर्घे पुनः सवर्णदीर्घे **'बिभरामास'** इति रूपं सिद्ध्यति । अत्राऽनुप्रयोगसामर्थ्यादस्तेर्भूभावो नेति ।

**अपिपः**—पालनपूरणार्थक पॄ इत्यस्माद्धातोर्लङ्लकारे प्रथमपुरुषैकवचने तिप्यनुबन्धलोपे सार्वधातुकत्वे **"लुङ्लङ्लृङ्क्ष्वडुदात्तः"** इत्यनेन अडागमेऽनुबन्धलोपे शपि **"जुहोत्यादिभ्यः श्लुः"** इत्यनेन शपः श्लौ **"श्लौ"** इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् । **"उरत्"** इत्यनेन अत्वे रपरत्वे **"हलादिः शेषः"** इत्यनेन लोपे **"अर्तिपिपर्त्योश्च"** इत्यनेनेत्वे अपिपॄ + ति इति जाते **"सार्वधातुकार्द्धधातुकयोः"** इत्यनेन गुणे रपरत्वे **"इतश्च"** इत्यनेनेकारलोपे **"हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्"** इत्यनेन तकारलोपे **"खरवसानयोर्विसर्जनीयः"** इत्यनेन रेफस्य विसर्गे च कृते **अपिपः** इति रूपं सिद्ध्यति ।

**धत्तः**—धा धातोर्लटि **"तिङ्शित्सार्वधातुकम्"** इत्यनेन सार्वधातुकसंज्ञायां **"कर्त्तरि शप्"** इत्यनेन शपि **"जुहोत्यादिभ्यः श्लुः"** इत्यनेन शपः श्लौ **'श्लौ'**इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् **"ह्रस्वः"**इत्यनेनाभ्यासस्य ह्रस्वे धधा + तस् इति जाते **"अभ्यासे चर्च"** इत्यनेन जश्त्वे **"उभे अभ्यस्तम्"** इत्यनेनाभ्य

स्तसंज्ञायाम् "श्नाभ्यस्तयोरातः" इत्यनेन आकारस्य लोपे "दधस्तथोश्च" इत्यनेन भष्भावे "खरि च" इत्यनेन चर्त्वे "ससजुषोरुः" इत्यनेन सस्य रुत्वे विसर्गे च कृते "धत्तः" इति रूपं सिद्ध्यति ।

ननु "श्नाभ्यस्तयोरातः" इत्याल्लोपस्य अचः परस्मिन् पूर्वविधावित्यनेन स्थानिवत्वान्न तकारपरकत्वन्नापि झषन्तत्वमित्यत आह–दधस्तथोश्चेति सूत्रारम्भ-सामर्थ्यादत्राल्लोपो न स्थानिवत् । वस्तुतस्तु—भष्भावस्य पूर्वत्रासिद्धीयत्वा-देव तस्मिन् कर्त्तव्ये अल्लोपस्य स्थानिवद्भावनिषेधादेव सिद्धे वचनसामर्थ्याश्रयण-क्लेशो वृथैवेति भावः ।

अनात्सीत्—बन्धनार्थक णह् इत्यस्माद्धातोः "णो नः" इत्यनेन नकारे ततो लुङि प्रथमपुरुषैकवचने तिपि अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे "च्लि लुङि" इत्यनेन च्लौ "च्लेः सिच्" इत्यनेन सिजा-देशे इचावितौ "इतश्च" इति सूत्रेणेकारस्य लोपे "अस्तिसिचोऽपृक्ते" इत्यनेन ईडागमे "वदव्रजहलन्तस्याचः" इत्यनेन हलन्तलक्षणवृद्धौ "नहो धः" इत्यनेन हकारस्य धकारे "खरि च" इत्यनेन चर्त्वे 'अनात्सीत्' इति रूपं सिद्ध्यति ।

मोढा—मुह् इत्यस्माद्धातोर्लुट्लकारे तिप्प्रत्यये सार्व्वधातुकत्वे "स्यतासी-लृलुटोः" इत्यनेन तासीप्रत्यये "आर्द्धधातुकं शेषः" इत्यनेनार्द्धधातुकत्वे "लुटः प्रथमस्य डारौरसः" इत्यनेन तिपो डादेशेऽनुबन्धलोपे डित्वसामर्थ्याट्टि-लोपे "पुगन्तलघूपधस्य च" इत्यनेन गुणे "वा द्रुहमुहष्णुहष्णिहाम्" इत्य-नेन हकारस्य घत्वाभावपक्षे "होढः" इति सूत्रेण हस्य ढत्वे "झषस्तथोर्धोऽधः" इत्यनेन तकारस्य धकारे "ष्टुना ष्टुः" इत्यनेन ष्टुत्वे "ढो ढे लोपः" इत्यनेन ढलोपे च 'मोढा' इति रूपं सिद्ध्यति ।

## २—प्रश्नोत्तराणि

रुन्धः—आवरणार्थक इरित्संज्ञक रुध् इत्यस्माद्धातोर्लट्लकारे तस् प्रत्यये "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसंज्ञायाम् "कर्त्तरि शप्" इत्यनेन शपि प्राप्ते अपवादत्वात्तम्प्रबाध्य "रुधादिभ्यः श्नम्" इत्यनेन श्नमि कृतेऽनुब-न्धलोपे रुन + ध् + तस् इति स्थिते "श्नसोरल्लोपः" इत्यनेन अकारलोपे णत्व-स्यासिद्धत्वादनुस्वारे परसवर्णे च कृते "झषस्तथोर्धोऽधः" इत्यनेन तकारस्य धकारे

धस्य जश्त्वे च कृते सकारस्य रुत्वे विसर्गे च कृते 'रुन्धः' इति सिद्धयति ।

ननु कृतेऽपि परसवर्णे तस्य णत्वं कुतो नेति चेन्न । तस्यासिद्धत्वाण्णत्वं न । नन्वेवमपि अल्लोपस्य "अचः परस्मिन् पूर्वविधौ" इति सूत्रेण स्थानिवत्त्वात्कथमनुस्वारपरसवर्णावित्याशंक्याह—"न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु" इति सूत्रेणानुस्वारपरसवर्णयोरल्लोपो न स्थानिवदिति दिक् ।

**विविजिथ**—रौधादिकात् विज् धातोर्लिट्लकारे मध्यमपुरुषैकवचने सिपि आर्द्धधातुकत्वे थलि कृते "आर्द्धधातुकस्येड्वलादेः" इत्यनेनेडागमे "लिटिधातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे "पुगन्तलघूपधस्य च" इत्यनेन लघूपधगुणे प्राप्ते "विज इट्" इति ङित्वेन लघूपधगुणनिषेधे 'विविजिथ' इति सिद्धयति ।

**संस्कुर्वन्ति**—समित्युपसर्गपूर्वकात् कृधातोर्लट्लकारे झि प्रत्यये "झोन्तः" इति सूत्रेण झेरन्तादेशे सार्वधातुकत्वे "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसंज्ञायाम् "कर्त्तरि शप्" इत्यनेन शपि प्राप्ते "तनादिकृञ्भ्य उः" इत्युप्रत्यये धातोर्गुणे रपरत्वे "अत उत्सार्वधातुके" इत्यकारस्योकारे प्रत्ययोकारस्य यणि च कृते "समवाये च" इत्यनेन सुटि "संस्कुर्वन्ति" इति सिद्धम् ।

**संचस्करिथ**—समित्युपसर्गपूर्वकात् कृधातोर्लिटि सिपि "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इत्यनेन थलि कृते "पूर्वं धातुरुपसर्गेण युज्यते ततः साधनेन" इति मते अन्तरङ्गत्वात्पूर्वं सुटि उटावितौ ततो "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वे पूर्वस्याभ्याससंज्ञायाम् "उरत्" इत्यनेन अत्वे रपरत्वे च कृते "शर्पूर्वाः खयः" इत्यनेन लोपे "कुहोश्चुः" इत्यनेन चुत्वे "ऋतश्च संयोगादेर्गुणः" इत्यनेन गुणे "कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि" इति सूत्रे "ऋतो भारद्वाजस्य" इति सूत्रे च "कृञाऽसुट इति वक्तव्यम्" तेन ससुटकात्परस्येटि 'संचस्करिथ' इति सिद्धयति ।

**अबान्धाम्**—बन्धनार्थकात् 'बन्ध' इत्यस्माद्धातोर्लुङ्लकारे तस् प्रत्यये "तस्थस्थमिपां तान्तन्तामः" इत्यनेन तामादेशे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे "च्लि लुङि" इत्यनेन च्लौ "च्लेः सिच्" इत्यनेन सिजादेशे इचावितौ ततः सकारपरकत्वमाश्रित्य प्राप्तेऽपि सम्भावे "पूर्वत्राऽसि-

द्धम्" इत्यनेन भष्भावात्पूर्वम् "झलो झलि" इत्यनेन सलोपे "प्रत्ययलोपे-प्रत्ययलक्षणम्" इत्यनेन प्रत्ययलक्षणतया सादिप्रत्ययत्वमाश्रित्यापि भष्भावो न। प्रत्ययलक्षणं प्रति सिज्लोपस्यासिद्धत्वात् "झषस्तथोर्धोऽधः" इत्यनेन धकारे "अतो हलादेर्लघोः" इत्यनेन वृद्धौ नलोपे "झलां जशोऽन्ते" इत्यनेन जश्त्वे च कृते 'अबान्धाम्' इति रूपं सिद्ध्यति।

**अभ्यष्यत**—अभिपूर्वकात् षो धातोः "धात्वादेः षः सः" इति सकारे ततो लङ्लकारे तिपि अनुबन्धलोपे "इतश्च" इत्यनेनेकारलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे सार्वधातुकसंज्ञायां शपि प्राप्ते "दिवादिभ्यः श्यन्" इत्यनेन श्यनि अनुबन्धलोपे "ओतः श्यनि" इत्यनेन धात्वोकारस्य लोपे "उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्" इत्यनेन "प्राक्सितादड्व्यवायेपि" इति नियमेन सकारस्य षत्वे यणि च कृते 'अभ्यष्यत्' इति सिद्ध्यति।

**अपारिष्टाम्**—पॄ इत्यस्माद्धातोर्लुङ्लकारे तस्प्रत्यये "तस्थस्थमिपां तान्तन्तामः" इत्यनेन तामादेशे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे "च्लि लुङि" इत्यनेन च्लौ "च्लेः सिच्" इत्यनेन सिचि अनुबन्धलोपे "आर्धधातुकस्येड्वलादेः" इत्यनेनेडागमे सकारस्य षत्वे ष्टुत्वे च कृते वृद्धौ 'अपारिष्टाम्' इति सिद्ध्यति।

**खौनीहि**—खव् धातोर्लोट्लकारे मध्यमपुरुषस्यैकवचने सिपि "सेर्ह्यपिच्च" इत्यनेन हिभावे "क्र्यादिभ्यः श्ना" इत्यनेन श्नाप्रत्यये खव्+ना+हि इति जाते ततश्शानचः परत्वात् "च्छ्वोः शूडनुनासिके च" इत्यनेन ऊठि कृते "एत्येधत्यूठ्सु" इत्यनेन वृद्धौ "ईहल्यघोः" इत्यनेन श्नाप्रत्ययाकारस्य ईत्वे 'खौनीहि' ति रूपं सिद्ध्यति।

## ३—प्रश्नोत्तराणि

**प्राथयति**—प्रख्यानार्थकात् प्रथ धातोर्णिचि णित्वात् "अत उपधायाः" इत्यनेन वृद्धौ "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायाम् धातुत्वाल्लटि तिपि अनुबन्धलोपे "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणेऽयादेशे च कृते 'प्राथयति' इति रूपं सिद्ध्यति।

नन्वस्य घटादिकत्वेन मित्वाद्ध्रस्वः स्यादित्यत आह—"नान्ये मितोऽ

हेतौ" इति ज्ञापकात् ज्ञपादिपञ्चकव्यतिरिक्तचुरादिषु मित्वनिषेधात् न ह्रस्वः । घटादिकस्य तु मित्वाद्धेतुमण्णिचि 'प्रथयति' इत्येव भवति । न च चौरादिकस्यैव मित्वार्थं घटादावनुवादः किं न स्यादिति वाच्यम्, तन्न । 'नान्ये मितोऽहेतौ' इत्यनेन निषेधादिति दिक् ।

**कंसमजीघतत्**—कंसवधमाचष्टे इत्यर्थे कंसवधशब्दात् "तत्करोति तदाचष्टे" इति णिचि अनुबन्धलोपे धातुसंज्ञायाम् धातुत्वाल्लुङि तिपि अनुबन्धलोपे 'आख्यानात् कृतस्तदाऽऽचष्टे कृल्लुक्प्रकृतिप्रत्ययापत्तिः प्रकृतिवच्च कारकमिति' कंसंहन् इति स्थिते "चङि" इत्यनेन द्वित्वे पूर्वस्याभ्याससंज्ञायां "हलादिः शेषः" इत्यनेन लोपे "कुहोश्चुः" इत्यनेन चुत्वे "हनस्तोऽचिण्णलोः" इत्यनेन तकारान्तादेशे च कृते "होहन्तेर्ञ्णिन्नेषु" इत्यनेन हकारस्य कुत्वे घकारे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे । सन्वद्भावे "सन्यतः" इत्यनेन इत्वे "दीर्घो लघोः" इत्यनेन दीर्घे "इतश्च" इतीकारलोपे 'कंसमजीघतत्' इति रूपं सिद्ध्यति ।

नतु कंसवधशब्दात् णिचि कृते अङ्गसंज्ञाधातुसंज्ञा च कंसविशिष्टस्य प्राप्ता अत्र तद्रहितस्याङ्गसंज्ञा धातुसंज्ञा च कथम् ?। ननु तर्हि कंसविशिष्टस्याङ्ग संज्ञाधातुसंज्ञयोर्को दोष इति चेदत्रोच्यते तद्विशिष्टस्याङ्गसंज्ञायां कंसवधशब्दात्पूर्वमडागमापत्तिः कंसशब्दस्य द्वित्वञ्च भवितुमर्हति । किञ्च—'धातोः स्वरूपग्रहणे तत्प्रत्ययकार्यविज्ञानम्' इति परिभाषया कुत्वतत्वे न भवतः । तन्न । प्रकृतिवच्चेति चकारो भिन्नक्रमः कारकं च । चात्कार्यम् । हेतुमण्णिचः प्रकृतेर्हन्यादेर्हें मण्णौ यादृशं कारकं धातावनन्तर्भूतं द्वितीयान्तं यादृशञ्च कार्यं कुत्वतत्वादि तदिहापीत्यर्थात् । अत्र "हनश्च वधः" इति अप्प्रत्ययो वधादेशश्चेति बोध्यम् ।

**अदुद्रुवत्**—गत्यर्थकात् द्रु इत्यस्माद्धातोर्हेतुमण्णिचि तदन्तात् "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लुङ्लकारे तिपि प्रत्यये "इतश्च" इत्यनेनेकारस्येत्संज्ञायां लोपे च कृते "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे "च्लि लुङि" इत्यनेन च्लौ "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इत्यनेन चङि कृते अनुबन्धलोपे अ-द्रु-इ-अ-त् इति स्थिते "अचोऽञ्णिति" इत्यनेन वृद्धावावादेशे च कृते "णौ चङ्युपधाया ह्रस्वः" इत्यनेनोपधाह्रस्वे "णेरनिटि" इत्यनेन णिलोपे "द्विर्वचनेऽचि" इत्यनेन स्थानिवद्भावमाश्रित्य द्रुशब्दस्य "चङि" इत्यनेन द्वित्वे-

ऽभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे द्विहल्व्यवधानेन लघुपरकत्वाभावात्सन्वद्भावाऽप्रवृत्तौ "स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा" इत्यनेनाभ्यासोकारस्य विकल्पनेत्वे 'अदिद्रवत्' इत्वाभावे—'अदुद्रवत्' इति सिद्ध्यति ।

प्रत्याययति—प्रतिपूर्वादिण्धातोर्णिचि बोधनेऽर्थे "णौ गमिरबोधने" इत्यस्याप्रवृत्तौ "इणो यण्" इत्यनेन प्राप्तमपि यणम्बाधित्वा परत्वाद्वृद्धावायादेशे आयि इति ण्यन्तात्लटि शपि णेर्गुणायादेशयोरुपसर्गेकारस्य यणि च कृते 'प्रत्याययति' इति रूपं सिद्ध्यति ।

प्राणिणत्—प्रपूर्वकात्-प्राणनार्थकात्-अन्-इत्यस्माद्धातोर्णिचि अनुबन्धलोपे "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायाम् लुङ्लकारे तिप्प्रत्यये अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे प्र+अन्+इ+त् इति जाते "च्लि लुङि" इत्यनेन च्लौ "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इत्यनेन चङि अनुबन्धलोपे "चङि" इत्यनेन 'आजादेर्द्वितीयस्य' इति सूत्रसहकारेणैकाचो द्वित्वे "णेरनिटि" इत्यनेन णिलोपे "अकः सवर्णे दीर्घः" इत्यनेन दीर्घे "उभौ साभ्यासस्य" इत्यनेन द्वयोर्नकारयोर्णत्वे 'प्राणिणत्' इति सिद्ध्यति ।

ननु 'पूर्वत्रासिद्धीयमद्विर्वचने' इति निषेधात् द्वित्वे कर्त्तव्ये णत्वस्यासिद्धत्वविरहेण परत्वात्कृते णत्वे ततः पश्चात् द्वित्वे प्राणिणदिति सिद्धतीति वाच्यम् । अत एव 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्यानित्यविज्ञानात् । तेन 'ऊर्णुनाव' इत्यत्र णत्वात् पूर्वमेव नुशब्दस्य द्वित्वे कृते अभ्यासोत्तरखण्डे णत्वाभावसिद्धिरिति दिक् ।

## ४—प्रश्नोत्तराणि ।

ऊर्णुनविषति—आच्छादनार्थक-ऊर्णुइत्यस्माद्धातोः सन्प्रत्यये "सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्" इत्यनेन विकल्पेन इटि "विभाषोर्णोः" इति सनः विकल्पेन ङित्वे ङित्पक्षे गुणाभावात् पूर्वं नु शब्दस्य द्वित्वे उत्तरखण्डे उवङि च कृते—'ऊर्णुनुविषति' इति सिद्ध्यति ङित्वाभावपक्षे तु—नु इत्यस्य द्वित्वे उत्तरखण्डस्य गुणावादेशयोः 'ऊर्णुनविषति' इति सिद्ध्यति । इडभावपक्षे तु "नन्द्राः संयोगादयः" इत्यनेन रेफं विहाय नुस् इत्यस्य द्वित्वे

"अज्झनगमां सनि" इत्यनेन दीर्घे "इको झल्" इत्यनेन सनः कित्वाद्गुणाऽभावे—'ऊर्णुनूषति' इति सिद्ध्यति ।

ननु ङित्वाभावपक्षे ऊर्णु इस इति स्थिते द्वित्वात्प्रागेव परत्वाद्गुणे अवादेशे च कृते नव्शब्दस्य द्वित्वे अभ्यासस्यात इत्वे 'ऊर्णिनविषतीति' अभ्यासे इकार एव श्रूयेत, ननु उकार इत्याशङ्क्य निराकरोति "द्विर्वचनेऽचि" इति सूत्रे स्थानिवदित्यनुवर्त्य रूपातिदेशं चाश्रित्य द्वित्वनिमित्ते अचि परे यः अजादेशः सः द्वित्वे कर्तव्ये स्थानिरूपं प्रतिपद्यते इत्येकोऽर्थः । "न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु" इत्यतो नेत्यनुवर्त्य—द्वित्वनिमित्ते अचि यः अजादेशः स न स्यात् द्वित्वे कर्त्तव्ये इत्यन्योऽर्थः । तत्र प्रथमव्याख्याने तु कृतस्यापि गुणस्य स्थानिभूतोकाररूपप्रतिपत्त्या 'नु' इत्यस्य द्वित्वे अभ्यासे उकार एव श्रूयते । द्वितीयव्याख्यानेऽपि द्वित्वात्प्राक् गुणस्य निषिद्धतया नुशब्दस्यैव द्वित्वे अभ्यासे उकार एव श्रूयते इति भावः ।

ननु ऊर्णु इस इति सन्नन्तस्य द्वित्वरूपकार्यभाक्त्वेन तदन्तर्गतस्य इस इत्यस्यापि कार्यित्वान्न द्वित्वनिमित्तत्वम्, 'न हि कार्यी निमित्ततया आश्रीयते' इत्युक्तेः । तथा च द्वित्वे कर्त्तव्ये द्वित्वनिमित्ताच्परकादेशस्य क्रियमाणो निषेधः कथमिह गुणस्य प्रसज्यत इत्याशङ्क्य निराकरोति । नच सन्नन्तस्य द्वित्वं प्रति कार्यित्वान्निमित्तता कथमिति वाच्यम्, तन्न । 'कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते' नत्वननुभवन्नपि । न चेह सन् द्वित्वमनुभवति । किन्तु 'नु' शब्द एवेति दिक् ।

सोसूचाञ्चके—सूचधातुश्चुरादावदन्तस्तस्मात् 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः' इत्यनेन यङि "अतो लोपः" इत्यकारलोपे "यस्य हलः" इत्यनेन यलोपे "सन्यङोः" इत्यनेन द्वित्वे पूर्वस्याभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे "गुणो यङ्लुकोः" इत्यनेन गुणे "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां धातुत्वाल्लिटि तस्य कृत्संज्ञायाम् "कास्प्रत्ययादाममन्त्रे लिटि" इत्यनेन अमि "आमः" इत्यनेन लिटो लुकि प्रत्ययलक्षणतया प्रातिपदिकसंज्ञायां सौ "कृन्मेजन्तः" इत्यनेन अव्ययसंज्ञायाम् "अव्ययादाप्सुपः" इति लुकि "कृञ्चानुप्रयुज्यते लिटि" इत्यनेन लिट्परक कृञोनुप्रयोगे तस्य द्वित्वे पूर्वस्याभ्याससंज्ञायाम् "उरत्" इत्यनेनात्वे रपरे "हला-

दिः शेषः" इति लोपे "कुहोश्चुः" त्यनेन चुत्वे "आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य" इत्यनेन आत्मनेपदत्वात् त प्रत्यये "लिटस्तझयोरेशिरेच्" इत्यनेन एशादेशे यणि मकारस्यानुस्वारे परसवर्णे च कृते 'सोसूचाञ्चाक्र' इति सिद्धयति।

**अपास्पाः**—स्पर्धधातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इत्यनेन यङि "यङोऽचि च" इत्यनेन यङो लुकि च कृते द्वित्वे "शर्पूर्वाः खयः" इत्यनेन पकारस्यैव शेषेऽन्यहलो लोपे च कृते "दीर्घोऽकितः" इत्यभ्यासदीर्घे पास्पर्ध इत्यस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लङ् लकारे सिप्-प्रत्ययेऽनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे अपास्पर्धस् इति जाते "झलां जशोऽन्ते" इत्यनेन जश्त्वे "दश्च" इत्यनेन दकारस्य रुत्वे कृते अपास्पर्र्स् इति जाते "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इत्यनेन सलोपे "रोरि" इत्यनेन च रेफस्य लोपे "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति सूत्रेण दीर्घे रेफस्य विसर्गे च कृते "अपास्पाः" इति रूपं सिद्धयति।

**अजङ्गमीत्**—गम् धातोर्यङि तस्य "यङोऽचि च" त्यनेन लुकि प्रत्ययलोपे प्रत्ययलक्षणतया "सन्यङोः" इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे "कुहोश्चुः" इत्यनेन चुत्वे "नुगतोऽनुनासिकान्तस्य" इत्यनेन नुकि अनुबन्धलोपे "नश्च" इत्यनेनानुस्वारे परसवर्णे च कृते जङ्गम् इत्यस्य धातुसंज्ञायां धातुत्वाल्लुङि तिपि "पुषादिद्युताद्यॢदितः परस्मैपदेषु" इति सूत्रे लृ इत्यनुबन्धनिर्देशेन 'श्तिपाशपेति' परिभाषायाः यङ्लुकयप्रवृत्तौ "च्लि लुङि" इति च्लौ "च्लेः सिच्" इत्यनेन सिचि इचावितौ "आर्धधातुकस्येड् वलादेः" इत्यनेन इडागमे "अस्तिसिचोऽपृक्ते" इत्यनेन इडागमे च कृते "इट ईटि" इति सलोपे "सिचि वृद्धिः परस्मैपदेषु" इत्यनेन प्राप्तायाः वृद्धेः "ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्" इत्यनेन दीर्घे च कृते 'अजङ्गमीत्' इति सिद्धयति।

**मामोति**—बन्धनार्थक मव इत्यस्माद्धातोर्यङि यङ्लुकि च कृते मा मव् ति इति स्थिते ईडभावपक्षे अकारवकारयोरेकस्मिन् "ज्वरत्वरस्रिव्यविमवामुपधायाश्च" इत्यनेन ऊठि तिपः पित्वेन ङित्वाभावादूकारस्य गुणे च कृते 'मामोति' इति रूपं सिद्धयति। उपधायाः वकारस्य च प्रत्येकमूठ इति पक्षे सवर्णदीर्घः। पक्षद्वयमपि "एकः पूर्वपरयोः" इति सूत्रे भाष्ये स्पष्टम्। ईडभावपक्षे तु

'मामवीति' इति रूपं सिद्धयति। अत्र पूर्वसूत्रेण ऊठ् तु न, क्वौ झलादौ अनुनासिदौ च प्रत्ययपरे तद्विधानादिति।

## ८—प्रश्नोत्तराणि

**राजीयति**—राजानमिच्छतीत्यर्थे "सुप् आत्मनः क्यच्" इत्यनेन क्यचि अनुबन्धलोपे राजन् य इति स्थिते "नः क्ये" इति नियमेन पदत्वात् "नलोपः प्रातिपदिकान्तस्य" इत्यनेन नस्य लोपे कृते "क्यचि च" इत्यनेनाकारस्य ईत्वे कृते राजीय इति धातुत्वे तिपि तिङन्तकार्य्ये—'राजीयति' इति सिद्धयति। न च ईत्वे कर्त्तव्ये नलोपस्यासिद्धत्वं शङ्क्यम् तत्र। "नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति" इति नियमादिति दिक्।

**औस्रीयत्**—उस्रामात्मान इच्छतीत्यर्थे उस्राशब्दात् "सुप आत्मनः क्यच्" इत्यनेन क्यचि अनुबन्धलोपे "अस्य च्वौ" इत्यनेन इकारादेशे ततः "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लङ्लकारे तिप् प्रत्यये "इतश्च" इत्यनेन इकारस्येत्संज्ञाया लोपे च कृते उस्रीयशब्दादङ्गात्प्रागाटि "उस्य पदान्तात्" इत्यनेन प्राप्तं पररूपम् "उस्योमाङ्क्ष्वाटः प्रतिषेधः" इति वार्तिकेन निषेधे ततः "आटश्च" इत्यनेन वृद्धौ 'औस्रीयत्' इति रूपं सिद्धयति।

**त्वापयति**—त्वामाचष्ट इत्यर्थे युष्मद्शब्दात् णिचि "प्रत्ययोत्तरपदयोश्च" इत्यनेन मपर्यन्तस्य त्वादेशे पररूपात्पूर्वं नित्यत्वाट्टिलोपे वृद्धौ "अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ" इत्यनेन पुगागमे "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लट्लकारे तिपि शपि गुणेऽयादेशे च कृते 'त्वापयति' इति रूपं सिद्धयति।

**गरयति**—गुरुमाचष्टे इति विग्रहे गुरुशब्दात् "तत्करोति तदाचष्टे" इति णिचि णाविष्ठवद्भावात् "प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघिवृन्दाः" इत्यनेन गुरुशब्दस्य गरादेशे "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लट्लकारे तिपि शपि इकारस्य गुणायादेशयोः 'गरयति' इति सिद्धयति।

**बुभाव**—भूरिव भवतीति विग्रहे भूशब्दात् "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" इत्यनेन क्विपि तस्य लोपे च कृते "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां तिपि तिपो णलि च कृते "लिटि धातोरनभ्यासस्य"

इत्यनेन द्वित्वे "पूर्वोऽभ्यासः" इत्यनेनाभ्याससंज्ञायाम् "ह्रस्वः" इत्यनेनाभ्यासह्रस्वत्वे "अभ्यासे चर्च" इत्यनेन जश्त्वे "अचोऽञ्णिति" इत्यनेन वृद्धावावादेशे च 'बुभाव' इति रूपं सिद्ध्यति।

अमालात्—मालेवाचरदिति विग्रहे मालाशब्दात् "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" इत्यनेन क्विपि तस्य लोपे च कृते "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लङ्लकारे तिपि अनुबन्धलोपे अडागमे च कृते "इतश्च" इतीकारलोपे 'अमालात्' इति रूपं सिद्ध्यति।

पुत्रीयति—आत्मनः पुत्रमिच्छतीति विग्रहे पुत्रमिति सुबन्तात् "सुप आत्मनः क्यच्" इत्यनेन क्यच्प्रत्ययेऽनुबन्धलोपे तदवयवात्सुपः "सुपो धातुप्रातिपदिकयोः" इत्यनेनामो लुकि पुत्र+य इति स्थिते "क्यचि च" इत्यनेन ईत्वे पुत्रीय इत्यस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लटि तिपि शपि अनुबन्धलोपे पररूपे 'पुत्रीयति' इति सिद्ध्यति।

---

१९२५

२ पत्रम्।

१—अपस्किरते वृषो हृष्टः, अत्र तङ्सुटोर्विधायके सूत्रे उपन्यस्य अपकिरति कुसुमं, देवदत्तो हृष्ट इत्यत्र तयोरभाव उपपाद्यः।

२—"चिण्णमुलोर्दीर्घोऽन्यतरस्याम्" इत्यनेन दीर्घं विहाय ह्रस्व एव कस्मान्न विकल्पितः। समक्तः, उदक्तमुदकं कूपात्। वृक्णः, एते प्रयोगाश्च साध्याः।

३—आखनिकः, कन्यादर्शं वरयति, स्वपोषं पुष्णाति, पादघातं हन्ति एते प्रयोगा अर्थप्रत्ययसूत्रोपन्यासेन साधनीयाः।

४—भावे तु संगतकर्तृकेऽपि पदमिदेवेत्यस्यार्थं बीजं च निरूप्य ब्रह्मोद्यम्, शतेन वर्या कन्या अनयोः साधनमर्थश्च वर्णनीयः।

५—"भविष्यति मर्यादावचनेऽवरस्मिन्" एतस्यार्थमुदाहरणन्तत्र समन्वयश्च वक्तव्यः।

## १—प्रश्नोत्तराणि

अपस्किरते वृषो हृष्टः—अपस्किरते इत्यत्र 'किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम्' इति वार्तिकेनात्मनेपदे "अपाच्चतुष्पाच्छकुनिष्वा-

लेखने" इत्यनेन अपात्किरतेः सुटि कृते अनुबन्धलोपे 'अपस्किरते वृषो हृष्टः' इति सिद्ध्यति । 'अपकिरति' कुसुममित्यत्र च हर्षादिष्वेवात्मनेपदविधानात् तस्य चात्राभावेन नात्मनेपदम् । नापि सुट् । तदाह मूले–इह तङ्सुटौ नेति।

ननु 'अपस्किरते वृषो हृष्टः' इत्याद्युदाहरणत्रये यदि हर्षजीविकाकुलायकरणान्येव विवक्षितानि नत्वालेखनमपि तदा तङेव स्यान्नतु सुट् इत्यत आह–हर्षादिमात्रविवक्षायां यद्यपि तङ् प्राप्तस्तथापि सुडभावे नेष्यते इत्याहुः । किरतेर्हर्षजीविकेत्यात्मनेपदविधौ ससुट्कानामेव भाष्ये उदाहरणादिति दिक् ।

## २—प्रश्नोत्तराणि

"चिण्णमुलोर्दीर्घोऽन्यतरस्याम्" इति । चिण्परे णमुल्परे च णौ मितामुपधायाः दीर्घो वा स्यादिति तदर्थः ।

ननु 'चिण्णमुलोरन्यतरस्याम्' इत्येतावतैव "मितां ह्रस्वः" इति पूर्वसूत्रादनुवृत्तस्य ह्रस्वस्य विकल्पे दीर्घविकल्पस्य सिद्धेरिह सूत्रे दीर्घग्रहणं व्यर्थमित्याशंक्य समाधत्ते—'प्रकृतौ मितां ह्रस्व एव तु न विकल्पितः । कुत इत्यत आह—शम्धातोर्ण्यन्ताण्णौ पूर्वणेर्लोपे लुटि तासि ण्यन्तस्याजन्तत्वाच्चिण्वदिटि तस्याभीयत्वेनासिद्धतया अनिटीति निषेधाभावाण्णिलोपे दीर्घविकल्पे सति 'शमिता' 'शामितेति' रूपद्वयमिष्यते । ह्रस्वविकल्पस्य विधौ तु ह्रस्वविकल्पो न स्यात् । प्रथमणिलोपस्य "अचः परस्मिन् पूर्वविधौ" इति स्थानिवद्भावेन व्यवहिततया चिण्परकणिपरकत्वाभावादित्यर्थः । दीर्घविकल्पविधौ तु न दोष इत्याह—दीर्घविधाविति अयम्भावः–दीर्घविकल्पविधौ हि प्रथमस्य णिचो लोपो न स्थानिवत् दीर्घविधौ स्थानिवत्त्वनिषेधात् । अतोऽत्र दीर्घविकल्पः सिद्ध्यति । ह्रस्वविधौ तु प्रथमणिलोपस्य स्थानिवत्वं दुर्वारम् । तत्र स्थानिवत्वनिषेधाऽभावादिति । 'न पदान्त' सूत्रस्थ भाष्ये तु 'पूर्वत्रासिद्धीये नस्थानिवत्' इत्येव सिद्धत्वात् द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः प्रत्याख्याताः ।

ननु ण्यन्ताण्णौ "चिण्णमुलो दीर्घोन्यतरस्याम्" इति दीर्घे कर्त्तव्ये प्रथमणिलोपस्य स्थानिवत्वं दुर्वारम् । "चिण्णमुलोः इति दीर्घस्य पूर्वत्रासिद्धीयत्वाभावात् । ततश्च—प्रथमणिचा व्यवहितत्वात् दीर्घानापत्तिः । एवञ्च तत्र दीर्घे कर्त्तव्ये स्थानिवत्वनिवारणाय दीर्घग्रहणस्यावश्यकत्वात्कथं दीर्घग्रहणप्रत्याख्यानमित्यत आह णाविति–चिण्णमुलोरितिदीर्घविधौ चिण्परे णमुलि च परे णौ

इत्यत्र णाविति णित्वजातिप्रधानो निर्देशः। चिण्णमु्परकणित्वजातौ परत इति लभ्यते। णित्वजातिश्च णिद्वयेऽस्तीति प्रथमणेः स्थानिवत्वेऽपि दीर्घो निर्बाध इति "न पादान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु" सूत्रे दीर्घग्रहणप्रत्याख्यानभाष्यस्याशय इत्यर्थः।

**समक्नः**—सम्पूर्वादञ्चतेः क्तप्रत्यये "आर्द्धधातुकस्येड्वलादेः" इति सूत्रेण प्राप्तस्येटः "उदितो वा" इति क्त्वायां वेट्त्वात् "यस्य विभाषा" इति सूत्रेण इट्निषेधे "अनिदितां हल उपधायाः क्ङिति"। इत्यनेन नलोपे "अञ्चोऽनपादाने" इत्यनेन निष्ठातकारस्य नत्वे चकारस्य "चोः कुः" इति सूत्रेण कुत्वे च कृते प्रातिपदिकत्वात्सौ रुत्वविसर्गे 'समक्नः' ति सिद्ध्यति।

**उदक्नम्**। उदपूर्वकादञ्चतेः क्तप्रत्ययेऽनुबन्धलोपे ततः "आर्धधातुकस्येड्वलादेः" इत्यनेन प्राप्तस्येटो "यस्य विभाषा" इत्यनेन निषेधे "अनिदितां हल उपाधायाः क्ङिति" इति नलोपे "अञ्चोऽनपादाने" इत्यनेनानपादान एव निष्ठातकारस्य नत्वविधानादत्र च कूपादित्यपादानसमभिव्याहारसत्वान्नत्वं नेति दिक्।

**वृक्णः**—छेदनार्थक–ऊकारेत्संज्ञक व्रश्चधातोः "क्तक्तवतू निष्ठा" इत्यनेन क्त प्रत्ययेऽनुबन्धलोपे "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इत्यनेन सम्प्रसारणे ऊदित्वेन वेट्कत्वादिह प्राप्तस्येटो "यस्य विभाषा" इत्यनेन निषेधे "चोः कुः" इत्यनेन कुत्वे "आदितश्च" इत्यनेन निष्ठातकारस्य नत्वे, तस्यासिद्धत्वेन झल्परत्वात् "स्कोः संयोगाद्योरन्ते च" इत्यनेन सलोपे णत्वे च कृते 'वृक्णः' इति रूपं सिद्धयति। न च तत्र नत्वस्यासिद्धत्वेन झलपरत्वात् "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशांषः" इति सूत्रेण षत्वमपि स्यादित्यत आह "निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वाच्यः" इति वार्तिकेन षत्वे कर्त्तव्ये नत्वस्यासिद्धत्वाऽभावेन झल्परकत्वाभावान्न षत्वमित्यर्थं इति शम्।

## ३—प्रश्नोत्तराणि

**आखनिकः**—आङेत्युपसर्गपूर्वात् खन्धातोः 'खनेर्डडरेकेकबका वाच्याः' इति वार्तिकेन इक्प्रत्यये कृदन्तत्वात्प्रातिपदिकसंज्ञायाम् सौ विभक्तौ रुत्वे विसर्गे च कृते 'आखनिकः' इति सिद्ध्यति।

**कन्यादर्शं वरयति**—इत्यत्र कर्मण्युपपदे तदर्थस्य धात्वर्थम्प्रति कर्मभूतस्य

साकल्ये गम्ये दृशिविदिभ्यां णमुल् स्यादित्यर्थकेन "कर्मणि दृशिविदोः साकल्ये" इति सूत्रेण णमुल् प्रत्यये अनुबन्धलोपे 'कन्यादर्शं वरयति' इति सिद्ध्यति ।

**स्वपोषं पुष्णाति**—स्वेन पुष्णातीत्यर्थे स्वोपपदात् पुष्धातोः "स्वे पुषः" इत्यनेन णमुल्प्रत्ययेऽनुबन्धलोपे "पुगन्तलघूपधस्य च" इत्यनेन गुणे 'स्वपोषं पुष्णाति' इति सिद्ध्यति ।

**पादघातं हन्ति**—पादेन हन्तीत्यर्थे "करणे हनः" इति सूत्रेण णमुल् प्रत्ययेऽनुबन्धलोपे 'पादघातं हन्ति' इति सिद्ध्यति ।

## ४—प्रश्नोत्तराणि

'भावे तु संगतकर्तृकेऽपि ण्यदेवेति' न जीर्यतीति विग्रहे संगतं चेद्विशेष्यमित्यर्थे "अजर्यं संगतम्" इति सूत्रेण नञ्पूर्वाज्जीर्यतेः कर्त्तरि यत्प्रत्यये कृते 'अजर्यम्' इति सिद्ध्यति । अत एव 'तेन संगतमार्येण रामाजर्यं कुरु द्रुतम्' इति भट्टिप्रयोगोऽपि सङ्गच्छते ।

ननु 'मृगैरजर्यं जरसोपदिष्टमदेहबन्धाय पुनर्बबन्ध' इत्यत्र सङ्गतशब्दाऽभावात्कथं यदित्यत आह 'मृगैरजर्यम्' इति कालिदासप्रयोगे तु सङ्गतमिति विशेष्यमध्याहार्यम् । भावे तु सङ्गतकर्तृकेऽपि ण्यदेव । तेन अजार्यम् संगतेनेति सिद्ध्यति ।

**ब्रह्मोद्यम्**—ब्रह्म वेदः तस्य वदनमित्यर्थे "वदः सुपि क्यप् च"इति सूत्रेण वदेर्भावे क्यपि अनुबन्धलोपे "वचिस्वपियजादीनां किति" इत्यनेन सम्प्रसारणे वकारस्योकारे गुणे च कृते प्रातिपदिकत्वात्सौ सोरमादेशे "ब्रह्मोद्यम्"—इति सिद्धयति ।

**शतेन वर्या कन्या**—पुरुषशतेन परिग्रहीतुमर्हेत्यर्थे "अवद्यपण्यवर्यागर्ह्यपणितव्यानिरोधेषु" इति सूत्रेण क्र्यादिकात् वृङ् इत्यस्माद्धातोर्यत्प्रत्यये स्त्रीत्वविवक्षायां टापि—'वर्या' कन्येति सिद्धयति । क्यपि तुकि तु—'वृत्या' इति रूपं सिद्धयति ।

## ५—प्रश्नोत्तराणि

"भविष्यति मर्यादावचनेऽवरस्मिन्निति" भविष्यति काले मर्यादोक्तावरस्मिन्प्रविभागेऽनद्यतनवन्न भवतीति सूत्रार्थः । तत्र—योऽयमध्वागन्तव्यः आपाट-

लिपुत्रात्तस्य यदवरं कौशाम्ब्यास्तत्र सक्तून्पास्याम इति । कस्मिंश्चिज्जनपदविशेषे वसतः पाटलिपुत्राख्यं नगरविशेषं जिगमिषोरिदं वाक्यम् । मध्येमार्गं कौशाम्बी नाम काचिन्नगरीति स्थितिः । तत्र आपाटलिपुत्रात् योऽयं गन्तव्योऽध्वा तस्य अध्वनः मध्यवर्तिन्याः कौशाम्ब्याः यदवरं पूर्वप्रदेशः तत्र सक्तून् श्वः प्रभृति पास्याम इति योजना । अत्र कौशाम्ब्या इति मर्यादा गम्यते । अवरमित्यनेन अवरत्वं गम्यते । अत्र भविष्यत्यनद्यतने लुट् न, किन्तु लृडेवेति दिक् ।

---

## १९२६

### १ पत्रम् ।

१—अविभरुः, अजरत्, अरुणत्, अकृत, मृदान एते कथं सिद्ध्यन्ति ।

२—'आः पुयणज्यपरे:' इति सूत्रे पययोरिति वक्तव्ये वर्णप्रत्याहारजग्रहो लिङ्गमित्यादि फक्किकोपपादनीया ।

३—अपीप्यत, अतिष्ठिपत्, विलालयति, भीषयते, रोपयति, दूषयति, एषु विशेषसूत्राणि कानि ।

४—ष्ठिवुधातोरूर्णुधातोश्च सनिप्रत्यये लटि प्रथमपुरुषैकवचने कति रूपाणि कीदृशानि च तानि भवन्ति ।

५—अर्थवन्तमाचष्ट इति, उत्क्रमाचष्टेति, याचितारमाख्यदिति च विग्रहे णिचि लटि लङि लुङि च प्रथमपुरुषकवचने कीदृग् रूपाणि भवन्ति ।

## १—प्रश्नोत्तराणि

अबिभरुः—धारणपोषणार्थक भृ इत्यस्माद्धातोर्लङ्लकारे झिप्रत्यये "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसंज्ञायाम् "कर्त्तरि शप्" इत्यनेन शपि "जुहोत्यादिभ्यः श्लुः" इत्यनेन श्लौ "श्लौ" इत्यनेन द्वित्वे "पूर्वोऽभ्यासः" इत्यनेनाभ्याससंज्ञायाम् अत्वे रपरत्वे रेफस्य लोपे "अभ्यासे चर्च" इत्यनेन जश्त्वे "भृञामित्" इत्यनेनाभ्यासस्येत्वे

अबि + मृ + झि इति स्थिते अभ्यस्तत्वात् "**सिजभ्यस्तविदिभ्यश्च**" इत्यनेन झेर्जुसि "**जुसि च**" इत्यनेन गुणे च कृते सस्य रुत्वे विसर्गे च '**अबिभरुः**' इति सिद्धयति ।

**अजरत**—दैवादिकात् षकारेत्संज्ञक जॄ इत्यस्माद्धातोर्लुङ्लकारे तिप्प्रत्यये "**लुङ्लङ्लृङ्क्ष्वडुदात्तः**" इत्यनेनाडागमे "**च्लि लुङि**" इत्यनेन च्लौ "**जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च**" इत्यनेन विकल्पेनाङि अनुबन्धलोपे "**ऋदृशोऽङि गुणः**" इत्यनेन गुणे च कृते '**अजरत्**' इति सिद्धयति ।

अङ्भावे तु "**च्लेः सिच्**" इत्यनेन सिजादेशे इचावितौ "**आर्द्धधातुकस्येड्वलादेः**" इत्यनेनेडागमे "**अस्तिसिचोऽपृक्ते**" इत्यनेन ईडागमे च कृते "**इट ईटि**" इत्यनेन सलोपे दीर्घे वृद्धौ च कृते '**अजारीत्**' इति रूपं सिद्धयति ।

**अरुणत्**—आवरणार्थक रुध् इत्यस्माद्धातोर्लङ् लकारे सिपि प्रत्यये "**लुङ्लङ्लृङ्क्ष्वडुदात्तः**" इत्यनेन अडागमे सार्वधातुकसंज्ञायां शपि प्राप्ते तं प्रबाध्य '**रुधादिभ्यः श्नम्**' इत्यनेन श्नमि णत्वे च कृते अरुणधस् इति जाते "**हल्ङ्याभ्यो दीर्घात्सुतिस्यपृक्तं हल्**" इत्यनेन सलोपे "**दश्च**" इत्यनेन विकल्पेन रुत्वे तदभावपक्षे धकारस्य चर्त्वे च कृते '**अरुणत्**' इति सिद्धयति । रुत्वपक्षे विसर्गे कृते '**अरुणः**' इति रूपं सिद्धयति ।

**अकृत**—कृधातोर्लुङ्लकारे आत्मनेपदे तप्रत्यये "**लुङ्लङ्लृङ्क्ष्वडुदात्तः**" इत्यनेनाडागमे "**च्लि लुङि**" इति च्लौ "**च्लेः सिच्**" इत्यनेन सिजादेशे इचावितौ अ + कृ + + त इति जाते "**तनादिभ्यस्तथासोः**" इत्यनेन वैकल्पिकेन सिचो लुकि तदभावपक्षे च "**ह्रस्वादङ्गात्**" इत्यनेन सिचो लुकि '**अकृत**' इति रूपं सिद्धयति ।

**मृदान**—क्षोदार्थक मृदइत्यस्माद्धातोर्लोट्लकारे सिपि प्रत्ययेऽनुबन्धलोपे "**सेर्ह्यपिच्च**" इत्यनेन सेर्हिभावे सार्वधातुकसंज्ञायां शपि प्राप्ते "**क्र्यादिभ्यः श्ना**" इत्यनेन श्नाप्रत्यये अनुबन्धलोपे "**हलः श्नः शानज्झौ**" इत्यनेन शानजादेशेऽनुबन्धलोपे "**अतो हेः**" इत्यनेन हेर्लुकि च कृते '**मृदान**' इति रूपं सिद्धयति ।

## २—प्रश्नोत्तराणि

"**आः पुयण्ज्यपरे**" इति ननु ऊनधातोर्णिचि तदन्ताल्लुङि तिपि अनुबन्ध-

लोपे च कृते "च्लि लुङि" इति च्लौ तत्स्थाने चङि आडागमे आ+ऊन+इ+अदिति स्थितौ णिचो द्वित्वनिमित्तत्वाऽभावेन "द्विर्वचनेऽचि" इत्यस्याऽप्राप्त्या द्वित्वात्परत्वादन्तरङ्गत्वाच्च कृतेऽल्लोपे निशस्य द्वित्वे 'औननत्' इतीष्टरूपानापत्तिरित्यत आह—ओः पुयणजीति। अयम्भावः—बिभावयिषति, अबीभवदित्यादावन्तरङ्गत्वाद् वृद्धावादेशे "सन्यतः" इत्येव सिद्धं पूङ्यौतेश्च सनि "स्मिपूङ्रञ्ज्वशां सनि" "सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्" इति सूत्रेणेटि द्वित्वनिमित्तसत्त्वात्। "द्विर्वचनेऽचि" इति सूत्राप्रवृत्त्या पूर्वं गुणाभावादभ्यासे ऊकारसद्भावेऽपि 'पिपविषते' 'यियविषति' इत्यत्रेत्वार्थं पययोरित्येव वाच्यम्। न च पिपविषत इत्यादौ गुणावादेशयोः "अचः परस्मिन्पूर्वविधौ" इति स्थानिवद्भावेनाऽवर्णपरयकारादिपरत्वाभावादित्वं न स्यादिति वाच्यम्। पययोरित्येतत्सूत्रारम्भसामर्थ्येन स्थानिवद्भावाऽप्रवृत्तेः। एवञ्च अर्थी भूयत्र णादिग्रहणं णिचो द्वित्वनिमित्तत्वाभावे तन्निमित्तकाऽजादेशस्य द्वित्वे कर्त्तव्ये निषेधं ज्ञापयति, ज्ञापनफलं तु—तुतावयिषति. अतूतवत्, ऊर्णनावयिषति, और्णुनवत्, पुस्फारयिषति, अपुस्फुरदिति नच 'ओः पुयणज्यी'ति सूत्रे णिचोत्त्वसत्त्वात्कथं णिच्यजादेशो नेत्यर्थलाभ इति वाच्यम्। द्वित्वनिमित्तेऽचि नाऽजादेशः स्थानिवदित्यर्थक "द्विर्वचनेऽचि" इत्यस्य 'येन नाव्यवधानम् तेन व्यवहितेऽपि' इति न्यायेन एकवर्णव्यवधाने प्रवृत्त्या तल्लाभात् तेनाऽपूर्वनिषेधाज्ञापनात्। अत एव दिवनीयिषतीत्यादौ नाऽतिप्रसक्तिः। तथा च—द्वित्वनिमित्तेऽजादौ प्रत्यये एकप्रत्ययातिरिक्ताव्यवहिते परे तदन्यतरनिमित्तकादेशो नेति द्विर्वचनेऽचीत्यस्यार्थः। फलित इति भावः।

ननु—उक्तरीत्योक्तज्ञापनेन 'अचिकीर्त्तत्' इत्यत्र पूर्वं "उपधायाश्च" इतीत्वमपि न स्यादत आह—यत्र द्विरुक्ताविति ज्ञापकसाजात्याद्यत्र द्वित्वेऽभ्यासोत्तरखण्डस्याद्योऽच् प्रक्रियायां परिनिष्ठितरूपे वाऽवर्णो लभ्यते तत्रैवोक्तनिषेधादुक्तस्थले प्रक्रियायां परिनिष्ठितरूपे वाऽभ्यासोत्तरखण्डस्याद्यचोऽवर्णरूपत्वाऽभावान्नापत्तिरित्यलम्।

## ३—प्रश्नोत्तराणि

**अपीप्यत्**—पा धातोः "हेतुमति च" इत्यनेन णिच् प्रत्ययेऽनुबन्धलोपे "शाच्छासाह्वाव्यावेपां युक्" इत्यनेन युगागमेऽनुबन्धलोपे "सनाद्यन्ता

धातवः" इत्यनेन धातुसंज्ञायां लुङि तिपि "च्लि लुङि" इति च्लौ "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इत्यनेन च्लेश्चङादेशेऽनुबन्धलोपे आर्द्धधातुकत्वे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे "इतश्च" इतीकारस्यलोपे अपायि अत् इति स्थिते द्वित्वे "लोपः पिबतेरीच्चाभ्यासस्य" इत्यनेनोपधालोपे 'नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे' इत्यत्रानभ्यासविकार इति निषेधादभ्यासान्त्यपरत्वे "णेरनिटि" इत्यनेन णिलोपे च कृते 'अपीप्यत्' इति सिद्ध्यति ।

अतिष्ठिपत्—गतिनिवृतावित्यर्थकात् ष्ठा इत्यस्माद्धातोः "धात्वादेः षः सः" इत्यनेन सकारे 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति परिभाषया ष्टुत्वस्यापि निवृत्तौ स्था इत्यस्माद्धातोः "हेतुमति च" इत्यनेन णिच्यनुबन्धलोपे "अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ" इत्यनेन पुगागमे स्थापीत्यस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लुङि तिप्यनुबन्धलोपे अडागमे च कृते "च्लि लुङि" इत्यनेन च्लौ "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इत्यनेन चङि "णौ चङ्युपधाया ह्रस्वः" इत्यनेन ह्रस्वे "णेरनिटि" इत्यनेन णिलोपे "चङि" इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् "शर्पूर्वाः खयः" इति सूत्रेणाभ्यासाऽवयवसकारपकारयोर्लोपे 'अभ्यासे चर्च' इत्यनेन चर्त्वे "सन्वल्लघुनि चङ्परेऽनग्लोपे" इत्यनेन सन्वद्भावे "सन्यतः" इत्यनेनेत्वे षत्वे ष्टुत्वे च कृते अतिष्ठप्+अ+त इति जाते "तिष्ठतेरित्" इत्यनेनोपधाया इदादेशे संयोगे च 'अतिष्ठिपत्' इति सिद्ध्यति ।

विलालयति—विपूर्वकादादादिकात् "विभाषा लीयतेः" इत्यनेन कृतात्वस्य लीयतेर्लातेर्वा णिचि कृतेऽनुबन्धलोपे "लीलोर्नुग्लुकावन्यतरस्यां स्नेहनिपातने" इत्यनेन लुगागमे धातुसंज्ञायां लटि तिपि अनुबन्धलोपे गुणेऽयादेशे 'विलालयति' इति सिद्ध्यति । नुगागमे 'विलीनयति' इति । द्वयोरप्यभावे युगागमे 'विलाययति' इति । पुगि कृते तु 'विलापयति' इति च सिद्ध्यति ।

भीषयते—भयार्थक-ईकारान्तात् 'भी' इत्यस्माद्धातोर्णिचि "बिभेतेर्हेतुभये" इति विहितात्वस्य वैकल्पिकत्वात् तदभावे "भीस्म्योर्हेतुभये" इत्यनेनात्मनेपदे "भियो हेतुभये षुक्" इत्यनेन षुगागमे अनुबन्धलोपे "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लटि तप्रत्यये गुणेऽयादेशे च कृते "टित आत्मनेपदानां टेरे" इत्यनेन-एत्वे 'भीषयते' इति रूपं सिद्ध्यति ।

रोपयति—रुह् इत्यस्माद्धातोर्णिचि अनुबन्धलोपे धातुसंज्ञायां लटि तिपि "रुहः पोऽन्यतरस्याम्" इत्यनेन हकारस्य पकारे "पुगन्तलघूपधस्य च" इत्यनेन गुणे रोपि ति इति स्थिते शपि गुणायादेशयोः 'रोपयति' इति सिद्ध्यति ।

दूषयति—दुषधातोर्णिचि अनुबन्धलोपे "दोषो णौ" इत्यनेनोपधाया ऊदादेशे धातुसंज्ञायां लटि तिपि शपि णेर्गुणायादेशयोः 'दूषयति' इति रूपं सिद्ध्यति ।

## ४—प्रश्नोत्तराणि

'ष्ठिव्' धातोर्सनि "सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्" इत्यनेन इटः वैकल्पिकत्वात् 'तेष्ठिविषति' 'तुष्ठ्यूषति' 'टेष्ठिविषति' 'टुष्ठ्यूषति' रूपचतुष्टयम् । तत्रायं विवेकः—अस्मिन् धातौ द्वितीयस्थकारष्ठकारो वेति वृत्तिः । थकारपक्षेऽभ्यासे तकारः । ठपक्षे चाभ्यासे ठकारः । इडभावपक्षे च—वकारस्योठ् इति ।

'ऊर्णु' धातोर्सनि 'ऊर्णुनूषति' 'ऊर्णुनुविषति' 'ऊर्णुनविषति' इत्येवं रूपत्रयं सम्पद्यते । तत्र—आच्छादनार्थक 'ऊर्णु' इत्यस्माद्धातोः 'सनि' "सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्" इति सूत्रेण इटः वैकल्पिकत्वेन तदभावे "नन्द्राः संयोगादयः" इति सूत्रेण रेफं वर्जयित्वा नुस् इत्यस्य द्वित्वे "अज्झनगमां सनि" इत्यनेनने दीर्घे "इको झल्" इत्यनेन सनः कित्वाद्गुणाभावे 'ऊर्णुनूषति' इति रूपं सिद्ध्यति । इट्पक्षे-"विभाषोर्णोः" इति ङित्वस्य वैकल्पिकत्वात् । तस्मिन् पक्षे गुणावादेशयोरभावेन—'ऊर्णुनुविषति' इति रूपं सिद्ध्यति । 'ऊर्णुनविषति' इति ७ पृष्ठे द्रष्टव्यम् ।

## ५—प्रश्नोत्तराणि

अर्थवन्तमाचष्टे—इति विग्रहे 'अर्थवच्छब्दात्' 'तत्करोति तदाचष्टे' इत्यनेन णिचि प्रातिपदिकस्येत्यादिनेष्ठवद्भावेन विन्मतोर्लुक् इति मतुप्परे लुकि 'अर्थवेदयोरप्यापुग्वक्तव्यः' इति वार्त्तिकेनापुगि धातुसंज्ञायां लटि तिपि गुणेऽयादेशे च कृते 'अर्थापयति' इति रूपं सिद्ध्यति ।

उत्कमाचष्ट-इति विग्रहे-उत्कशब्दात् 'तत्करोति तदाचष्टे' इत्यनेन णिचि "अचो ञ्णिति" इत्यनेन वृद्धौ "अर्तिह्रीब्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ"

इत्यनेन पुकि कृते "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायाम् धातुत्वात्लङि तिपि शपि णेर्गुणायादेशयोरुपसर्गसमानाकार इत्यादिना उपसर्गस्य पृथक्करणे अटि "इतश्च" इतीकारलोपे 'उदकापत्' इति रूपं सि यति ।

याचितारमाख्यदिति विग्रहे—याचितृशब्दात् "तत्करोति तदाचष्टे" इत्यनेन णिचि णकारचकारयोरित्संज्ञायां लोपे च कृते इष्ठवद्भावे "तुरिष्ठेमेयःसु" इति सूत्रेण तृशब्दस्य लोपे 'निमित्तापाये नैमित्तकस्याप्यपायः' इति परिभाषया इटो निवृत्तौ याचीति स्थिते तता "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लुङि तस्य तिपि अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे "च्लि लुङि" इत्यनेन च्लौ "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्"इत्यनेन च्लेश्चङि "णौ चङ्युपधाया ह्रस्वः" इत्यनेनोपधाह्रस्वे "णेरनिटि" इत्यनेन णिलोपे "चङि" इत्यनेन द्वित्वे "सन्वल्लघुनि चङ्परेऽनग्लोपे" इत्यनेन सन्वद्भावे "सन्यतः" इत्यनेन इत्वे "दीर्घो लघोः" इत्यनेनाभ्यासदीर्घे च कृते 'अयीयचत्' इति रूपं सिद्ध्यति । ९

---

१९२६

२ पत्रम् ।

१—माणवकमनुक्रोडति, अपस्किरते वृषो हृष्टः, सङ्गसीद, शास्त्रे नयते, शास्त्रे वदते, सर्पिषोऽनुजिज्ञासते, पाययते, वासयते एषु तत्तद्विशेषशास्त्राणि तादृशकार्याणि च प्रदर्शनीयानि ।

२—चिण्णमुलोर्दीर्घोऽन्यतरस्यामिति सूत्रेण प्रकृतह्रस्व एव विधातव्ये दीर्घविधानस्य किं फलम् ।

३—देयम् , अवश्यम् , खेयम् , पुष्यः, भव्यः, गङ्गाधरः, द्विपः, कथमेते निष्पन्नाः ।

४—उष्णभोजी, संस्कारजः, वृक्कगः, सम्पर्की, सचित्रम् , शक्नोति भोक्तुम् , रङ्गः, एषु शास्त्रकार्यविग्रहविशेषाः प्रदर्श्याः ।

५—छित्वा, प्रधाय, स्मारं स्मारम् , स्वादुङ्कारम् , गोपार्षं पुष्णाति, व्यहतर्षम्, उच्चैःकृत्य, कथमेषां सिद्धिः ।

# १—प्रश्नोत्तराणि ।

माणवकमनुक्रीड़ति—अनु सम् परिआङ् एभ्यः परस्मात् क्रीडधातोः "क्रीडोऽनुसम्परिभ्यश्च" इत्यनेन आत्मनेपदे प्राप्ते "तृतीयार्थे" इत्यनेन अनोः कर्मप्रवचनीयसंज्ञाविधानात् 'अनोः कर्मप्रवचनीयान्न' इति वार्तिकेनात्मनेपदनिषेधे परस्मैपदे—'माणवकमनुक्रीडति' इति सिद्धयति । तेन सहेति तदर्थः ।

'अपस्किरते वृषो हृष्टः'—११ पृष्ठे द्रष्टव्यम् ।

सङ्गसीष्ट—समित्युपसर्गपूर्वकात् गम्धातोर्लिङ्लकारे "समो गम्यृच्छिभ्याम्" इति सूत्रेणात्मनेपदे तप्रत्यये "वा गमः" इत्यनेन कित्संज्ञायाम् "लिङः सीयुट्" इत्यनेन सीयुडागमेऽनुबन्धलोपे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे "सुट् तिथोः" इत्यनेन सुडागमे "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनेन मलोपे षत्वे ष्टुत्वे च कृते 'सङ्गसीष्ट' इति सिद्धयति । कित्संज्ञाभावपक्षे मलोपाभावेऽनुस्वारे 'सङ्गंसीष्ट' इति च सिद्धयति ।

शास्त्रे नयते—इत्यत्र "सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः" इति सूत्रेण सम्मानने णीञ्धातोरात्मनेपदविधानेन 'शास्त्रे नयते' इति सिद्धयति । 'शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयतीति तदर्थः । तेन च शिष्यसम्माननमिति फलितम् ।

शास्त्रे वदते—इत्यत्र "भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः" इत्यनेन वदधातोरात्मनेपदे–'शास्त्रे वदते' इति सिद्धयति । भासमानो ब्रवीतीति हि तदर्थः । नवनवयुक्तीरुल्लिखतीतियावत् । शास्त्रे वदते इति विषयसप्तमी । व्यवहरतीत्यर्थः । व्यवहारश्च ज्ञानं विना न सम्भवतीति ज्ञानमार्थिकम् । ज्ञात्वा व्यवहरतीति फलितम् ।

सर्पिषोऽनुजिज्ञासते—ननु "ज्ञाश्रुस्मृदृशां सनः" इत्यनेन आत्मनेपदविधानात् तस्य च "नानोर्ज्ञः" इत्यनेन निषेधात् परस्मैपदविधानेन "पुत्रमनुजिज्ञासति" इति यथा सिद्धयति । तथैव–सर्पिषा प्रवर्तितुमिच्छतीत्यर्थे सर्पिषोऽनुजिज्ञासते, इत्यत्रापि "अपह्नवे ज्ञः" "अकर्मकाच्च" इत्यात्मनेपदस्याप्यनेन निषेधे सति सन्नन्तात् परस्मैपदमेव स्यादित्यत आह—अनन्तरस्य विधिर्वाभ-

चति प्रतिषेधो वा इति परिभाषया पूर्वसूत्रस्यैवायं निषेधः । एवञ्च-'सर्पिषोऽनुजिज्ञासते' इत्यत्रात्मनेपदं निर्बाधमेवेति ।

ननु 'अकर्मकाच्च' इति ज्ञाधातोरात्मनेपदे सन्नन्तात् कथमात्मनेपदलाभ इत्यत आह—केवलात् सन्विहीनात् ज्ञाधातोरात्मनेपदविधानात् सन्नन्तादपि तस्मात् "पूर्ववत्सनः" इत्यात्मनेपदे 'सर्पिषोऽनुजिज्ञासते' इति सिद्धयति ।

पाययते—णिजन्तात् पा इत्यस्माद्धातोः "अणावकर्मकाच्चित्तवत्कर्तृकात्" इत्यनेन परस्मैपदे तस्य च "न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः" इत्यनेन निषेधे आत्मनेपदे कृते "शाच्छासाह्वाव्यावेपां युक्" इत्यनेन पुकोऽपवादे युगागमेऽनुबन्धलोपे 'पाययते' इति सिद्धयति ।

वासयते—णिजन्तात् 'वस' इत्यस्माद्धातोः "अणावकर्मकाच्चित्तवत्कर्तृकात्" इत्यनेन परस्मैपदे तस्य च "न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः" इत्यनेन निषेधे "णिचश्च" इत्यात्मनेपदे 'वासयते' इति सिद्धयति । 'वस निवासे' इति भौवादिकस्यैवात्र ग्रहणम् । नतु 'वस् आच्छादने' इत्यादादिकस्यापि । तस्य च सकर्मकत्वादेवाप्राप्तेः, लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमित्युक्तेश्चेति ।

## २—प्रश्नोत्तराणि

"चिण्णमुलोर्दीर्घोऽन्यतरस्यामिति—१२ पृष्ठे प्रष्टव्यम् ।

## ३—प्रश्नोत्तराणि

देयम्—दाधातोः "अचो यत्" इत्यनेन यत्प्रत्यये "ईद्यति" इत्यनेनाकारस्य ईकारे "आद्गुणः" इत्यनेन गुणे कृदन्तत्वात्प्रातिपदिकसञ्ज्ञायाम् सौ विभक्तौ सोरमादेशे 'देयम्' इति सिद्धयति ।

अवद्यम्—नञुपपदवदधातोर्गर्ह्यायामेव निपातनात् "अवद्यपण्यवर्यागर्ह्यपणितव्याऽनिरोधेषु" इत्यनेन यत्प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे 'अवद्यम्' इति सिद्धयति ।

खेयम्—इत्यत्र खन् धातोः "ई च खनः" इत्यनेन क्यपि प्रत्ययेऽनुबन्धलोपे प्रकृते ईकारश्चान्तादेशे "आद्गुणः" इत्यनेन गुणे प्रातिपदिकत्वात्सौ सोरमादेशे 'खेयम्' इति सिद्धयति ।

पुष्यः—पुष्यन्त्यस्मिन्नर्था इति विग्रहे—"पुष्यसिध्यौ नक्षत्रे" इत्यनेनाधिकरणरूपेऽर्थे निपातनात् क्यप्प्रत्यये अनुबन्धलोपे प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च कृते 'पुष्यः' इति सिद्धयति ।

भव्यः—भवतीति विग्रहे "भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा" इत्यनेन निपातनात् कर्त्तरि "अचो यत्" इति सूत्रसहकारेण यत्प्रत्ययेऽनुबन्धलोपे "सार्वधातुकार्द्धधातुकयोः" इत्यनेन गुणेऽवादेशे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'भव्यः' इति सिद्धयति ।

गङ्गाधरः—धरतीति विग्रहे पचाद्यचि 'धरः' इति रूपम् । गङ्गाया धर इति विग्रहे कर्मणि षष्ठ्या समासे विभक्तेर्लुकि प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च 'गङ्गाधरः' इति रूपम् सिद्धयति ।

द्विपः—द्वाभ्यां मुखशुण्डाभ्यां पिबतीति विग्रहे सुप्युपपदे आदन्तात् पाधातोः "सुपि स्थः" इति सूत्रेण कप्रत्ययेऽनुबन्धलोपे "आतो लोप इटि च" इत्यनेन आकारस्य लोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे चकृते 'द्विपः'इति सिद्धयति ।

## ४—प्रश्नोत्तराणि

उष्णभोजी—उष्णं भुनक्तीत्यर्थे "सुप्यजातौ णिनिस्ताच्छील्ये" इत्यनेन णिनि प्रत्ययेऽनुबन्धलोपे "पुगन्तलघूपधस्य च" इत्यनेन गुणे प्रातिपदिकत्वात्सौ सोर्लोपे च कृते 'उष्णभोजी' इति सिद्धयति ।

संस्कारजः—संस्काराज्जात इत्यर्थे—"पञ्चम्यामजातौ" इत्यनेनऽप्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'संस्कारजः'इति सिद्धयति ।

वृक्णः—१२ पृष्ठे द्रष्टव्यम् ।

सम्पर्की—समित्युपसर्गपूर्वात् पृच्धातोः "सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसञ्ज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च" इत्यनेन घिनुण् प्रत्ययेऽनुबन्धलोपे "चजोः कुघिण्यतोः" इत्यनेन कुत्वे प्रातिपदिकत्वात्सौ 'सम्पर्की' इति सिद्धयति ।

सवित्रम्—इत्यत्र "अर्तिलूधूसूखनसहचर इत्रः" इत्यनेन इत्रप्रत्यये "सार्वधातुकार्द्धधातुकयोः" इत्यनेन गुणेऽवादेशे प्रातिपदिकत्वात्सौ सोरमादेशे 'सवित्रम्' इति सिद्धयति ।

**शक्नोति भोक्तुम्**—इत्यत्र शक्तेर्भोजनोद्देश्यत्वाभावेऽपि **"शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्"** इत्यनेन तुमुन्प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे **'शक्नोति भोक्तुम्'** इति सिद्ध्यति ।

**रङ्गः** रजत्यस्मिन्निति विग्रहे **"अकर्त्तरि च कारके संज्ञायाम्"** इत्यनेन घञ्प्रत्ययेऽनुबन्धलोपे **"चजोः कु घिण्ण्यतोः"** इत्यनेन कुत्वेऽधिकरणशक्तिप्रधानतया नलोपाभावे नस्यानुस्वारे परसवर्णे च कृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च **'रङ्गः'** इति सिद्ध्यति ।

## ९—प्रश्नोत्तराणि

**हित्वा**--त्यागार्थक ओकारककारेत्संज्ञक हा इत्यस्माद्धातोः **"समानकर्तृकयोः पूर्वकाले"** इत्यनेन क्त्वाप्रत्ययेऽनुबन्धलोपे **"जहातेश्च क्त्वि"** इत्यनेन हिभावे प्रतिपदिकत्वात्सौ सोर्लोपे च कृते **'हित्वा'** इति सिद्ध्यति ।

**प्रधाय**--प्रोपसर्गपूर्वकात् 'धा'इत्यस्माद्धातोः **"समानकर्तृकयोः पूर्वकाले"** इत्यनेन क्त्वाप्रत्यये **"समासेऽनञ्पूर्वे क्त्वो ल्यप्"** इत्यनेन ल्यबादेशेऽनुबन्धलोपे **"घुमास्थागापाजहातिसां हलि"** इत्यनेन ईत्वे प्राप्ते **"न ल्यपि"** इत्यनेन निषेधे प्रातिपदिकत्वात् सौ सोर्लोपे **'प्रधाय'** इति सिद्ध्यति ।

**स्मारं स्मारम्**--पुनः पुनः स्मृत्वा नमति शिवमिति विग्रहे स्मृधातोः **"आभीक्ष्ण्ये णमुल्च"** इति सूत्रेण णमुल् प्रत्ययेऽनुबन्धलोपे णित्वादादिवृद्धौ वीप्सायां द्वित्वे **"कृन्मेजन्तः"** इत्यव्ययत्वे प्रातिपदिकत्वात्सौ सोर्लोपे च कृते **'स्मारं स्मारम्'** नमति शिवमिति सिद्ध्यति ।

**स्वादुङ्कारं भुङ्क्ते**—अत्र मान्तत्वं स्वादुशब्दस्य निपात्यते । ततः स्वाद्वर्थेषु कृञो **"स्वादुमि णमुल् च"** इत्यनेन णमुल्प्रत्ययेऽनुबन्धलोपे णित्वादादिवृद्धौ प्रातिपदिकत्वात्सौ सोर्लोपे च कृते **'स्वादुङ्कारम्'** इति सिद्ध्यति । **"वा सरूपोऽस्त्रियाम्"** इत्यनेन क्त्वाप्रत्यये तु **'स्वादुङ्कृत्वा'** इति सिद्ध्यति ।

**गोःपोषं पुष्णाति**—इत्यत्र गो इत्युपपदात् पुषधातोः **"स्वे पुषः"** इत्यनेन णमुल्प्रत्ययेऽनुबन्धलोपे **"पुगन्तलघूपधस्य च"** इत्यनेन गुणे प्रातिपदिकत्वात्सौ सोर्लोपे च कृते **'गोःपोषं पुष्णाति'** इति सिद्ध्यति ।

**द्व्यहतर्षम्**—द्व्यहं तृष्णावतो कृत्वेति विग्रहे 'द्व्यह' इत्युपपदात् तृष धातोः **"अस्यतितृषोः क्रियान्तरे कालेषु"** इत्यनेन णमुल्प्रत्ययेऽनुबन्धलोपे

"पुगन्तलघूपधस्य च" इत्यनेन गुणे प्रातिपदिकत्वात्सौ सोर्लोपे च कृते 'द्रव्यहृतर्षम्' इति सिद्ध्यति ।

उच्चैः कृत्य—अव्ययार्थक-उच्चैरित्युपपदात् कृधातोः 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ" इत्यनेन क्त्वा प्रत्यये "तृतीया प्रभृतीन्यन्यतरस्याम्" इत्यनेन समासविकल्पं मत्वा समासपक्षे "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इत्यनेन ल्यबादेशेऽनुबन्धलोपे "ह्रस्वस्य पिति कृति तुक्" इत्यनेन तुगागमेऽनुबन्धलोपे 'उच्चैः कृत्य' इति सिद्ध्यति । समासाभावे ल्यबभावपक्षे 'उच्चैः कृत्वा' इति सिद्ध्यति । णमुलि तु—'उच्चैः कारम्' अप्रियमाचष्टे इति सिद्ध्यति ।

---

१९२७

१ पत्रम् ।

१—ओहाक् त्याग इति धातोर्लोटि मध्यमपुरुषैकवचने रूपाणि प्रसाध्य, नृती गात्रविक्षेपे, दीङ् क्षये इत्यनयोर्लृटिप्रथमपुरुषैकवचने वृञ् वरणे इत्यस्य चाशीर्लिङि प्रथमपुरुषैकवचने रूपाणि साधनीयानि ।

२—डुकृञ् करणे इत्यस्य सम्पूर्वस्याशीर्लिङि प्रथमपुरुषैकवचने रूपं संसाध्य बन्ध बन्धने, ऊन परिहाणे इत्यनयोर्लुङि प्रथमपुरुषे रूपाणि साध्यन्ताम् ।

३—अजूहवत्, पेस्पियत, ऊर्णुनविषति, इत्येतान्प्रयोगान् साधयित्वा "तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम् । विस्मापयन् विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः" । इति रघुवंशद्वितीयसर्गपद्ये 'विस्मापयन्' इति प्रयोगेऽनुपपत्तिराशङ्क्य समाधीयताम् ।

४—यकारवकारान्तानान्तूठ्भाविनां यङ्लुङ्नास्तीत्यत्र प्रमाणमुपन्यस्य चञ्चूर्यते, चलीक्लृप्यते, सुमनायते इत्येतेषां साधनप्रकाराः दर्शनीयाः ।

५—ऊढिमाख्यदिति, श्वानमाचष्ट इति च विग्रहयोः पृथक् पृथक् रूपाणि यथाशास्त्रं साधनीयानि।

## १—प्रश्नोत्तराणि

**जहाहि**—त्यागार्थक हाधातो लोँट्लकारे मध्यमपुरुषैकवचने सिपि **"सेर्ह्यपिच्च"** इत्यनेन सेर्हिभावे सार्वधातुकसंज्ञायाम् **"कर्त्तरि शप्"** इत्यनेन शपि शपः **"जुहोत्यादिभ्यः श्लुः"** इत्यनेन श्लौ **"श्लौ"** इत्यनेन द्वित्वे च कृते **"पूर्वोऽभ्यासः"** इत्यनेनाभ्याससंज्ञायाम् **"ह्रस्वः"** इत्यनेन ह्रस्वे **"कुहोश्चुः"** इत्यनेनाभ्यासस्य चुत्वे जश्त्वे च कृते **"आ च हौ"** इत्यनेन आकारस्यात्वे कृते **'जहाहि'** इति रूपं सिद्धयति। चकारात् **"जहातेश्च"** इत्यनेन इत्वे कृते **'जहिहि'** इति। **"ई हल्यघोः"** इत्यनेन ईत्वे तु कृते **'जहीहि'** इति च रूपं सिद्धयति।

**नर्तिष्यति**—गात्रविक्षेपार्थक-ईकारेत्संज्ञक नृतइत्यस्माद्धातोर्लृटलकारे प्रथमपुरुषैकवचने तिप्यनुबन्धलोपे **"स्यतासी लृलुटोः"** इत्यनेन स्यप्रत्यये आर्द्धधातुकसंज्ञायाम् **"पुगन्तलघूपधस्य च"** इत्यनेन धातोर्लघूपधगुणे **"सेऽसिचि कृतचृतच्छृदतृदनृतः"** इत्यनेन विकल्पेन इडागमे **"आदेशप्रत्यययोः"** इत्यनेन षत्वे **'नर्तिष्यति'** इति रूपं सिद्धयति। इडभावे तु **'नर्त्स्यति'** इति च रूपं सिद्धयति।

**दास्यते**—क्षयार्थक दीङ् इत्यस्माद्धातोर्लृट् लकारे ङकारस्येत्संज्ञायां ङित्वादात्मनेपदे प्रथमपुरुषैकवचने तप्रत्यये **"स्यतासी लृलुटोः"** इत्यनेन स्यप्रत्यये **"मीनातिमिनोतिदीङां ल्यपि च"** इत्यनेन धातोरिकारस्यात्वे **"टित आत्मनेपदानां टेरे"** इत्यनेन टेरेत्वे **'दास्यते'** इति रूपं सिद्धयति।

**वरिषीष्ट**—वरणार्थक् ञकारेत्संज्ञक वृइत्यस्माद्धातोराशिषि लिङि ञकारस्येत्संज्ञायां ञित्वादात्मनेपदे तप्रत्यये सार्वधातुकत्वे **"लिङः सीयुट्"** इत्यनेन सीयुटि उटावितौ **"लिङः सलोपोऽनन्त्यस्य"** इति सलोपे **"सुट् तिथोः"** इत्यनेन सुडागमे च कृते **"लिङ्सिचोरात्मनेपदेषु"** इत्यनेन विकल्पेनेडागमे **"सार्वधातुकार्द्धधातुकयोः"** इत्यनेन गुणे रपरत्वे च कृते **"वृतो वा"** इत्यनेन विकल्पेन इटो दीर्घे प्राप्ते **"न लिङि"** इत्यनेन निषेधे षत्वे ष्टुत्वे च

'वरिषीष्ट' इति रूपं सिद्ध्यति। इडभावपक्षे तु "उश्च" इत्यनेन लिङः कित्वात् "क्क्ङिति च" इत्यनेन गुणनिषेधे 'वृषीष्ट' इति रूपं च सिद्ध्यति।

## २—प्रश्नोत्तराणि

सम्पूर्वस्य डुकृञ् करणे इत्यस्याशीर्लिङि परस्मैपदे प्रथमपुरुषैकवचने 'संस्क्रियात्' आत्मनेपदे च 'संस्कृषीष्ट' इति रूपद्वयं पदभेदेन जायते। तत्र 'संस्क्रियात्' इत्यत्र सम्पूर्वात्कृधातोः 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेति' सिद्धान्तमाश्रित्यान्तरङ्गत्वात्पूर्वं सुटि तत आशीर्लिङि तिपि अनुबन्धलोपे "यासुट् परस्मैपदेषूदात्तो ङिच्च" इत्यनेन यासुडागमे अनुबन्धलोपे "रिङ्शयग्लिङ्क्षु" इत्यनेन ऋकारस्य रिङादेशे यासुटः सकारस्य "स्कोः संयोगाद्योरन्ते च" इत्यनेन लोपे 'संस्क्रियात्' इति रूपं सिद्ध्यति।

नन्वाशीर्लिङि 'संस्क्रियात्' इत्यत्र ऋकारोपदेशकाले धातोः संयोगादित्वात् "गुणोर्तिसंयोगाद्योः" इत्यनेन गुणः कुतो नेति वाच्यम्। अत्रोच्यते। इह "गुणोर्ति संयोगाद्योः" इह सूत्रे "नित्यं छन्दसि" इति सूत्रात् नित्यमित्यनुवर्त्य नित्यं यः संयोगादिस्तस्येत्यर्थात् सुटि गुणो नेति।

तथा "लिङः सीयुट्" इत्यनेन सीयुडागमे ऊटावितौ सलोपे "सुट् तिथोः" इत्यनेन सुडागमे षत्वे ष्टुत्वे च 'संस्कृषीष्ट' इति रूपं सिद्ध्यति। ननु तर्हि 'संस्कृषीष्ट' इति लिङि समस्कृत, समस्कृषाताम् इति लुङि च "ऋतश्च संयोगादेः" इति सूत्रेण इट् कुतो नेत्यत आह—"एकाच उपदेशेऽनुदात्तात्" इति सूत्रात् "ऋतश्च संयोगादेः" इति सूत्रे उपदेशे इत्यनुवर्त्य 'उपदेशे यः संयोगादिः' इति व्याख्यानात् लिङ्सिचोर्नेट्। इति।

बन्ध बन्धने इत्यस्य लुङि प्रथमपुरुषैकवचने 'अभान्त्सीत्' इति रूपं भवति। तत्र बन्धनार्थक बन्ध इत्यस्माद्धातोर्लुङ्लकारे परस्मैपदे प्रथमपुरुषैकवचने तिपि एकारस्येत्संज्ञायां लोपे च कृते "इतश्च" इत्यनेन इकारस्येत्संज्ञायां लोपे च कृते "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे "च्लि लुङि" इति च्लौ "च्लेः सिच्" इत्यनेन सिजादेशे इचावितौ अबन्ध + स + त् + इति जाते "अस्तिसिचोऽपृक्ते" इत्यनेन ईडागमे "वदव्रजहलन्तस्याचः" इत्यनेन हलन्तलक्षणवृद्धौ "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इत्यनेन भष्भावेन बकारस्य

भकारे "खरि च" इत्यनेन चर्त्वे धकारस्य तकारे 'अभान्त्सीत्' इति रूपं सिद्ध्यति ।

ऊन परिहाणे इत्यस्य लुङि प्रथमपुरुषैकवचने "औननत्" इति रूपं भवति।

ऊन इत्यस्माद्धातोर्णिचि अनुबन्धलोपे "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां तदन्ताल्लुङि तिपि पकारस्येत्संज्ञायां लोपे च कृते "च्लि लुङि" इति च्लौ "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्" इति सूत्रेण च्लेश्चङादेशेऽनुबन्धलोपेऽडागमम्प्रबाध्य "आडजादीनाम्" इति सूत्रेणाडागमे—आ + ऊन + इ अ + ति इति जाते "इतश्च" इति सूत्रेणेकारस्यलोपे आ + ऊन + इ + अ + त्, इति जाते "चङि" इति सूत्रेण न शब्दस्य द्वित्वे "णेरनिटि"इति णिलोपे "अतो लोपः" इति सूत्रेणातो लोपे "आटश्च" इति वृद्धौ "औननत्"इति भवति आ + ऊन + इ + अ + त् इति स्थिते णिचो द्वित्वनिमित्तत्वाऽभावेन द्विर्वचनेचीत्यस्याऽप्राप्त्या द्वित्वात्परत्वादन्तरङ्गत्वाच्च कृतेऽल्लोपे निशब्दस्य द्वित्वे औनिनदितित्यनिष्टरूपं स्यादत आह कौमुद्याम् ओः पुयणजीत्यादि विभावयिषयि, अबीभवत्, इत्यादावन्तरङ्गत्वात् वृद्धाववादेशे "सन्यतः" इत्येवं सिद्धं पुङ्यौतेश्च सनि "स्मिपूङ्रञ्ज्वशां सनि" "सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णु भरज्ञपिसनाम्" इत्यनेनेटि द्वित्वनिमित्तसत्वात् "द्विर्वचनेऽचि"इति सूत्रप्रवृत्या पूर्वं गुणाऽभावादभ्यासे उकारसद्भावेऽपि यियविषते यियविषतीत्यत्रेत्वार्थं पययोरित्येववाच्यमेवञ्च व्यर्थीभूतं वर्गादिग्रहणं णिचो द्वित्वनिमित्तत्वाऽभावे तन्निमित्तकाजादेशस्य द्वित्वे कर्तव्ये निषेधं ज्ञापयति ननूक्तरीत्योक्तज्ञापनेनाऽचिकीर्तदित्यत्र पूर्वं "उपधायाश्च" इतीत्वमपि न स्यादत आह यत्र द्विरुक्ताविति ज्ञापकसाजात्या यत्र द्वित्वेऽभ्यासोत्तरखण्डस्याऽचप्रक्रियायां परिनिष्ठितरूपे वाऽवर्णो लभ्यते तत्रैवोक्त निषेधादुक्तस्थले प्रक्रियायां परिनिष्ठिते वाऽभ्यासोत्तरखण्डस्याऽयचोऽवर्णरूपत्वाऽन्नापत्तिरित्यलम्पल्लवितेन—

## ३—प्रश्नोत्तराणि

अजूहवत्—ह्वेञ् धातोः अनुबन्धलोपे । "आदेच उपदेशेऽशिति" इत्यनेन आत्वे णिचि कृते "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लुङि तिपि "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे "च्लि लुङि" इत्यनेन च्लौ "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इत्यनेन चङि अनुबन्धलोपे ततः "ह्वः सम्प्रसार-

णम्" इत्यनेन सम्प्रसारणे "चङि" इत्यनेन च द्वित्वे प्राप्ते 'सम्प्रसारणं तदाश्रयं च कार्यं बलवत्' इति वचनात् पूर्वं सम्प्रसारणे कृते ततो "सम्प्रसारणाच्च" इत्यनेन पूर्वरूपे वृद्धौ आवादेशे 'काण्यादीनां वेति वक्तव्यमिति' वार्तिकेन पाक्षिकह्रस्वे णिच्यजादेशो न स्याद् द्वित्वे कर्त्तव्य इति "चङि" इत्यनेन हु शब्दस्य द्वित्वे "पूर्वोऽभ्यासः" इत्यनेन पूर्वस्याभ्याससंज्ञायाम् "कुहोश्चुः" इत्यनेन चुत्वे "दीर्घो लघोः" इत्यनेन दीर्घे "इतश्च" इत्यनेन इकारलोपे "अजूहवत्" इति रूपं सिद्धयति। ह्रस्वाभावे तु-'अजुहावत्' इति रूपम्।

ऽ। ऐर्ष्यियत्--ईर्ष्यतेर्णिचि अनुबन्धलोपे "सनाद्यन्ता धातवः" इत्यनेन धातुत्वाल्लुङि तिपि अनुबन्धलोपे सार्वधातुकत्वे अजादित्वात् "आडजादीनाम्" इत्यनेनाडागमे "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इत्यनेन च्लेश्चङि आर्द्धधातुकत्वे "इतश्च" इति सूत्रेणेकारस्य लोपे आ + इर्ष्य् + इ + अ + त् इति जाते "चङि" इत्यनेन द्वित्वे प्राप्ते "नन्द्राः संयोगादयः" इत्यनेन निषेधे 'ईर्ष्यते स्तृतीयस्येति वाच्यम्' इति वार्तिकेन यि इत्यस्य द्वित्वे "आटश्च" इति वृद्धौ "णेरनिटि" इति णिलोपे 'ऐर्ष्यियत्' इति सिद्धम्।

ऽ। ऊर्णुनविषति—७ पृष्ठे द्रष्टव्यम्।

विस्मापयन्निति—अथ "बिभेतेर्हेतुभये" इति "नित्यं स्मयतेः" इति च आत्वविधौ "भीस्म्योर्हेतुभये" इति चात्मनेपदविधौ हेतोः स्मयस्य गम्यमानत्वे सत्येवात्मनेपदविधानात् तत्फलमाह-हेतोश्चेद्भयस्मयावित्युक्तेर्नेह-'कुञ्चिकयैनं भाययतीति'। केशबन्धविशेषः कुञ्चिका। तस्याश्च करणतया प्रयोजककर्तृत्वाभावात् आत्वं पुक् च नेति तदाशयः।

ननु कथं तर्हि रघुवंशकाव्ये—'विस्मापयन् विस्मितमात्मवृत्तौ' इति श्लोके विस्मापयन्निति, प्रयोजकाद्भयाऽभावेन आत्वपुगनुपपत्तेरिति चेदत्रोच्यते-'मनुष्यवाचा' इति करणादेव हि तत्र स्मयः। अन्यथा-शानचा 'विस्मापयमानः' इत्यपि स्यात्। इति चेत्सत्यम्। 'णौ आयादेशे स्मायि इत्यस्माल्लटः शतरि शपि णेर्गुणे अयादेशे 'विस्मापयन्' इत्येव कालिदासो महाकविः प्रायुङ्क्त। 'विस्मापयन्' इति पकारपाठस्तु-लेखकप्रमादकृत इति भावः। तेन—'विस्माययन्' इत्येव पाठ इति साम्प्रदायिकाः।

यद्वा-राजा दिलीपो विस्मयते। तं सिंहोच्चारिता मनुष्यवाक् प्रयोजयति।

इति विस्मापयते मनुष्यवाक् राजानम् । अत्र मनुष्यवाक् प्रयोज्यकर्त्री । राजा तु-प्रयोज्यकर्तेति स्थितिः । अत्र स्मयस्य प्रयोजककर्तृभूतमनुष्यवाङ्मूलकत्वादात्वे पुक् । मूले-प्रयोज्य कर्त्रीत्येव पाठः । बहुव्रीह्याश्रयणात् प्रयोजककर्त्रीति तदर्थः । सैव च पाठो सुगमः । तां विस्मापयमानां प्रयोजकर्त्रीं मनुष्यवाचं प्रयोजयति सिंहः विस्मापयति । स्मापि इति ण्यन्तात् णौ प्रथमणेर्लोपे स्मापि इत्यस्मात् शतृप्रत्यये शपि णेर्गुणेऽयादेशे 'विस्मापयन्' इति भवति । तदभिप्रेत्याह—तया सिंहो विस्मापयन्निति ण्यन्ताण्णौ शतेति व्याख्येयमिति ।

## ४—प्रश्नोत्तराणि

यकारवकारान्तानामूठभाविनां यङ्लुङ्नास्तीति—"च्छ्वोः शूडनुनासिके च" इति सूत्रे भाष्ये ध्वनितम् । कैयटेन च स्पष्टीकृतम् । तथाहि—उक्तसूत्रे क्ङिद्ग्रहणानुवृत्तौ कांश्चित् दोषानुद्भाव्य परिहृत्य क्ङिद्ग्रहणानुवृत्ति स्वीकृत्योक्तं भाष्ये । एतावानेव विशेषः अनुवर्तमाने क्ङिद्ग्रहणे छः षत्वं वक्तव्यमिति । अत्र कैयटः-प्रष्टा पृष्टमित्यादौ "च्छ्वोः शूडनुनासिके च" इत्यनेन छस्य शत्वे कृते तस्य "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इत्यनेन षत्वे ष्टुत्वे तत्सिद्ध्यतीति स्थितिः । तत्र क्ङितीत्यनुवृत्तौ छस्य षत्वं न स्यात् । अतः छस्य षत्वं वक्तव्यमित्यर्थः । न च क्ङिद्ग्रहणानुवृत्तावत्र शत्वाभावेऽपि न दोषः । व्रश्चादिना छस्य षत्वे इष्टसिद्धेरिति वाच्यम् । तत्र 'च्छ्वोः' इत्यत्र छस्य षत्वं वक्तव्यमित्यनेनैव प्रष्टेत्यादिसिद्धः व्रश्चादिसूत्रे छग्रहणं न कर्त्तव्यमित्याशयात् । न च प्राडिति क्विबन्तात् सोर्लोपे षत्वार्थं व्रश्चादिसूत्रे छग्रहणमिति वाच्यम् । तत्रापि क्विब्निमित्तशादेशस्य दुर्निवारत्वात् । क्विप् तु प्रच्छधातोरनभिधानान्नास्ति एवञ्चात्र–भाष्ये–'ऊठ्भाविभ्यो यङ्लुङ्नास्ति' इत्युक्तप्रायम् । अन्यथा—'च्छ्वोरित्यत्र क्ङिद्ग्रहणानुवृत्तौ दिवेर्यङ्लुकि तिबादौ ईडभावे लघूपधगुणे "लोपो व्योर्वलि" इति वलोपे देदेति देदेषीत्याद्यूठः अभावे रूपम् तदननुवृत्तौ तु वस्य ऊठि 'देद्योति' 'देद्योषि' इत्यादि रूपमिति विशेषस्य सत्त्वादेतावानेवेत्येवकारो विरुद्ध्येत् । अतः ऊठ्भाविनां यकारवकारान्तानां यङ्लुङ् नास्तीति विज्ञायत इति ।

इदञ्च—'च्छ्वोः शूडनुनासिके च" इति सूत्रेण यत्र ऊठ् प्रवर्त्तते तद्विषयकमेव ज्ञापनमिति । "ज्वरत्वरस्रिव्यविमवामुपधायाश्च" इत्यनेन ऊठ्भाविनोः स्रिविमव्योस्तु यङ्लुगस्त्येवेति नाव्यम् । माधवादिसम्मतञ्चेति दिक् ।

चञ्चूर्यते—गर्हितं चरतीति विग्रहे चर इत्यस्माद्धातोः "लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्" इत्यनेन यङ्प्रत्ययेऽनुबन्धलोपे "सनाद्यन्ता धातवः" इत्यनेन धातुसञ्ज्ञायाम् "सन्यङोः" इत्यनेन द्वित्वेऽभ्याससंञ्ज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे "चरफलोश्च" इत्यनेन नुगागमे तत्र नुग्ग्रहणमनुस्वारोपलक्षणार्थम् । 'स च पदान्तवद्वाच्यः' इत्यनेन वार्तिकेन पदान्तवद्भावेन "वा पदान्तस्य" इत्यनेन विकल्पेनानुस्वारे परसवर्णे च कृते "उत्परस्यातः" इत्यनेननाभ्यासादुत्तरखण्डस्याकारस्योकारे "हलि च" इत्यनेन दीर्घे धातुत्वाल्लट्लकारे तङि सार्वधातुकसञ्ज्ञायां शपि पररूपे च कृते "टित आत्मनेपदानां टेरे" इत्यनेन एत्वे कृते 'चञ्चूर्यते' इति रूपं सिद्ध्यति । परसवर्णाभावपक्षे 'चंचूर्यते' इति ।

चलीक्लृप्यते—ऊकारेत्संज्ञक कृपधातोः "धातोरेकाचो हलादेः क्रियासमभिव्याहारे यङ्" इत्यनेन यङि अनुबन्धलोपे धातुसंज्ञायाम् "सन्यङोः" इत्यनेन द्वित्वे "उरत्" इत्यनेन अत्वे रपरत्वे च कृते "हलादिःशेषः" इत्यनेन लोपे "कुहोश्चुः" इत्यनेन चुत्वे "रीगृदुपधस्य च" इत्यनेन रीगागमे 'कृपेर्रो रेफस्तस्य लत्वं स्यादित्यर्थे ऋकारावयवत्वं रेफस्य न सम्भवतीति रेफशब्दो रेफसदृशे ऋकारांशे लाक्षणिकः । लइत्यपि लकारसदृशे लृकारांशे लाक्षणिकः । तथा च—कृपेॠकारस्यावयवो यो रेफसदृशः तस्य च लकारसदृशः इति व्याख्याद्वयभूतेन "कृपो रो लः" इत्यनेनोभयत्र लत्वे 'चलीक्लृप्यते' इति सिद्ध्यति ।

सुमनायते—सु-शोभनं मनो यस्येति विग्रहे 'सुमनाः' इति बहुव्रीहियौगिकः । न सुमनाः असुमनाः, असुमना सुमनाः भवतीत्यर्थे "भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः" इत्यनेन क्यङि प्रत्यये हलन्तस्य सस्य लोपे च कृते अनुबन्धलोपे "अकृत्सार्वधातुकयोर्दीर्घः" इत्यनेन दीर्घे ततः धातुसंज्ञायां लट्लकारे आत्मनेपदे तप्रत्यये "टित आत्मनेपदानां टेरे" इत्यनेन एत्वे कृते "सुमनायते" इति रूपं सिद्ध्यति ।

## ५—प्रश्नोत्तराणि

ऊढिमाख्यदिति विग्रहे—ऊह् धातोः क्तप्रत्यये अनुबन्धलोपे ततः कृतेषु ढत्वधत्वष्टुत्वढलोपेषु 'ऊढिः' इति रूपम् । तस्मात् "तत्करोति तदाचष्टे"

इत्यनेन णिच्यनुबन्धलोपे 'ऊढि' इति ण्यन्ताल्लुङि "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इत्यनेन चङ्यनुबन्धलोपे अट्प्राप्ते—अजादित्वात् "आडजादीनाम्" इत्यनेन आडागमे "आटश्च" इत्यनेन वृद्धौ औ ढि + अ + त् इति स्थिते तत्र "पूर्वत्रासिद्धम्" इत्यनेन ढत्वधत्वष्टुत्वढलोपानामसिद्धत्वात् "अजादेर्द्वितीयस्य" इत्यनेन हतिशब्दस्य द्वित्वे "पूर्वोऽभ्यासः" इत्यनेन अभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे "कुहोश्चुः" इत्यनेन चुत्वे "औजिढत्" इति रूपं सिद्ध्यति ।

ननु 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यनेन निषेधः शंक्यस्तन्न । तस्या अनित्यत्वेनात्र तदनाश्रयणात् । 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यस्य क्वचिदनित्यत्वेऽप्यत्र तदप्रवृत्तौ मानाभावादिति वदतां मते ढिशब्दस्य द्वित्वे 'औडिढत्' इति रूपं सिद्ध्यतीति दिक् ।

श्वानमाचष्टे इति विग्रहे "तत्करोति तदाचष्टे" इत्यनेन णिचि अनुबन्धलोपे 'श्वन् + इ' इति स्थिते ततः "नस्तद्धिते" इत्यनेन टिलोपः । "प्रकृत्यैकाच्" इत्यनेन प्रकृतिभावस्तु नेह प्रवर्त्तते । 'येननाप्राप्ति' न्यायेन टेरित्यस्यैव बाधको हि सः । इष्ठवत्वेन भसंज्ञायाम् टिलोपे सति तस्याभीयत्वेनासिद्धत्वादन्नन्तत्वात् "श्वयुवमघोनामतद्धिते" इत्यनेन वस्य सम्प्रसारणे "सम्प्रसारणाच्च" इत्यनेन पूर्वरूपे उकारस्य वृद्धावावादेशे च कृते 'शावयति' इति रूपं सिद्ध्यति । अन्ये तु—"नस्तद्धिते" इति नेहातिदिश्यते, इष्ठनि तस्यादृष्टत्वात् । 'ब्रह्मिष्ठः' इत्यादौ परत्वात् 'टेः' इत्यस्यैव प्रवृत्तेः । तेन 'शुनयति' इति रूपमाहुः ।

---

१९२७

२ पत्रम् ।

१—चिचन्द्रीयिषति, आदित्यमुपतिष्ठते, शय्यते, भिद्यते काष्ठम्, कतमो हरिं निन्देत्, भवता यष्टव्यम्, समये यद्भुञ्जीत भवान्, याहि याहीति याति । एतानि विशेषशास्त्रका दर्शनेन साधनीयानि ।

२—'गौणे कर्मणि दुह्यादेः प्रधानेनीहृकृष्वहाम्' इत्यादिकारिकां व्याख्याय दर्शयत, गौणादिकर्मसु प्रत्ययेन रूपाणि ।

३—दुर्यानम्, प्रख्यानीयम्, राजसूयः, त्वया गन्तव्यम्, दरिद्रायकः, अवद्यायः, अग्रेसरः, एतेषां सिद्धिप्रकारो दर्शनीयः।

४—कृष्णं दर्शको याति, इरम्मदः, श्रिमन्यं कुलम्, विविदिवान्, अजस्रम्, सूकरनिचयः, ईषन्निमयः, एषु कस्मात् कस्मिन्नर्थे कः प्रत्ययः इति निर्दिश्य विशेषकार्याणि दर्शयत।

५—क्लिशित्वा, क्रान्त्वा, परिवीय, पादघातं हन्ति, एकधाकारम्, गेहानुप्रपातम्, दर्शयैतेषु शास्त्रकार्यविशेषान्।

## १—प्रश्नोत्तराणि

चिचन्द्रीयिषति—चन्द्रीयितुमिच्छतीति विग्रहे क्यजन्तात् 'चन्द्रीय' इत्यस्माद्धातोः इच्छायामर्थे "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इत्यनेन सन्प्रत्ययेऽनुबन्धलोपे ततः "सन्यङोः" इति सूत्रेण प्रथमस्यैकाचो द्वित्वे प्राप्ते 'यथेष्टं नामधातुषु' इति वार्तिकेन प्रथमस्यैकाचो द्वित्वे कृते सन इडागमे च कृते अभ्यासकार्ये 'चिचन्द्रीयिषति' इति प्रथमं रूपं सिद्ध्यति। द्वितीयस्यैकाचो दस्य द्वित्वे 'चन्दिद्रीयिषति' इति द्वितीयं रूपं सिद्ध्यति। अत्र "नन्द्राः संयोगादयः" इत्यनेन निषेधात् 'नकारस्य' न द्वित्वम्। ततः तृतीयस्यैकाचो यिशब्दस्य द्वित्वे 'चन्द्रीयियिषति' इति तृतीयं रूपं सिद्ध्यति।

आदित्यमुपतिष्ठते—इत्यत्र "उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्" इति वार्तिकेन आत्मनेपदे 'आदित्यमुपतिष्ठते' इति सिद्ध्यति। अभिमुखीभूयावस्थितिपूर्वकस्तुत्यादिभिः पूजयतीति तदर्थः।

ननु रघोर्दैवतात्वाभावात् कथं तर्हि 'स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती' इति चेदत्रोच्यते तत्र देवतात्वारोपात्, 'ना विष्णुः पृथिवीपतिः' इत्यादिस्मरणात्, 'अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः' इति स्मृतेश्च, नृपस्य देवतांशत्वाद्वा तथा समाधेयमिति दिक्।

शय्यते—शीङ्धातोर्भावेर्लटि आत्मनेपदे तप्रत्यये "सार्वधातुके यक्" इत्यनेन यक्प्रत्ययेऽनुबन्धलोपे "अयङ् यि क्ङिति" इत्यनेन अयङादेशे ङकारस्येत्संज्ञायां लोपे च कृते "टित आत्मनेपदानां टेरे" इत्यनेन एत्वे 'शय्यते' इति रूपं सिद्ध्यति।

**भिद्यते काष्ठम्**—देवदत्तः काष्ठं भिनत्ति द्विधा करोतीत्यर्थः। अत्र भिद्-धातोर्द्विधाभवनं द्विधा भावनञ्चेति व्यापारद्वयं तत्र द्विधाभावनस्य कुठारादिपातनरूपस्याश्रयो देवदत्तः काष्ठञ्च द्विधाभवनस्याश्रयः ततः सौकर्य्यातिशयद्योतनाय यदा कुठारस्योद्यमननिपातनादिः देवदत्तव्यापारोऽविवक्ष्यते तदा द्विधाभवनरूपे स्वव्यापारे काष्ठस्य स्वतन्त्रत्वात् कर्तृत्वं सम्पद्यते तस्य "कर्मवत्कर्मणातुल्यक्रियः" इति सूत्रेण कर्म्मवद्भावात् यगात्मनेपदयोः सतोः 'भिद्यते काष्ठम्' इति भवति नचात्र द्विधाभवनरूपा या क्रिया कर्मस्था कर्मणः कर्तृत्वविवक्षायामपि सैव नतु तत्तुल्या तुल्यत्वस्य भेदघटितत्वात् तत्कथं कर्मत्वातिदेश इति वाच्यम् वास्तवभेदाऽभावेऽपि कर्मत्वकर्तृत्वावस्थाभेदोपाधिकं तत्समानाधिकरणक्रियाया भेदमाश्रित्य व्यवहारादिति शम् पल्लवितेन।

**कः कतरः कतमो वा हरिं निन्देत् निन्दिष्यति वा**—अत्र "किंवृत्ते लिङ्लृटौ" इत्यनेन लिङ्लृटौ, 'निन्देत्-निन्दिष्यति' इति वा सिद्ध्यति।

**भवता यष्टव्यम्**-अत्र "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च" इत्यनेन यज्-धातोर्भावे तव्यप्रत्यये कृते 'भवता यष्टव्यम्' इति सिद्ध्यति। लोटलकारे तु 'भवान्यजताम्' इति सिद्ध्यति।

**कालः समयो वेला वा यद्भुञ्जीत भवान्**—इत्यत्र "लिङ् यदि" इति सूत्रेण लिङ्लकारे 'समयो यद्भुञ्जीत भवान्' इति सिद्ध्यति।

**याहि याहीति याति**—इत्यत्र "क्रियासमभिहारे लोट्लोटो हिस्वौ-वा च तध्वमोः" इत्यनेन पौनः पुन्ये भृशार्थे च द्योत्ये धातोर्लोट् स्यात्तस्य च क्रमेण हिस्वौ स्तः। तौ च हिस्वौ क्रमेण परस्मैपदात्मनेपदसंज्ञौ स्वरितञ्संज्ञौ च। तध्वमोर्विषये तु हिस्वौ वा स्तः। पुरुषैकवचनसंज्ञे तु नानयोरतिदिश्येते। हिस्वविधानसामर्थ्यात्। तेन सकलपुरुषवचनविषये परस्मैपदिभ्यो कर्तरि हिः। एवञ्च—याहीति, अत्र "यथाविध्यनुप्रयोगः पूर्वस्मिन्" इति सूत्रेणाद्ये लोड् विधाने लोट्प्रकृतिभूत एव धातुरनुप्रयोज्यः तत अनुप्रयोगात् यथायथं लडादयस्तिबादयश्च भवन्ति। ततः सङ्ख्याकालयोः पुरुषविशेषार्थस्य चाभिव्यक्तिः। ततश्च "क्रियासमभिहारे द्वे वाच्ये" इति वार्तिकेन द्वित्वे याहि याहीति याति, यातः, यान्ति, इत्यनुप्रयोगात् सर्वलकाराः सर्वपुरुषवचनानि च भवन्ति। पुनः पुनरतिशयेन वा यद्यानं तदात्मककमेवकर्तृकं वर्त्तमानं यानमिति

शाब्दबोधः। तिङन्तेषु सर्वत्र क्रियाविशेष्यक एव बोध इति सिद्धान्तादेवमुक्तिः ।
अत्र इतिशब्दस्त्वभेदान्वये तात्पर्यं ग्राहयतीति शम्।

## २—प्रश्नोत्तराणि।

गौणे कर्मणि दुह्यादेरेति—ननु "लः कर्मणि च भावे चाकर्मकेभ्यः" इत्यनेन लकाराविहिताः। तथा "तयोरेव कृत्यक्तखलर्थाः" इति कर्मणि कृत्यादिप्रत्यया वक्ष्यन्ते। ते च तावत् द्विकर्मकधातुषु किं मुख्ये कर्मणि उत गौणे किं वोभयोरिति सन्देहे व्यवस्थामाह—'द्विकर्मकाणान्तु' इत्यादिना तां व्यवस्थां सार्द्धश्लोकेन दर्शयति—

"गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्।
बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया" ॥
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः।

अयम्भावः-'दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्' गौणे कर्मणि लादयो मता इति। "अकथितं च" इति सूत्रेण यस्य कर्मसञ्ज्ञा तत् गौणं कर्मेति बोध्यम्। नीहृकृष्वहां प्रधाने कर्मणि लादयो मता इति। "अकथितं च" इति सूत्रादन्येन यस्य कर्मसञ्ज्ञा तत्प्रधानं कर्मेति बोध्यम्। अथ "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ" इत्यनेन ये द्विकर्मकाः तेषु व्यवस्थामाह—बुद्ध्यर्थकस्य भक्ष्यार्थकस्य शब्दकर्मकाणां च प्रधाने वा गौणे वा कर्मणि स्वेच्छया लादयो मता इत्यन्वयः। इह "गतिबुद्धि०" इत्यनेन यस्य कर्मसञ्ज्ञा तत् गौणं कर्म। तदितरस्तु प्रधानं कर्म।

प्रयोज्येति—अन्येषां गत्यर्थानाम्, अकर्मकाणाम् "हृक्रोरन्यतरस्याम्" इति सूत्रोपात्तहृक्रोश्च प्रयोज्यकर्मणि लादयो मता इत्यर्थः। अयं सार्धश्लोक "अकथितं च" इति सूत्रस्थवार्तिकभाष्यसंग्रह इति बोध्यम्। 'गौ र्दुह्यते पयः' इति गोपेनेति शेषः। अत्र गोरप्रधानकर्मत्वात्तस्मिन् कर्मणि लकारः तिङा अभिहितत्वात् गोः प्रथमा। प्रधानकर्मत्वात्पय इति द्वितीयान्तम्। तस्य तिङा अनभिहितत्वात्। बलिर्याच्यते वसुधाम्। अविनीतो विनयं याचते। तण्डुलाः ओदनं पच्यन्ते। गर्गाः शतं दण्ड्यन्ते। व्रजो रुध्यते गाम्। माणवकः पन्थानं पृच्छयते। वृक्षोऽवचीयते फलानि माणवको धर्ममुच्यते शिष्यते वा। शतं जीयते देवदत्तः।

सुधां क्षीरो दधिर्मथ्यते । देवदत्तः शतं मुष्यते । एतेषु गौणकर्मणि लकारः । अथ प्रधाने नीहृकृष्वहामित्यत्रोदाहरति-अजा ग्रामं नीयते, ह्रीयते, कृष्यते, उह्यते इति । प्रतिक्रियमजाग्राममित्यन्वेति । उह्यत इत्यत्र वहतेर्यजादित्वात्सम्प्रसारणम् । अत्र अजायां प्रधानकर्मणि लकारः,ग्रामस्यानभिहितत्वात् द्वितीया । बुद्धयर्थस्योदाहरति, बोध्यते माणवकं धर्मः, माणवको धर्ममिति वा । गुरुणेति शेषः । अत्र माणवके गौणकर्मणि धर्मे वा प्रधानकर्मणि ण्यन्तात् लकारः । भक्षार्थस्य तु अश्यन्ते देवाः अमृतं हरिणा, अश्यतेऽमृतं देवानिति वा उदाहार्यम् । शब्दकर्मकस्य तु वेदोऽध्याप्यते विधिं हरिणा, वेदमध्याप्यते विधिरिति वेत्युदाहार्यम् । यदुक्तं गत्यर्थानां हृकृञोश्चेत्येतेषां प्रयोज्यकर्मणि लकार इति । तत्र गत्यर्थस्योदाहरति । देवदत्तो ग्रामं गम्यते इति । यज्ञदत्तेनेति शेषः । अत्र प्रयोज्यकर्मणि देवदत्ते गमेर्ण्यन्तात् लः । इति शम् ।

## ३—प्रश्नोत्तराणि

**दुर्यानम्**—दुरुपपदात् यातेर्ल्युटि कृतेऽनुबन्धलोपे **"युवोरनाकौ"** इत्यनेनानादेशे **"दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः"** इति वार्तिकेन दुरित्यस्योपसर्गत्वप्रतिषेधात् **"कृत्यचः"** **"णेर्विभाषा"** इत्युभयोरप्यप्रवृत्त्या णत्वाभावे प्रातिपदिकत्वात्सौ सोरमादेशे कृते **'दुर्यानम्'** इति सिद्धयति ।

**प्रख्यानीयम्**—प्रोपसर्गपूर्वकात् ख्याधातोः **"तव्यत्तव्यानीयरः"** इत्यनेनानीयर् प्रत्ययेऽनुबन्धलोपे ततः **"कृत्यचः"** इत्यनेन णत्वे प्राप्ते **"चक्षिङः ख्याञ्"** इति सूत्रस्थभाष्यपर्यालोचनेन णत्वप्रकरणोपरि **"ख्शाञः शस्य यो वा"** इत्यस्य वक्ष्यमाणतयाऽत्र यत्वस्यासिद्धत्वेन शकारव्यवधानात् णत्वाभावे प्रातिपदिकत्वात्सौ सोरमादेशे **'प्रख्यानीयम्'** इति सिद्धयति ।

**राजसूयः**—राज्ञा सोतव्योऽभिषवद्वारा निष्पादयितव्यः । यद्वा—लताविशेषात्मकः सोमो राजा स सूयते कण्ड्यतेऽत्र यज्ञविशेषे इति विग्रहे राजेत्युपपदात् षूधातोर्क्यपि अनुबन्धलोपे निपातनाद्दीर्घे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते **'राजसूयः'** इति सिद्धयति ।

ननु **"कर्त्तरि कृत"** इत्यधिकारात् कथमधिकरणव्युत्पत्तिरित्यत आह-अधिकरणे क्यबिति । कुत इत्यत आह—निपातनादिति ।

**त्वया गन्तव्यम्**—इत्यत्र **"प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च"** इति

बलात् "तव्यत्तव्यानीयरः" इति सूत्रविहिततव्यप्रत्यये प्रातिपदिकत्वात्सौ सोरमादेशे 'त्वया गन्तव्यम्' इति सिद्धयति ।

**दरिद्रायकः**—दरिद्रायत इति विग्रहे "ण्वुल्तृचौ" इत्यनेन ण्वुलि अनुबन्धलोपे "युवोरनाकौ" इत्यनेन वोरकादेशे "आतो युक् चिण्कृतोः" इत्यनेन युगागमेऽनुबन्धलोपे "आतो लोप इटि च" इत्यनेन आकारस्य लोपे प्राप्ते दरिद्रातेर्ण्वुलि आल्लोपो नेत्यर्थक "ण्वुलि न" इति वार्त्तिकेन तन्निषेधात् । प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'दरिद्रायकः' इति सिद्धयति ।

**अवश्यायः**—अवपूर्वकस्य श्यैङ्धातोः "आदेच उपदेशेऽशिति" इत्यनेनात्वे "श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च" इत्यनेन णप्रत्यये ऽनुबन्धलोपे "आतो युक् चिण्कृतोः" इत्यनेन युगागमेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ रुत्वविसर्गे च 'अवश्यायः' इति सिद्धयति । अत्र श्यैङोऽवस्यतेश्चादन्तत्वादेव सिद्धे पृथग्ग्रहणमुपसर्गे कं बाधितुमिति ।

**अग्रेसरः**—अग्रमग्रेणाग्रे वा सरतीति विग्रहे "पुरोऽग्रतोऽग्रेषु सर्तेः" इत्यनेन टप्रत्यये अनुबन्धलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'अग्रेसरः' इति सिद्धयति ।

ननु समासावयवत्वात् सुपो लुकि कृते अग्रसर इति स्यात् कथमग्रेसर इति तत्राह सूत्रेऽग्रे इत्येदन्तत्वमपि निपात्यते ।

ननु सूत्रे एदन्तत्वनिपातनात् कथं तर्हि 'यूथं तदग्रसरगर्वितकृष्णसारमिति' समाधत्ते—बाहुलकात्समाधेयमिति हरदत्तः ।

## ४—प्रश्नोत्तराणि

**कृष्णं दर्शको याति**—इत्यत्र दृश् धातोः "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" इत्यनेन ण्वुलि अनुबन्धलोपे "युवोरनाकौ" इत्यनेन वोरकादेशे सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च 'कृष्णं दर्शको याति' इति सिद्धयति । अत्र "अकेनोर्भविष्यदाधमर्ण्ययोः" इति निषेधान्न षष्ठी । अत्र वासरूपन्यायेन तृजादयो न । कुतो नेत्यत आह—पुनर्ण्वुलोक्तेरिति । "ण्वुल्तृचौ" इति कालसामान्ये कर्त्तरि विहितो ण्वुल् क्रियार्थक्रियोपपदे विषये भवतीति पुनरिह ण्वुल्विधानात् तदितरतृजादयो न भवन्तीति विज्ञायत इति भावः ।

**इरम्मदः**—इरोदकं तेन माद्यति दीप्यतेऽबिन्धनत्वादिति विग्रहे **"उग्रम्पश्येरम्मदपाणिन्धमाश्च"** इत्यनेन खश्प्रत्ययेऽनुबन्धलोपे **"अरुर्द्विषदजन्तस्य मुम्"** इत्यनेन मुमागमेऽनुबन्धलोपे **"खित्यनव्ययस्य"** इत्यनेन ह्रस्वे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते **'इरम्मदः'** इति सिद्धयति। अत्र श्यन् प्रत्ययस्तु न भवितुमर्हति सूत्रे इरम्मद इति निपातनात्।

**श्रिमन्यं कुलम्**—श्रियमात्मानं मन्यते यत्कुलमिति विग्रहे **"आत्ममाने खश्च"** इत्यनेन खश् प्रत्ययेऽनुबन्धलोपे **"दिवादिभ्यः श्यन्"** इत्यनेन श्यनि अनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे च कृते **'श्रिमन्यं कुलम्'** इति सिद्धयति। 'अत्र भाष्यकारवचनाच्छ्रीशब्दस्य ह्रस्वः मुमोरभावश्चेति बोध्यम्'।

**विविद्वान्**—विद्धातोर्लिट्लकारे क्वसुप्रत्ययेऽनुबन्धलोपे ततः **"लिटि धातोरनभ्यासस्य"** इत्यनेन द्वित्वेऽभ्याससञ्ज्ञायाम् **"हलादिः शेषः"** इत्यनेन लोपे **"आर्द्धधातुकस्येड्वलादेः"** इत्यनेनेट्प्राप्ते तस्य **"नेड्वशि कृति"** इत्यनेन प्रतिषिद्धे **"विभाषा गमहनविदविशाम्"** इत्यनेन विकल्पेनेडागमे प्रातिपदिकत्वात्सौ उगित्वान्नुमि दीर्घे सुलोपे संयोगान्तलोपे च **'विविदिवान्'** इति सिद्धयति। इडभावपक्षे—**'विविद्वान्'** इति। विशिना साहचर्याद्विन्दतेर्ग्रहणम्। वेत्तेस्तु—**'विविद्वान्'** इति **"नेड्वशि कृति"** इतीण्निषेध इति शम्।

**अजस्रम्**—नञ्पूर्वको 'जसु मोक्षणे' इत्ययं धातुः शक्तिस्वभावात् क्रियासातत्ये वर्तते। निपातनात् धातुना नञः समासे **"नलोपो नञः"** इत्यनेन नलोपे **"नमिकम्पिस्म्यजसकमहिंसदीपो रः"** इत्यनेन रप्रत्यये प्रातिपदिकत्वात्सौ सोरमादेशे **'अजस्रम्'** इति सिद्धयति।

**सूकरनिचयः**—इत्यत्र **"सङ्घे चानौत्तराधर्ये"** इति सूत्रे अनौत्तराधर्ये ग्रहणाभावे पूर्वोक्तसूत्रेण घञापत्तिः स्यादतः अनौत्तराधर्ये ग्रहणं कर्त्तव्यमिति। स्तनपानार्थमुत्तराधरभावेन सूकराः शेरते तदेतत्प्रत्युदाहरणम्। यदा तु भिक्षुवत्पृथक्पृथगेवावतिष्ठन्ते, तदा भवत्येव घञिहापीति।

**ईषत्क्षिमयः**—इत्यत्र **"ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्"** इत्यनेन खल् प्रत्ययेऽनुबन्धलोपे **"मीनातिमिनोतिदीङां ल्यपि च"** इत्यनेनात्वे प्राप्ते

"निमिमीलियां खल्चोरात्वं नेति वाच्यम्" इति वार्तिकेन निषेधे गुणेऽयादेशे च कृते प्रातिपदिकत्वात्सो रुत्वे विसर्गे च कृते 'ईश्वन्निमयः' इति सिद्धयति ।

## ८—प्रश्नोत्तराणि

क्लिशित्वा—क्लिश् धातोः क्त्वाप्रत्यये विकल्पेनेडागमे च कृते गुणे प्राप्ते "मृडमृदगुधकुषक्लिशवदवसः क्त्वा" इत्यनेन कित्सञ्ज्ञायाम् "क्ङिति च" इत्यनेन निषेधे 'क्लिशित्वा' इति सिद्धयति । इडभावे तु 'क्लिष्ट्वा' इति ।

क्रान्त्वा—क्रमुधातोः क्त्वाप्रत्यये इडागमाभावपक्षे "क्रमश्च क्त्वि" इत्यनेन विकल्पेन दीर्घे 'क्रान्त्वा' इति सिद्धयति । दीर्घाभावे तु 'क्रन्त्वा' इति ।

परिवीय—परीत्युपसर्गपूर्वकात् व्येञ्धातोः क्त्वाप्रत्यये तस्य ल्यपि कृतेऽनुबन्धलोपे "विभाषा परेः" इत्यनेन व्येञो विकल्पेन सम्प्रसारणे कृते तुकं बाधित्वा परत्वात् "हलः" इत्यनेन दीर्घे 'परिवीय' इति सिद्धयति ।

पादघातं हन्ति—पादेन हन्तीत्यर्थे "करणे हनः" इत्यनेन णमुल्प्रत्यये 'पादघातं हन्ति' इति सिद्धयति ।

एकधाकारम्—अनेकं द्रव्यमेकं भूत्वेति विग्रहे "नाधार्थप्रत्यये च्व्यर्थे" इत्यनेन करोतेर्णमुलि 'एकधाकारम्' इति सिद्धयते ।

गेहानुप्रपातम्—इत्यत्र "विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः" इत्यनेन द्वितीयान्ते उपपदे विश्यादिभ्यो णमुलि कृते 'गेहानुप्रपातम्' इति सिद्धयति ।

---

## १९२८

### १ पत्रम् ।

१—जिहते, समश्लिषत, भाष्ट, प्रतिस्किरति, संस्क्रियात्, एषिता, गालोडयते, एतेषु विशेषकार्याणि प्रदर्श्य साधुत्वं ब्रूत ।

२—'आख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्ययापत्तिः प्रकृतिवच्च कारकमित्यस्यार्थं प्रदर्श्योदाहरणे योजयत ।

३—उब्ज, जु, स्मि, धातूनां णौ चङि ग्रह्, भ्रस्ज्, इण्, धातूनां सनि विशेषसूत्राणि प्रदर्श्य लटि प्रथमपुरुषैकवचने साध्यानि ।

४—अट्वञ्चुस्यमधातुभ्यो यङि लटि प्रथमपुरुषैकवचने हन्नृधातुभ्यां यङ्लुक्याशीर्लिङि प्रथमपुरुषैकवचने च का रूपसिद्धिः ।
५—तिर्यञ्चं वृद्धं युवानञ्चाख्यत इत्यर्थे रूपाणि साधयत ।
६—यङ्लुको भाषायामप्रवृत्तौ किं मानमिति विस्तरेण ब्रूत ।

## १—प्रश्नोत्तराणि ।

**जिहते**—गत्यर्थक-ओकार-ङकारेत्संज्ञक हा इत्यस्माद्धातोर्लट्लकारे आत्मनेपदे झप्रत्यये सार्वधातुकसंज्ञायाम् "कर्त्तरि शप्" इत्यनेन शपि "जुहोत्यादिभ्यः श्लुः" इत्यनेन शपः। श्लौ "श्लौ" इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् "ह्रस्वः" इत्यनेन ह्रस्वे "कुहोश्चुः" इत्यनेन चुत्वे "अभ्यासे चर्च" इति जश्त्वे "श्नाभ्यस्तयोरातः" इत्यनेनाकारलोपे "अदभ्यस्तात्" इत्यनेन झस्यादादेशे "भृञामित्" इत्यनेनाभ्यासस्येत्वे "टित आत्मनेपदानां टेरे" इत्यनेन एत्वे "जिहते" इति सिद्ध्यति ।

**समश्लिषत्**—समित्युपसर्गपूर्वकात् श्लिष् इत्यस्माद्धातोर्लुङ्लकारे तिप्प्रत्ययेऽनुबन्धलोपे "च्लि लुङि" इत्यनेन च्लौ आलिङ्गनाभावात् "श्लिष आलिङ्गने" इत्यस्याप्रवृत्त्या "पुषादिद्युताद्यॢदितः परस्मैपदेषु" इत्यनेन च्लेरङादेशेऽनुबन्धलोपे "इतश्च" इतीकारलोपे "समश्लिषत्" इति सिद्ध्यति ।

**आष्ट**—ऊकारेत्संज्ञक अश् इत्यस्माद्धातोर्लुङ्लकारे आत्मनेपदे तप्रत्यये "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे प्राप्ते तम्प्रबाध्य "आडजादीनाम्" इत्यनेनाडागमे "आटश्च" इत्यनेन वृद्धौ "च्लि लुङि" इत्यनेन च्लौ "च्लेः सिच्" इत्यनेन सिजादेशेऽनुबन्धलोपे ऊदित्वात् "स्वरतिसूतिसूयतिधूञूदितो वा" इत्यस्य वैकल्पिकत्वेन इटोऽप्रवृत्तौ "झलो झलि" इत्यनेन सलोपे "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इत्यनेन षत्वे "ष्टुना ष्टुः" इत्यनेन तकारस्य ष्टुत्वे च कृते "आष्ट" इति रूपं सिद्ध्यति ।

**प्रतिस्किरति**—प्रति इत्युपसर्गपूर्वकात् कृधातोर्लट्लकारे तिप्प्रत्ययेऽनुबन्धलोपे "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसंज्ञायाम् "कर्त्तरि शप्" इत्यनेन शपि प्राप्ते तं प्रबाध्य "तुदादिभ्यः शः" इत्यनेन श प्रत्ययेऽनुबन्धलोपे "ऋत इद्धातोः" इत्यनेन इत्वे रपरत्वे "हिंसायां प्रतेश्च" इत्यनेन सुडागमे च कृते 'प्रतिस्किरति' इति सिद्ध्यति ।

**संस्क्रियात्**—समुपसर्गात् कृधातोः "धातूपसर्गयोः कार्यमन्तरङ्गमिति" भाष्यसिद्धान्तात् प्रथमोपस्थितत्वाच्च 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेति' न्यायादन्तरङ्गत्वात् "सम्परिभ्यां करोतौ भूषणे" इत्यनेन सुटि उटावितौ ततो आशीर्लिङि तिपि अनुबन्धलोपे "यासुट् परस्मैपदेषूदात्तो ङिच्च" इति सूत्रेण यासुडागमे अनुबन्धलोपे "रिङ्शयग्लिङ्क्षु" इत्यनेन ऋतो रिङादेशेऽनुबन्धलोपे यासुटः सकारस्य च "स्कोः संयोगाद्योरन्ते च" इत्यनेन लोपे इतश्च "संस्क्रियात्" इति सिद्ध्यति ।

नन्वाशिर्लिङि धातोः संयोगादित्वात् "गुणोऽर्तिसंयोगाद्योः" इत्यनेन गुणः कुतो नेति चेत्सत्यम् । "गुणोर्तिसंयोगाद्योः" इति सूत्रे "नित्यं छन्दसि" इति सूत्रात् नित्यमित्यनुवर्त्तनात् 'नित्यं यः संयोगादिस्तस्य गुणो भवति' इत्यर्थात्सुटि गुणो नेति शम् ।

**एषिता**—आभीक्ष्णार्थकात् इष्धातोर्लुट्लकारे लुटस्तिपि अनुबन्धलोपे "स्यतासी ललुटोः" इत्यनेन तास्प्रत्यये "लुटः प्रथमस्य डारौरसः" इत्यनेन तिपो डादेशे डित्वसामर्थ्याट्टिलोपे "तीषसहलुभरुषरिषः" इत्यनेन इड्विकल्पमाशङ्क्य आह—तीषसहेति सूत्रे सहेति शपानिर्देशबलेन भौवादिक एवात्र सहधातुनिर्दिष्टः । तत्साहचर्यात् तौदादिकस्यैव इषेर्ग्रहणम्, शकारविकरणत्वसामान्यात् । नतु—इष्यतीष्णात्योरित्याहुः । तस्मादत्र "आर्धधातुकस्येड्वलादेः" इत्यनेन नित्यमिटि "पुगन्तलघूपधस्य च" इत्यनेन गुणे च कृते 'एषिता' इति सिद्ध्यति ।

**गालोडयते**—गालोडितम् = वाचां विमर्शः, तत्करोतीति विग्रहे—'गालोडित' इति प्रातिपदिकात् "श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च" इति गणसूत्रेण इत्शब्दस्य लोपे णिङ्प्रत्यये च कृतेऽनुबन्धलोपे "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लटि ङित्वादात्मनेपदे तप्रत्यये सार्वधातुकसंज्ञायां शपि च कृते गुणायादेशयोः टेरेत्वे च कृते 'गालोडयते' इति सिद्ध्यति ।

## २—प्रश्नोत्तराणि ।

"आख्यानात्कृतस्तदाचष्टे कृल्लुक्प्रकृतिप्रत्ययापत्तिः प्रकृतिवच्च कारकम्" इति । इदञ्च वार्तिकं "हेतुमति च" इति सूत्रे स्थितम् । अस्याम-

यमर्थः–आख्यानम् = वृत्तकथाप्रबन्धः । तद्वाचिनः कृदन्तात् कंसवधादिशब्दात् तदाचष्टे इत्यर्थे णिचि कृते णिच्प्रकृत्यवयवभूतस्य कृतः लुक्, तस्यैव कृतः या प्रकृतिः हनादिधातुरूपा, तस्याः प्रतिपत्तिः = आदेशादिविकारपरित्यागेन स्वरूपेणावस्थानं भवतीति तदर्थः । प्रकृतिवच्च कारकमित्यंशस्तु अग्रे व्याख्यास्यते ।

कंसवधमाचष्टे कंसं 'घातयति' इति तदुदाहरणम् । हननं वधः । "हनश्च वधः" इति सूत्रेण भावे हन्धातोः अप्प्रत्ययः प्रकृतेः वधादेशश्च । कंसस्य वधः कंसवधः, इत्यनेन तदन्वाख्यानपरवाक्यसन्दर्भो विवक्षितः । कंसवधमाचष्टे इति विग्रहे "तत्करोति तदाचष्टे" इत्यनेन णिच् । अप्प्रत्ययस्य च कृतो लुक् प्रकृतिभूतस्य हन्धातोर्वधादेशस्य च निवृत्तिः । तत्फलितमेव दर्शयति–"इह कंसं हन् + इ + इति स्थिते, "हनस्तोऽचिण्णलोः" इत्यनेन हनो नकारस्य तकारे "हो हन्तेर्ञ्णिन्नेषु" इति कुत्वेन हकारस्य घकारे घातीति ण्यन्तं फलितम् । ततो लटि 'घातयति' इति रूपं सिद्ध्यति । कृतो लुकि समासनिवृत्तौ सत्यां सुब्लुकोऽपि निवृत्तौ कंसमिति च स्थितम् ।

"आख्यानात् कृतस्तदाचष्टे कृल्लुक्प्रकृतिप्रत्ययापत्तिः प्रकृतिवच्च कारकम्।" इति वार्तिकस्थं प्रकृतिवच्च कारकमित्यंशं शङ्कोत्तरत्वेन योजयिष्यन् शङ्कामवतारयति–नन्वत्र = 'घातयति' 'अजीघतत्' इत्यादौ कंसवधशब्दादेव णिचो विधानात् कंसविशिष्टस्यैव अङ्गसंज्ञा धातुसंज्ञा च प्राप्ता ।

ननु कंसवधशब्दस्य अङ्गत्वे का हानिरित्यत आह—ततश्चाड्द्वित्वयोर्दोषः अयम्भावः—कंसवधशब्दस्याङ्गसंज्ञायाम् अड्द्वित्वयोर्विषये दोषः स्यात् । कंसशब्दात् पूर्वमडागमः स्यात् । कंस इत्यस्य द्विर्वचनं स्यात् । इष्यते तु—'कंसमजीघतत्', इत्येवं हन्धातोरेवोभयमित्यर्थः । किञ्च–कंसं घातयतीति कुत्वतत्त्वे न स्यातामिति । कुत इत्यत आह–धातोः स्वरूपग्रहणे तत्प्रत्ययकार्यविज्ञानात् । तेन वार्त्रघ्नमित्यत्र "हनस्तोऽचिण्णलोः" इति तत्वं न भवतीति प्रकृतिसूत्रे भाष्ये स्पष्टम् । अत्र च प्रकृते प्रत्ययलक्षणेन कृदन्ततया कृत्प्रकृत्यर्थस्य कर्मत्वेन कंसस्येति षष्ठी स्यादित्यप्याक्षेपो बोध्यः तत्परिहारस्यापि वक्ष्यमाणत्वात् ।

तामिमां शङ्कामर्थाङ्गीकारेण परिहरति–सत्यमित्यादिना । कंसवधशब्दस्यैवाङ्गत्वमित्याद्यङ्गीक्रियते दोषापादनं तु नाङ्गीक्रियत इति तदर्थः । 'आख्यानात् कृत' इत्यादिवार्तिके प्रकृतिवच्चेति चकारः भिन्नक्रमः प्रकृतिवदित्यनन्तरपठितः चकारः

कारकमित्यस्मादूर्ध्वं निवेशनीयः। तदेवाभिनीय दर्शयति—कारकं चेति। चात्कार्यम्, समुच्चीयत इति शेषः। तथा च कारकं कार्यं च प्रकृतिवदिति फलितम्। अत्र प्रकृतिशब्देन—हेतुमण्णिचः प्रकृतिर्विवक्षिता, व्याख्यानात्। प्रकृताविव प्रकृतिवत्। सप्तम्यन्ताद्वतिः। तथा च हन्ति कंसं कृष्णः तं प्रेरयतीत्यर्थे कंसं घातयति। कंसमजीघतदित्यादौ हेतुमण्ण्यन्ते प्रयुज्यमाने यत् द्वितीया-तृतीयादिकारकविभक्त्यन्तं यच्च कार्यं कुत्वतत्त्वाड्द्वित्वादि तत्सर्वम् '**आख्यानात् कृत'** इत्यस्योदाहरणे कंसवधमाचष्टे 'कंसंघातयति' कंसवधमाचष्टे '**कंसमजीघतव्**' इत्यादावपि भवतीति फलितम्। तत्र कारमित्यनेन कंसात्षष्ठी निरस्ता। उदाहृतहेतुमण्ण्यन्तस्थले कृद्योगाभावेन कर्मणि द्वितीयायाः एव सत्त्वात्। कार्यमित्यनेन तु कुत्वतत्त्वे कंसस्य अड्द्वित्वनिरासश्चेति फलितम्। आख्यानशब्दश्च कथञ्चिद्—वृत्तावनुवादपरः न तु भारतादिप्रसिद्धकंसवधादिकथापरः। तेन राजागमनमाचष्टे राजानमागमयतीत्यादि सिद्ध्यति। द्वितीयान्तमित्यत्र द्वितीया-ग्रहणमुपलक्षणम्। तेन पुष्ययोगमाचष्टे पुष्येण योजयतीति सिद्ध्यतीति भाष्ये स्पष्टमिति दिक्।

## ३—प्रश्नोत्तराणि

उब्जधातोः णौ चङि कृते '**औब्जिजत**' इति रूपम्। तत्र च—आर्जवार्थकोऽयं 'उब्ज'धातुरुपदेशे दकारोपधः। "**भुजन्युब्जौ पाण्युपतापयोः**" इति सूत्रेण निपातनात् दकारस्य वकारे निष्पन्नस्य 'उब्ज' धातोर्णिचि अनुबन्धलोपे "**सनाद्यन्ता धातवः**" इत्यनेन धातुसंज्ञायां तस्माल्लुङि तिपि "**च्लि लुङि**" इति च्लौ "**णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्**"इत्यनेन चङि अनुबन्धलोपे "**चङि**" इत्यनेन द्वित्वे कर्त्तव्ये अन्तरङ्गोऽपि वकारः दकारोच्चारणसामर्थ्यात् "**नन्द्राः संयोगादयः**" इति सूत्रेण निषेधे जिशब्दस्यैव द्वित्वे कृते पुनः प्रवर्त्तते। ततश्च "**लुङ्लङ्लृङ्क्ष्वडुदात्तः**" इत्यटि प्राप्ते अजादित्वात् आडागमे "**आटश्च**" इत्यनेन वृद्धौ "**णेरनिटि**" इति सूत्रेण णिलोपे "**इतश्च**" इतीकारलोपे '**औब्जिजत**' इति सिद्ध्यति।

जुधातोः णौ चङि कृते '**अजीजवत्**'इति रूपम्। तत्र जिधातोर्णिचि "**सनाद्यन्ता धातवः**" इत्यनेन धातुसंज्ञायां तस्माल्लुङि तिपि अनुबन्धलोपे "**लुङ्लङ्**

लृङ्लृङ्वदुदात्तः" इत्यनेन अडागमे "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इति चङि अनुबन्धलोपे अ + जु + इ + अ + त् इत्यवस्थायां वृद्ध्यवादेशद्वित्वेषु प्राप्तेषु द्वित्वे कर्त्तव्ये "द्विर्वचनेऽचि" इति सूत्रेण णिचि अजादेशस्य निषेधात् वृद्ध्यवादेशाभ्यां प्रागेव जु इत्यस्य द्वित्वे उत्तरखण्डस्य वृद्ध्यवादेशयोः कृतयोरुपधाह्रस्वे अभ्यासेऽकाराभावेन "सन्यतः" इत्यस्याऽप्रवृत्त्या सन्वद्भावात् "ओः पुयण्ज्यपरे" इत्यनेन इत्वे "दीर्घो लघोः" इत्यनेन दीर्घे च कृते 'अजीजवत्' इति सिद्ध्यति ।

'स्मि' धातोः णौ चङि 'असिष्मयत' इति रूपम् । तत्र च स्मिङ्धातोर्णिचि कृते अनुबन्धलोपे ङित्वस्यावयवेऽचरितार्थत्वाण्णिजन्तात्तङि "सनाद्यन्ताधातवः" इत्यनेन धातुसंज्ञायां लुङ्लकारे आत्मनेपदे तप्रत्यये णित्वाद्वृद्धौ अयादेशे च कृते स्मायि तइति जाते "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इत्यनेन चङि अनुबन्धलोपे "णौ चङ्युपधाया ह्रस्व" इत्यनेन ह्रस्वे "चङि" इत्यनेन द्वित्वे कर्त्तव्ये अजादेशस्य "द्विर्वचनेऽचि" इति निषेधात् स्थानिवद्भावेन 'स्मि' शब्दस्य द्वित्वेऽभ्याससंज्ञायाम् "शर्पूर्वाः खयः" इत्यनेन लोपे "णेरनिटि" इति णिलोपे 'असिष्मयत' इति सिद्ध्यति ।

ग्रह्धातोः सनि लटि प्रथमपुरुषैकवचने 'जिघृक्षति' इति रूपम् । तथा च-ग्रह्धातोः "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इत्यनेन सन्प्रत्यये-ऽनुबन्धलोपे सनः आर्धधातुकत्वात् "आर्धधातुकस्येड्वलादेः" इत्यनेन इट्प्राप्ते "सनिग्रहगुहोश्च" इति निषेधे "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लटि तिपि अनुबन्धलोपे च कृते "रुदविदमुषग्रहिस्वपि प्रच्छः संश्च" इत्यनेन सनः कित्वात् 'ग्रहिज्या वयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च' इत्यनेन सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे ह्कारादिणः परस्य सस्य षत्वं परत्वात्प्राप्तं तस्यासिद्धत्वात् हस्य ढत्वे "एकाचोबशोभष् झषन्तस्य स्ध्वोः" इत्यनेन भष्भावे "षढोः कः सि" इत्यनेन ढकारस्य ककारे सस्य षत्वे जश्त्वे "कुहोश्चुः" इति चुत्वे च कृते 'जिघृक्षति' इति सिद्ध्यति ।

अद्धातोः सनि लटि प्रथमपुरुषैकवचने 'जिघत्सति' इति रूपम् ।

तथा च अत्तुमिच्छतीति विग्रहे "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इत्यनेन सनि अनुबन्धलोपे "लुङ्सनोर्घस्लृ" इत्यनेन 'घस्लृ' आदेशे अनुबन्धलोपे सन आर्धधातुकत्वादिटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इतीण्निषेधे

"सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायाम् लटि तिपि अनुबन्धलोपे "सन्यङोः" इति द्वित्वे अभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे जश्त्वे चुत्वे च कृते सन्वद्भावे "सन्यतः" इत्यनेन इत्वे "सस्यार्धधातुके" इति सस्य तकारे 'जिघत्सति' इति सिद्ध्यति ।

इण् धातोः सनि लटि प्रथमपुरुषैकवचने गतौ 'जिगमिषति' इति । बोधने तु 'प्रतीषिषति' इति रूपद्वयम् ।

जिगमिषति—इत्यत्र गन्तुमिच्छतीति विग्रहे सन्प्रत्यये "सनि च" इति सूत्रेण इणो गमि भावे "सनाद्यन्ता धातवः" इति सूत्रेण धातुसंज्ञायां लटि तिपि अनुबन्धलोपे सन आर्धधातुकत्वादिटि "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे च कृते सन्वद्भावे "सन्यतः" इतीत्वे सस्य षत्वे "कुहोश्चुः" इत्यनेन चुत्वे 'जिगमिषति' इति सिद्ध्यति ।

बोधने तु—'णौ गमिरबोधने' इणो गम्यादेशाभावे इ सू इति जाते "अजादेर्द्वितीयस्य" इत्यनेन सनो द्वित्वे अभ्यासस्येत्वे प्रतिना सवर्णदीर्घे च कृते सकारद्वयस्यापि षत्वे 'प्रतीषिषति' इति रूपं सिद्ध्यति ।

## ४—प्रश्नोत्तराणि

अट् धातोर्यङि लटि प्रथमपुरुषैकवचने 'अटाट्यते' इति रूपम् ।

तथा च-अट्धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति सूत्रेण यङि अनुबन्धलोपे "अजादेर्द्वितीयस्य" इत्यनेन ट्यइत्यस्य द्वित्वे अभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे "दीर्घोऽकितः" इत्यनेन अभ्यासस्य दीर्घे "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लटि ङित्वादात्मनेपदे तप्रत्यये टेरेत्वे च कृते 'अटाट्यते' इति सिद्ध्यति ।

वञ्च् धातोर्यङि लटि प्रथमपुरुषैकवचने 'वनीवच्यते' इति रूपम् ।

तथाच—वञ्च्धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति सूत्रेण यङि कृते अनुबन्धलोपे "अनिदितां हल उपधायाः क्ङिति" इत्यनेन नलोपे "सन्यङोः" इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे "नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्" इत्यनेनाभ्यासस्य नीगागमेऽनुबन्धलोपे "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लटि ङित्वादात्मनेपदे तप्रत्यये टेरेत्वे च कृते 'वनीवच्यते' इति सिद्ध्यति ।

स्यम् धातोर्यङि लटि प्रथमपुरुषैकवचने 'सेसिम्यते' इति रूपम् । तथाच स्यम् धातोर्यङि "स्वपिस्यमिव्येञां यङि" इति सूत्रेण सम्प्रसारणे कृते सिम् इत्यस्य "सन्यङोः" इति सूत्रेण द्वित्वे कृते अभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे कृते "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लटि ङित्वादात्मनेपदे तप्रत्यये "टित आत्मनेपदानां टेरे" इत्यनेन टेरेत्वे 'सेसिम्यते' इति सिद्ध्यति ।

हन्धातोर्यङ्लुकि आशीर्लिङि 'वध्यात' इति रूपम् । तथाच—

हन् धातोः यङि यङ्लुगन्तप्रयुक्ते कार्ये जङ्घनित्यस्य धातुत्वे आशीर्लिङि "प्रकृति ग्रहणे यङलुगन्तस्य ग्रहणम्" इति परिभाषाबलात् "हनो वध लिङि" इति सूत्रेण जङ्घनित्यस्य वधादेशे लिङस्तिप्यनुबन्धलोपे "यासुट परस्मैपदेषूदात्तो ङिच्च" इति यासुडागमे उटावितौ "अतो लोपः" इत्यकारलोपे "इतश्च" इतीकारलोपे सलोपे 'वध्यात्' सिद्धम्—ननु कृतद्विर्वचनस्य हन्तेर्वधादेशे "सन्यङोः" इति पुनर्द्वित्वं कुतोनेत्याशङ्क्योत्तरयति—वधादेशस्य द्वित्वन्तु नभवतीति अयमभिप्रायः—"सन्यङो" इति द्वित्वविधायके सूत्रे "लिटिधातोरनभ्यासस्य" इत्यतोऽनभ्यासपदानुवृत्तौ सन्नन्तस्य यङन्तस्य चानभ्यास भिन्नप्रथमैकाचो द्वित्वमित्यर्थे वध्यादित्यत्र वधादेशस्य स्थानिवद्भावेनाभ्यासत्वान्नद्वित्वप्राप्तिः । नाभ्यासो यस्मिन् यस्य वेति बहुव्रीहावभ्यासपदस्य धातोः समानाधिकरणविशेषणत्वमाश्रित्य अनभ्यासस्येत्येतद्धातोः समानाधिकरण्येन विशेषणमित्यर्थः। प्रकृते च वधादेशस्य स्थानिवत्वेन साभ्यासत्वादभ्यासहीनत्वाभावान्न द्वित्वमिति शम् ।

ऋधातोर्यङ् लुकि लिङि प्रथमपुरुषैकवचने 'आरियात्' 'आरिप्रियात्' इति रूपे । तथा च—'आरियात्' इत्यत्र ऋधातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति यङि कृते तस्य च—"यङोऽचि च" इत्यनेन लुकि च कृते प्रत्ययलोपे प्रत्ययलक्षणतया "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायामाशीर्लिङि तिपि अनुबन्धलोपे यासुडागमेऽनुबन्धलोपे सलोपे च कृते ऋवर्णस्य रिङागमे अनुबन्धलोपे यणादेशे अर्रि यात् इत्यवस्थायां "रोरि" इत्यनेन रलोपे "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इत्यनेन दीर्घादेशे 'आरियात्' इति सिद्ध्यति । रिग्रीकोस्तु—'अरिऋयात्' अरी ऋयात् इति स्थिते ईवर्णस्येयङादेशे ऋकारस्य रिङादेशे कृते 'अरिप्रियात्' इति सिद्ध्यति ।

अत्र "लोपो व्योर्वलि" इति सूत्रेण यलोपस्तु न भवति, बहिरङ्गत्वेन रिङोऽसिद्धत्वात् "अचः परस्मिन् पूर्वविधौ" इति स्थानिवत्त्वाच्च। "न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु" इति सूत्रेण निषेधस्तु न शङ्क्यः। स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवदित्युक्तेरिति दिक्।

## ८—प्रश्नोत्तराणि

तिर्यञ्चमाख्यदित्यर्थे 'अतितिरायत्' इति रूपम्।

तथा च—तिरस् इत्यव्ययम्। तत्पूर्वादञ्चेः क्विन्प्रत्ययेऽनुबन्धलोपे "अनिदितां हल उपधायाः क्ङिति" इति नलोपे तिरस् अच् इत्यस्मात् णिचि प्रत्ययेऽनुबन्धलोपे टिलोपेन धातुनिवृत्तौ "तिरसस्तिर्यलोपे" इति तिरिभावे इकारस्य वृद्धावायादेशे 'तिरायि' इत्यस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लुङि तिपि अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे "च्लि लुङि" इति "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इति चङि अनुबन्धलोपे अतिरायि अत् इति जाते "टेः" इत्यनेन अचो धातोर्लोपे अकारस्यापि लोपे तिरेरग्लोपित्वादुपधाह्रस्वाभावे "चङि" इत्यनेन प्रथमस्यैकाचः तिशब्दस्य द्वित्वे "णेरनिटि" इत्यनेन णिलोपे 'अतितिरायत्' इति सिद्ध्यति।

नन्वत्र तिरसः पृथक्करणे सति धातोः 'प्रकृत्यैकाच्' इत्यनेन प्रकृति भावेन टिलोपो न स्यादिति वाच्यम्। तन्न तिरसित्यस्य कदाप्यनुपसर्गतया उपसर्गसमानाकारत्वाभावेन पृथक्करणाभावात्।

नन्वेवं सति अञ्चतेष्टिलोपेनापहारे सति अञ्चतिपरकत्वविरहात् कथमिह तिरसस्तिरिभाव इत्यत आह—अञ्चेष्टिलोपेनापहारेऽपि बहिर्भूतणिनिमित्तकत्वरूपबहिरङ्गत्वेनासिद्धत्वात्तिरसस्तिरिः।

नन्वथाप्यस्तु—तिरसस्तिरिः। तत्र रेफादिकारस्य टेरिति लोपः स्यादित्यत आह—"असिद्धवदत्राभादिति" अयम्भावः—तिरस् अच्+इ+इति स्थिते प्रथमप्रवृत्त अच् इत्येवं रूपं टेर्लोपः, तिरेः टिलोपे कर्त्तव्ये आभीयत्वेनासिद्धत्वादिति।

ननु प्रथमटिलोपस्य तिरेष्टिलोपे कर्त्तव्ये कथमसिद्धत्वम्, टिलोपशास्त्रस्य एकत्वादित्यत आह—चिणो लुङ्न्यायेनेति। अयम्भावः यथा—अपाचितरा-

मित्यत्र अपाचिततरामिति स्थिते 'चिणो लुक्' इत्यनेन प्रथमस्य तशब्दस्य लुकि कृते पुनस्तरप्प्रत्ययतशब्दस्य लुङ् न भवति, स्थानिभेदेन लुको भेदमाश्रित्य-प्रथमलुकः असिद्धत्वेन व्यवधानादिति। एवमिहापि चिणोलुङ्न्यायेन प्रथमटिलोपो ऽसिद्धः। अतः पुनष्टिलोपो नेत्याशंक्याह–अङ्गवृत्तपरिभाषया वा पुनष्टिलोपो नेति। न च तिरेरिकारस्य–'अङ्गवृत्तेर्पुनर्वृत्तावधिः' इति परिभाषया टेरिति लोपाभावे तिरा-ययतीति वृद्धिरपि तस्य न स्यादिति वाच्यम्। तन्न। अङ्गवृत्तपरिभाषायाः अनि-त्यत्वेन वृद्धिविषये तदप्रवृत्तेरिति दिक्।

वृद्धमाख्यदिति विग्रहे लुङि प्रथमपुरुषैकवचने 'अजज्यपत्' इति रूपम्। तथा च–वृद्धमाख्यदिति विग्रहे।

"तत्करोति तदाचष्टे" इत्यनेन णिचि कृते इष्ठवद्भावे तत्र इष्टे यथा प्राति-पदिकस्य "पुंवद्भावरभावटिलोप विन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्व-ण्णावपि स्युः" इति टिलोपे "वृद्धस्य च" इत्यनेन वृद्धशब्दस्य ज्यादेशे वृद्धौ "अ-तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ" इत्यनेन पुगागमे उगावितौ ज्यापीत्यस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लुङि तिपि इकारपकारयोरित्संज्ञायां लोपे च कृते "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे "च्लि लुङि" इति च्लौ "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इत्यनेन चङि कृतेऽनुबन्धलोपे "चङि" इत्यनेन द्वित्वे कृतेऽभ्याससंज्ञायाम् "ह्रस्वः" इत्यनेन ह्रस्वे "णेरनिटि" इति णिलोपे 'अजज्यपत्' इति रूपं सिद्धयति।

युवानमाख्यदिति विग्रहे लुङि पथमपुरुषैकवचने 'अचीकनत्' इति रूपम्। तथा च–युवानमाख्यदिति विग्रहे "तत्करोति तदाचष्टे" इति णिचि अनु-बन्धलोपे इष्ठवद्भावेन टिलोपे च कृते "युवाल्पयोः कनन्यतरस्याम्" इत्यनेन कनादेशे णित्वाद्वृद्धौ "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लुङ्लकारे तिपि अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे "च्लि लुङि" इति च्लौ "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इत्यनेन चङि अनुबन्धलोपे 'णौ चङ्यु-पधायाः ह्रस्वः" इत्यनेनोपधाह्रस्वे 'णेरनिटि" इति णिलोपे 'चङि' इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे 'कुहोश्चुः' इत्यभ्यासस्य कुत्वे "सन्वल्लघुनि,चङ्परेऽनग्लोपे' इत्यनेन सन्वद्भावे "सन्यतः" इत्यनेन इत्वे "दीर्घो लघोः" इत्यनेन दीर्घे च कृते 'अचीकनत्' इति रूपं सिद्धयति।

## ६—प्रश्नोत्तराणि ।

भूधातोर्यङि यङो लुकि च कृते प्रत्ययलोपे प्रत्ययलक्षणतया "सन्यङोः" इत्यनेन द्वित्वेऽभ्याससञ्ज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे च कृते "ह्रस्वः" इत्यनेन ह्रस्वे "अभ्यासे चर्च" इत्यनेन चर्त्वे "पुगन्तलघूपधस्य च" इत्यनेन गुणे बोभू इत्यस्य धातुसंज्ञायां लटि तिपि शपो लुकि च कृते बोभूति इति स्थिते "यङो वा" इत्यनेन विकल्पेनेडागमे बोभू ईति इति स्थिते ऊकारस्य गुणेऽवादेशे "बोभवीति" इति रूपं सिद्ध्यति ।

ननु "भूसुवोस्तिङि" इति गुणनिषेधशास्त्रस्य सत्त्वेन 'बोभवीति' इत्यत्र गुणादेशः कथमिति चेदत्रोच्यते—"भुसूवोस्तिङि" इति गुणनिषेधो यङ्लुकि भाषायां न भवति । 'बोभूतु तेतिक्ते' इति छन्दसि निपातनात् । अयम्भावः—"दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत् संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति च" इति सूत्रे "कृषेः छन्दसि" इति सूत्रात् 'छन्दसि' पदमनुवर्त्य भूधातोर्यङ्लुगन्तस्य गुणाभावो निपात्यते । "भूसुवोस्तिङि" इत्यनेनैव तत्र गुणनिषेधे सिद्धे गुणाभावनिपातनं नियमार्थम् । अयम्—"भूसुवोस्तिङि" इति गुणनिषेधो यङ्लुकि छन्दस्येव, नान्यत्र इति । अतो लोकेऽपि यङ्लुगस्तीति विज्ञायते । अत एव—'यङ्लुग्भाषायामपि सिद्धः' । "भूसुवोस्तिङि" इति सूत्रभाष्ये तु 'बोभूतु' इत्येतन्नियमार्थम् । अत्रैव—यङ्लुगन्तस्य गुणो न भवति, नान्यत्र क्व माभूत् 'बोभवीति' इत्युक्तम् । अत्रैवेत्यस्य 'बोभूतु' इति लोटयेवेत्यर्थः । यङ्लुगन्तस्येत्यस्य भूधातोरिति शेषः ।

वस्तुतस्तु—भाष्ये यङ्लुगन्तस्येति सामान्याभिप्रायकमेव । भूधातुमात्रसङ्कोचे मानाभावात् । 'बोभवीति' इत्युदाहरणन्तु धात्वन्तराणामपि प्रदर्शनपरमिति मूल दाशयः ।

ननु भूधातोर्यङ्लुकि 'बोभू' इत्यस्य "भूसुवोस्तिङि" इति गुणनिषेधप्रसक्तिर्नास्ति, द्वित्वे सति यङ्लुगन्तस्य 'बोभू' इत्यस्य प्रकृत्यन्तरत्वेन भूरूपत्वाभावात् । ततश्च—यङ्लुगन्तस्याप्राप्ते गुणाभावे तत्प्राप्त्यर्थमेव 'बोभूतु' इति निपातनमिति युक्तम् । तथा च—छन्दस्येव यङ्लुगन्तस्य गुणनिषेधः, न तु भाषायामिति

नियमः कथं सिद्ध्येदित्याशङ्क्य निराकरोति-'न च यङ्लुक्यप्राप्त एव गुणाभावो निपात्यताम्'इति वाच्यम्। तत्र "प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्" इति परिभाषया "भूसुवोस्तिङि" इत्यत्र भूग्रहणे न 'बोभू' इति यङ्लुगन्तस्यापि ग्रहणात्।

ननु पूर्वोक्तपरिभाषायां किं प्रमाणमित्याशङ्क्य न्यायसिद्धमिदमित्याह-'द्विः प्रयोगो द्विर्वचनं षाष्ठम्, इति भाष्यसिद्धान्तात्। अयम्भावः-षष्ठाध्यायस्थे "एकाचो द्वे प्रथमस्य"इति सूत्रे 'किमिदं द्विर्वचनम्, स्थान्यापेक्षया एकाचः प्रथमस्य एकस्य स्थाने द्वितयात्मक आदेश अन्यो विधीयते, उत, स्थानिन एकस्य सतः द्विरुच्चारणं विधीयते, नतु तत्स्थानिनः अतिरिच्यते इत्येवं संशयं विधाय "द्विः प्रयोगो द्विर्वचनम्"इति सिद्धान्तितम्। तदधिकारस्थत्वात् "सन्यङोः"इति द्विर्वचनमपि तथाविधमेव। ततश्च 'भू'इत्यस्यैव 'बोभू' इति द्विःप्रयुज्यमानतया "भूसुवोस्तिङि" इति भूग्रहणेन ग्रहणाद्यङ्लुक्यपि निषेधसिद्धेः 'बोभूतु' इति निपातनं छन्दस्येव यङ्लुकि गुणनिषेधः, नतु भाषायामपीति नियमाल्लोकेऽपि यङ्लुक् सिद्ध इति दिक्।

---

१९२८

२ पत्रम्।

१—वितिष्ठते, सङ्गच्छते, पराक्रमते, दिदृक्षते, निचिचिषते, एषु आत्मनेपदविधायकानि प्रदर्श्य क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः" इति सूत्रं सोदाहरणं व्याख्येयम्।

२—वास्तव्यः, जन्यम्, अवद्यम् कल्प्यम्, एषु के कृत्प्रत्ययास्तद्विधायकानि च कानि इत्युपदर्श्य 'ह्र चेति ह्रस्वः सुपठः' इति कारिका व्याख्येया।

३—ज्ञः, दावः, गायनः, बहुक्षमा, घटिन्धमः, एतेषां साधुत्वप्रक्रिया प्रकाशनीया।

४—क्षीणः, क्षामः, उन्नं, दितः, एषु दीर्घादिकार्यविधायकानि निरुप्य 'सम्पृचानुरुधाङ्यमाङित्यादिसूत्रस्वरूपमुच्यताम्।

५—रागः, शारः, नायः, प्रग्राहः, ग्लहः, हवः, श्वयथुः, इज्या,

अवतारः, ईषल्लभः, हित्वा, चर्मपूरम्, के कृत्यप्रत्ययाः पूर्वोक्त-प्रयोगेषु तद्विधायकानि च कानि इति सर्वं सूपपादनीयम्।

## १—प्रश्नोत्तराणि ।

वितिष्ठते—'वि' इत्युपसर्गपूर्वकात् स्थाधातोः "समवप्रविभ्यः स्थः" इत्यनेनात्मने पदे कृते 'वितिष्ठते' इति सिद्ध्यति ।

सङ्गच्छते—सङ्गतं भवतीत्यर्थे 'सम्' इत्युपसर्गपूर्वकात् गम्धातोः "समो गम्यृच्छिभ्याम्" इत्यात्मनेपदे कृते 'सङ्गच्छते' इति सिद्ध्यति ।

पराक्रमते—'परा' इत्युपसर्गपूर्वकात् क्रम्धातोः "उपपराभ्याम्" इति सूत्रेणात्मनेपदे कृते 'पराक्रमते' इति सिद्ध्यति ।

दिदृक्षते—द्रष्टुमिच्छतीत्यर्थे दृश्धातोः "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इत्यनेन सनि प्रत्यये सनन्तात् "ज्ञा श्रुस्मृदृशां सनः" इति सूत्रेणात्मनेपदे कृते 'दिदृक्षते' इति सिद्ध्यति ।

निविविक्षते—वेष्टुमिच्छतीत्यर्थे 'नि—वि' इत्युपसर्गपूर्वकात् विश्धातोः "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इत्यनेन सनि प्रत्ययेऽनुबन्धलोपे सनन्तात् "पूर्ववत्सनः" इत्यनेनात्मनेपदे कृते 'निविविक्षते' इति सिद्ध्यति ।

"क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः" 'पौनः पुन्ये भृशार्थे च द्योत्ये धातोर्लोट् स्यात्तस्य च हिस्वौ स्तः' तिङामपवादः । तौ च हिस्वौ क्रमेण परस्मैपदात्मनेपदसञ्ज्ञौस्तस्तिङ्सञ्ज्ञौ च । तध्वमोर्विषये तु हिस्वौ वा स्तः पुरुषैकवचनसञ्ज्ञे तु नानयोरतिदिश्येते हिस्वविधानसामर्थ्यात् । तेन सकलपुरुष-वचनविषये परस्मैपदिभ्यो हिः कर्तरि । आत्मनेपदिभ्यः स्वो भावकर्म्मकर्तृषु । 'याहि याहीति याति' पुनः पुनरतिशयेन वा यानं ह्यन्तस्यार्थः एककर्तृकं वर्तमानं यानं यातीत्यस्य इति शब्दभेदस्तत्रभेदान्वये तात्पर्यं ग्राहयति एवं यातः यान्ति यासि याथः याथ यात यातेति यूयं यात याहि याहीत्ययासीत् अयास्यद्वा अधीष्व अधीष्वेत्यधीते ध्वं विषये पक्षे अधीध्वमधीध्वमिति यूयमधीध्वम् । इत्याद्युदाहरणानि स्वयमेवज्ञातव्यानि ।

## २—प्रश्नोत्तराणि ।

वास्तव्यः—वसतीति विग्रहे "वसेस्तव्यत्कर्त्तरि णिच्च" इति वार्तिकेन

वस् धातोः तव्यत्प्रत्यये णित्सञ्ज्ञायाञ्च कृतेऽनुबन्धलोपे णित्वात् **"अत उपधायाः"** इत्यनेन वृद्धौ **"कृत्तद्धितसमासाश्च"** इत्यनेन प्रातिपदिकसञ्ज्ञायां सौ विभक्तौ रुत्वे विसर्गे च कृते **'वास्तव्यः'** इति सिद्धयति ।

**जन्यम्**—जनी प्रादुर्भावे इत्यस्माद्धातोः **"ऋहलोर्ण्यत्"** इत्यनेन ण्यत्प्रत्यये प्राप्ते तदपवादभूतेन **"तकिशसिचतियतिजनिभ्यो यद्वाच्यः"** इति वार्तिकेन यत्प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे **'जन्यम्'** इति सिद्धयति ।

**अवद्यम्**—२२ पृष्ठे द्रष्टव्यम् ।

**कल्प्यम्**—कल्पितुं योग्यमिति विग्रहे **"ऋदुपधाच्चाक्लृपिचृतेः"** इति सूत्रे **'अक्लृपिचृतेः'** इति पर्युदासात् यत्प्रत्ययाभावेऽपि **"ऋहलोर्ण्यत्"** इति सूत्रेण ण्यत्प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे **'कल्प्यम्'** इति सिद्धयति ।

**इचेति ह्रस्वः सुपठः**—दीर्घपठतः सूत्रकारस्यायमभिप्रायः, इ इ इति प्रश्लेषाद् द्वितीय इकारो **"ये विभाषा"** इत्यात्वबाधनाय अन्यथा ये इति विषयसप्तमी तेन यकारादौ प्रत्यये बुद्धिस्थे एव प्राप्तस्यान्तरङ्गत्वेन क्यपा सह विधानात् इकारस्य बहिरङ्गत्वेनात्वं दुर्वारं स्यादिति दीर्घस्य प्रत्याख्यानङ्कुर्वतो भाष्यकर्तुस्त्वयमभिप्रायः-क्यप् सन्नियोगशिष्टत्वादित्वमन्तरङ्गम्, ये इति परसप्तम्याश्रयणादात्वं बहिरङ्गम् तथाच युक्त एवाऽऽत्वस्येत्वेन बाधः न च ह्रस्वादेशे **"षत्वतुकोरसिद्धः"** इत्यनेन गुणस्यासिद्धत्वे तुगिति वाच्यम् पदान्तपदाद्योरेवैकादेशस्याऽसिद्धत्वात् एतदनङ्गीकारे वृक्षेच्छत्रमित्यत्र नित्यतुगापत्तिः स्यादिष्टस्तु वैकल्पिक इति प्राञ्चः । शेखरकृतस्तु-ये विभाषेत्यत्र ये इति विषयसप्तमीत्वेऽपि जनादिसाहचर्य्येण यादिप्रत्ययोत्पत्तिपूर्वकाले नान्तरस्यैवात्वविधानेन क्यबुत्पत्तेः प्रागेवेत्यनेनाऽत्र तदप्राप्त्या नस्येत्वे **"आद्गुणः"** इत्यनेन रूपसिद्धेः एतत् क्लेशवारणायैव दीर्घोच्चारणमित्याहुरिति ।

## ३—प्रश्नोत्तराणि ।

**ज्ञः**— जानातीति विग्रहे ज्ञा धातोः **"इगुपधज्ञाप्रीकिरः कः"** इति सूत्रेण कप्रत्यये ककारस्येत्सञ्ज्ञायां लोपे च कृते **"आतो लोप इटि च"** इत्यनेन आकारलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते **'ज्ञः'** इति रूपं सिद्धयति ।

दावः—दुनोतीति विग्रहे दुनोतेः "दुन्योरनुपसर्गे" इति सूत्रेण णप्रत्यये अनुबन्धलोपे णित्वात् "अचोऽञ्णिति" इत्यनेन वृद्धौ आवादेशे च कृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च 'दावः' इति रूपं सिद्ध्यति । अत्र "दुन्योरनुपसर्गे" इति सूत्रे सानुबन्धकनीञ्धातुसाहचर्यात् 'टुदु उपतापे' इति स्वादिगणस्थादेव णप्रत्ययः निरनुबन्धकात् 'दु द्रु गतौ' इति भौवादिकात् दवतेस्तु पचाद्यचि—'दवः' इति रूपम् ।

गायनः—इत्यत्र गैधातोः "ण्युट् च" इति सूत्रेण ण्युट्प्रत्ययेऽनुबन्धलोपे "युवोरनाकौ" इति सूत्रेण अनादेशे "आदेच उपदेशेऽशिति" इत्यात्वस्यानैमित्तिकत्वेन वृद्ध्यपेक्षया अन्तरङ्गत्वात् आत्वे कृते "आतो युक् चिण्कृतोः" इत्यनेन युगागमेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'गायनः' इति रूपं सिद्ध्यति ।

अत्र यद्यपि "गस्थकन् ण्युट् च" इत्येकमेव सूत्रमुचितम् । तथापि ण्युट एवोत्तरसूत्रे अनुवृत्त्यर्थो योगविभाग इति ।

बहुक्षमा—इत्यत्र "कर्मण्यण्" इति सूत्रेण अण्प्रत्यये प्राप्ते तदपवादभूतेन "ईक्षिक्षमिभ्यां च" इति वार्तिकेन णप्रत्ययेऽनुबन्धलोपे णित्वात्प्राप्ताया अपि वृद्धेः "नोदात्तोपदेशस्य मान्तस्यानाचमेः" इत्यनेन निषेधे विभक्तिकार्ये प्रातिपदिकत्वात्सौ सोर्लोपे "बहुक्षमा" इति सिद्ध्यति ।

घटिन्धमः—घटीं ध्मातीति विग्रहे "घटीखारीखरीषूपसंख्यानम्" इति वार्तिकेन खश्प्रत्ययेऽनुबन्धलोपे ह्रस्वे कृते "अरुर्द्विषदजन्तस्य मुम्" इत्यनेन मुमागमेऽनुबन्धलोपे च कृते प्रातिपदिकत्वे सौ रुत्वे बिसर्गे च "घटिन्धमः" इति सिद्ध्यति ।

## ४—प्रश्नोत्तराणि ।

क्षीणः—क्षिधातोः "क्तक्तवतू निष्ठा" इत्यनेन क्तप्रत्ययेऽनुबन्धलोपे क्षित इति जाते "निष्ठायामण्यदर्थे" इत्यनेन दीर्घे कृते "क्षियो दीर्घात्" इति सूत्रेण निष्ठातकारस्य नत्वे कृते ततो णत्वे च कृते कृदन्तत्वात् प्रातिपदिकत्वे सौ रुत्वे विसर्गे च 'क्षीणः' इति सिद्ध्यति ।

क्षामः—क्षै क्षये इत्यस्माद्धातोः "गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च" इति सूत्रेण कर्तरि क्तप्रत्ययेऽनुबन्धलोपे "क्षायो मः"

इत्यनेन निष्ठातकारस्य नकारादेशे "आदेच उपदेशेऽशिति" इत्यनेन आत्वे च कृते प्रातिपदिकत्वे सौ रुत्वविसर्गे च कृते 'ग्लानः' इति सिद्ध्यति ।

उन्नः—उन्दी क्लेदने इत्यस्माद्धातोः क्तप्रत्ययेऽनुबन्धलोपे उन्द त इति जाते "झरो झरि सवर्णे" इत्यनेन दकारस्य लोपे निष्ठातकारस्य च "नुद-विदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्" इत्यनेन विकल्पेन नकारादेशे क्तप्रत्यय-स्यार्धधातुकत्वात्–"आर्द्धधातुकस्येड्वलादेः" इत्यनेन इडागमे प्राप्ते तस्य च "श्वीदितो निष्ठायाम्" इत्यनेन निषेधे कृदन्तत्वात् प्रातिपदिकत्वे सौ रुत्व-विसर्गे च कृते 'उन्नः' इति सिद्ध्यति नत्वाभावे तु नस्य लोपे दस्य चर्त्वे च कृते 'उत्तः' इति ।

दितः—दोधातोः क्तप्रत्ययेऽनुबन्धलोपे "आदेच उपदेशेऽशिति" इत्या-त्वे "घुमास्थागापाजहातिसां हलि" इत्यनेन ईत्वे प्राप्ते "दोदद्घोः" इत्यनेन ददादेशे च प्राप्ते तौ प्रबाध्य "द्यतिस्यतिमास्थामित्ति किति" इत्यनेन इकारादेशे कृदन्तत्वात् प्रातिपदिकत्वे सौ रुत्वविसर्गे च कृते 'दितः' इति रूपं सिद्ध्यति ।

सम्पृचेति—"सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविस-ञ्ज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीड-विविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च" इति सूत्रस्वरूपम् ।

## ५—प्रश्नोत्तराणि ।

रागः—रञ्जधातोः "अकर्तरि च कारके संज्ञायाम्" इत्यनेन रञ्जधा-तोर्घञि तेऽनुबन्धलोपे "चजोः कु घिण्ण्यतोः" इत्यनेन कुत्वेन जस्य गत्वे "घञि च भावकरणयोः" इत्यनेन नलोपे कृते "अत उपधायाः" इत्यनेन वृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'रागः' इति सिद्ध्यति ।

शारः—'शॄ इत्यविभक्तिको निर्देशः तस्मात् करणे "शॄ वायुवर्णनिवृ-तेषु" इति वार्तिकेन घञि कृतेऽनुबन्धलोपे "अचोऽञ्णिति" इत्यनेन वृद्धौ रपरत्वे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'शारः' इति सिद्ध्यति ।

नायः—इत्यत्र णीधातोः "णो नः" इति धात्वादेर्णकारस्य नकारे "श्रिणी-भुवोऽनुपसर्गे" इत्यनेन घञ्प्रत्ययेऽनुबन्धलोपे "अचोऽञ्णिति" इत्यनेन

वृद्धौ "एचोऽयवायावः" इत्यनेन आयादेशे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'नायः' इति रूपं सिद्धयति ।

**प्रग्राहः**—इत्यत्र प्र उपपदे ग्रहधातोः "रश्मौ च" इति सूत्रेण घञ्प्रत्ययेऽनुबन्धलोपे उपधावृद्धौ च कृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते '**प्रग्राहः**' इति सिद्धयति ।

ग्लहः—इत्यत्र देवने जितवते पराजितेन देयं द्रव्यं पणम् । तेन रूपेण ग्राह्यं यद्द्रव्यं तस्मिन् कर्मणि 'ग्रह् उपादाने' इति धातोः "ग्रहवृदृनिश्चिगमश्च" इति सूत्रस्थपठितस्यैव "अक्षेषु ग्लहः" इति सूत्रेण अप्प्रत्ययान्तः कृतलत्वो ग्लहशब्दो निपात्यते इत्यर्थः । 'गृह्ल ग्रहणे' इत्यत्र तु 'ग्लह च' इति पठितम् । तत्र ग्लहे रपप्रत्ययो निपात्यते । ततश्च "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकसंज्ञायां सौ रुत्वे विसर्गे च कृते 'अक्षस्य ग्लहः' इति सिद्धयति ।

हवः—इत्यत्र "भावेऽनुपसर्गस्य" इति सूत्रेण अनुपसर्गस्य ह्वयतेः सम्प्रसारणं, वकारस्य उकारे, अप्प्रत्यये च कृते अनुबन्धलोपे "सम्प्रसारणाच्च" इति पूर्वरूपे, गुणेऽवादेशे च कृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'हवः' इति सिद्धयति ।

श्वयथुः—इत्यत्र 'टु-ओकार-इत्संज्ञक-श्वि-गतिवृद्धोः' इत्यस्माद्धातोः "ट्वितोऽथुच्" इत्यनेन अथुच्प्रत्यये अनुबन्धलोपे गुणेऽयादेशे च प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'श्वयथुः' इति सिद्धयति ।

**इज्या**—इत्यत्र यज् धातो "व्रजयजोर्भावे क्यप्" इति सूत्रेण क्यप्प्रत्ययेऽनुबन्धलोपे "वचिस्वपियजादीनां किति" इत्यनेन सम्प्रसारणे अदन्तत्वाट्टापि च कृते प्रातिपदिकत्वात्सौ सोर्लोपे 'इज्या' इति सिद्धयति ।

अवतारः—इत्यत्र अवेत्युपसर्गे उपपदे तॄधातोः "अवे तॄस्त्रोर्घञ्" इत्यनेन घञ्प्रत्यये अनुबन्धलोपे "अचोऽञ्णिति" इत्यनेन वृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'अवतारः' इति सिद्धयति ।

ईषल्लभः—ईषल्लब्धुं शक्य इति विग्रहे ईषदुपपदलभ्धातोः "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" इति खल् प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वे विभक्तिकार्य्ये 'ईषल्लभः' इति सिद्धम् ।

हित्वा—इत्यत्र धाधातोः क्त्वाप्रत्ययेऽनुबन्धलोपे "दधातेर्हिः" इति सूत्रेण 'धा' इत्यस्य 'हि' आदेशे प्रातिपदिकत्वात्सौ सोर्लुकि च कृते 'हित्वा' अथ च जहातेऽरपि क्त्वा प्रत्यये सति "जहातेश्च क्त्वि" इति सूत्रेणेत्वे 'हित्वेति' भवति ।

चर्मपूरम्—अत्र कर्मणि चर्मोपपदे पूरयतेः "चर्मोदरयोः पूरेः" इति सूत्रेण णमुलि अनुबन्धलोपे अव्ययत्वादिकार्ये 'चर्मपूरम्' इति साधुः ।

---

सन् १९२९

४ वर्षे १ पत्रम् ।

१—धत्तः, सञ्चस्करतुः, अपरेधतुः, भृज्यात्, अबान्धाम्, कुर्मः, स्तरिषीष्ट, अचिकीर्तत्—एषु कानिचित् पञ्चरूपाणि विशेषकार्योपन्यासपूर्वकं साधनीयानि ।

२—उपसर्गसमानाकारं पूर्वपदं धातुसञ्ज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते, इति ज्ञापितस्य फलमुपदर्श्य अस्य विशेषविषयत्वे भाष्यवार्तिकयोः प्रामाण्यं साधूपपाद्यताम् ।

अथवा—

अतुः, पाप्रष्ठः, चञ्चूर्यते, ज्ञीप्सति, औञ्जिजत्—एतेषां साधनप्रकारं सम्यक् वर्णयत ।

३—तृप्—प्रीणने इत्यस्य लुङि प्रथमपुरुषैकवचने, 'शद्लृ शातने' इत्यस्य लोटि मध्यमपुरुषैकवचने 'विद्लृ लाभे' इति धातोर्लटि उत्तमपुरुषैकवचने कानि रूपाणि भवन्ति, तेषु विशेषकार्याणि लिखत ।

४—"शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥
इमां कारिकां सोदाहरणं व्याख्याय,
प्राणिणत्, सपत्नीयते, अपप्रथत्, एतानि साधनीयानि ।

५—'श्रोः पुयणजीति सूत्रे पयोरिति वक्तव्ये वर्गप्रत्याहारजग्रहो लिङ्गम्' 'णिच्यच आदेशो न स्याद् द्वित्वे कार्ये', इति फक्कि

कां व्याख्याय, चिन्त्यते, असूषुपत्, कृष्णति, एतान् प्रयोगान् साधयत ।

## १—प्रश्नोत्तराणि ।

**धत्तः**—२ पृष्ठे द्रष्टव्यम् ।

**सञ्चस्करतुः**—सम्पूर्वकात् कृधातोर्लिटि 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन' इति, अयम्भावः—प्रथमोपस्थितत्वात् पूर्वोपनिपतितधातूपसर्गसम्बन्धनिमित्तकं कार्यं पश्चादनुपतिष्यद्धातुप्रत्ययसम्बन्धनिमित्तकात्कार्यादन्तरङ्गम्, तदुक्तं भाष्ये 'पूर्वं धातुरुपसर्गेणेति' कृत्वा 'धातूपसर्गयोः कार्यमन्तरङ्गम्' इति अन्तरङ्गत्वात्पूर्वं "सुट्कात्पूर्वः" इत्यनेन सुडागमेऽनुबन्धलोपे संस्कृइत्यस्माल्लिटः तसि अतुसि च कृते "लिटि धातोरनभ्यासस्य" इत्यनेन स्कृ इत्यस्य द्वित्वे उरदत्वे रपरत्वे "शर्पूर्वाः खयः" इति रेफसकारयोर्निवृत्तौ अभ्यासचुत्वे "ऋतश्च संयोगादेर्गुणः" इति गुणे सस्य रुत्वे विसर्गे च कृते 'सञ्चस्करतुः' इति सिद्ध्यति ।

**अपरेधतुः**—'अप' इत्युपसर्गपूर्वकात् 'राध' इत्यस्माद्धातोर्लिटि तसि अतुसि च कृते "लिटि धातोरनभ्यासस्य" इति द्वित्वे अभ्याससञ्ज्ञायां ह्रस्वे च विहिते "हलादिः शेषः" इत्यनेन लोपे च कृते "राधो हिंसायाम्" इत्यनेन एत्वाभ्यासलोपयोः सस्य रुत्वे विसर्गे च जाते 'अपरेधतुः' इति सिद्ध्यति । उपसर्गवशादिह हिंसायां वृत्तिः, अन्यत्र 'रराधतुः' इति ।

**भृज्यात्**—भ्रस्जधातोराशिर्लिङि तिपि अनुबन्धलोपे "यासुट् परस्मैपदेषूदात्तो ङिच्च" इत्यनेन यासुडागमे अनुबन्धलोपे भ्रस्ज + यास् + ति इति स्थिते यासुटः ङित्वात् "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इति सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे सकारस्य श्चुत्वेन शकारे शस्य जश्त्वेन जकारे 'भृज्यात्' इति रूपं सिद्ध्यति ।

**अवान्धाम्**—४ पृष्ठे द्रष्टव्यम् ।

**कुर्मः**—कृधातोर्लटि उत्तमपुरुषबहुवचने मसि सार्वधातुकसञ्ज्ञायां शपि "तनादिकृञ्भ्य उः" इत्युप्रत्यये "सार्वधातुकार्द्धधातुकयोः" इति गुणे च विहिते "अत उत्सार्वधातुके" इत्यकारस्योकारे "नित्यं करोतेः" इति प्रत्ययोकारलोपे च कृते सस्य रुत्वे विसर्गे "कुर्मः" इति सिद्ध्यति ।

**स्तरिषीष्ट**—आच्छादनार्थक 'स्तॄ' इत्यस्माद्धातोराशिर्लिङि आत्मनेपदे तप्रत्यये **"लिङः सीयुट्"** इति सीयुडागमेऽनुबन्धलोपे **"सुट् तिथोः"** इति सुटि च कृते उटावितौ द्वयोर्सकारयोः षत्वे ष्टुत्वे च कृते 'स्तृषीष्ट' इति स्थिते **"ऋतश्च संयोगादेः"** इति विकल्पेनेडागमे **"वॄतो वा"** इत्यनेन दीर्घे प्राप्ते **"न लिङि"** इति निषेधे **"गुणोऽर्ति संयोगाद्योः"** इत्यनेन गुणे च कृते **'स्तरिषीष्ट'** इति सिद्ध्यति । इडभावपक्षे—**"ऋत इद्धातोः"** इतीत्वे **"हलि च"** इति दीर्घे **'स्तीर्षीष्ट'** इति सिद्ध्यति ।

**अचिकीर्तत्**—संशब्दनार्थककृत् धातोश्चुरादित्वाण्णिचयनुबन्धलोपे लुङि तिपि अनुबन्धलोपे च्लौ **"णिश्रिद्रुस्रुभ्यः कर्तरि च"** इति च्लेश्चङि अनुबन्धलोपे **"उपधायाश्च"** इति सूत्रेण उपधायाः इत्वे रपरत्वे **"उपधायाश्च"** इति दीर्घे कीर्त्+इ+अ+ति इति जाते अकारस्यार्द्धधातुकत्वे **"चङि"** इति द्वित्वे अभ्यासत्वे हलादिः शेषे अभ्यासह्रस्वत्वे कुहोश्चुरिति चुत्वे चिकीर्त्+इ+अ+ति इति जाते **"लुङ्लङ्लृङ्क्ष्वडुदात्तः"** इत्यडागमेऽनुबन्धलोपे **"णेरनिटि"** इति णिलोपे **'इतश्च'** इति सूत्रेणेकारस्यलोपे **'अचिकीर्तत्'** इति सिद्धम् ।

## २—प्रश्नोत्तराणि ।

"**उपसर्गसमानाकारमिति**—ननु लङि मनश्शब्दात्प्रागटि कृते **'स्वमनायत'** इति वक्ष्यमाणमनुपपन्नम्, अङ्गस्य अड्विधानात् सुमनश्शब्दस्य समस्तस्यैव लङं प्रत्यङ्गत्वात् 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति न्यायादित्याशङ्क्याह—**'चुरादौ संग्रामे युद्धे इति पठ्यते'** ततश्च—क्वचित् सोपसर्गपाठबलादन्यस्मात् सोपसर्गादाचारक्विपि 'उपसर्गस्य न धातुसञ्ज्ञाप्रवेश' इति विज्ञायते इत्यर्थः ।

ननु चुरादौ 'सङ्ग्रामे'ति समस्तो धातुः, नतु सोपसर्गो ग्रामशब्दः । एवञ्चास्य प्रातिपदिकत्वाभावात् सोपसर्गात् क्विपि उपसर्गस्य न धातुसञ्ज्ञाप्रवेश इत्यत्र कथमिदं गमकमित्यत आह—'तत्र सङ्ग्राम इति प्रातिपदिकम्' इति । **"ग्रसेरा च"** इत्यौणादिके मन्प्रत्यये निष्पन्नस्य ग्रामशब्दस्य **"कृत्तद्धितसमासाश्च"** इत्यनेन प्रातिपदिकत्वम् । अव्युत्पत्तिपक्षे तु **"अर्थवदधातुरप्रत्ययः प्रातिपदिकम्"** इति प्रातिपदिकत्वम् ।

ननु चुरादावस्य पाठो धात्वधिकारविहितचौरादिकणिजर्थः । एवञ्च प्रातिपदिक-

त्वेन चुरादौ तस्य पाठो व्यर्थं इत्यत आह—तस्मात् 'तत्करोति तदाचष्टे' इति णिच् सिद्धः । अयम्भावः—तस्मात्, 'सङ्ग्राम' इति प्रातिपदिकात् चौरादिकणिजसम्भवेऽपि 'तत्करोति' इत्यर्थे णिच् सिद्ध इत्यर्थः ।

ननु "तत्करोति तदाचष्टे" इत्यनेनैव 'सङ्ग्राम' शब्दात् प्रातिपदिकाण्णिच्सिद्धेः किमर्थमिह चुरादौ तस्य पाठ इत्यत आह—'तत्सन्नियोगेनानुबन्ध आसज्यते' णिच्सन्नियोगेन अकारस्य इत्सञ्ज्ञकस्य अनुदात्तेत्वार्थकस्य आसञ्जनार्थं इत्यर्थः । नच मकारादकारस्य इत्सञ्ज्ञकत्वे अल्लोपस्य णिनिमित्तकत्वाभावाद् 'अससङ्ग्रामत' इत्यत्र "णौ चङ्युपधाया: ह्रस्वः" इत्युपधाह्रस्वः स्यादिति वाच्यम् । 'सङ्ग्राम' इत्ययं हि कथादित्वाददन्तः तस्मादकारो भिन्न एव अनुबन्धत्वेनासज्यते इत्यर्थः । एवञ्च णौ अतो लोपे सति णावल्लोपिन्नोपधाह्रस्वः । कथादित्वलक्षणादन्तत्वलाभायैवास्य चुरादौ पाठ इति भावः ।

ननु चुरादौ सङ्ग्रामशब्दस्य "तत्करोति तदाचष्टे" इति णिचि परे अस्त्वनुबन्धासङ्गः । तथापि आचारक्विपि 'उपसर्गस्य न धातुसञ्ज्ञाप्रवेश' इत्यत्र कथमस्य ज्ञापकतेत्यत आह—'युद्धे योऽयं ग्रामशब्द, इति । अर्थात् ग्राम युद्धे इत्येतावतैव सङ्ग्रामशब्दो लभ्यते, केवलस्य ग्रामशब्दस्य युद्धे प्रयोगाऽभावात् सामर्थ्यादेव सङ्ग्रामशब्दे लब्धे 'सङ्ग्राम' शब्दपाठः ज्ञापयति—"उपसर्गसमानाकारं पूर्वपदं धातुसञ्ज्ञाप्रयोजके प्रत्यये क्विबादौ चिकीर्षिते पृथक् क्रियते" इति तथा च न तस्य धातुसञ्ज्ञाप्रवेश इत्यर्थः । ततः किमित्यत आह—तेन 'सम्' इत्यस्य धातुसञ्ज्ञाप्रवेशाभावेन सुमनश्शब्दात् आचारक्विपि विवक्षिते मनश्शब्दमात्रस्य धातुत्वात्ततो लङि मनश्शब्दस्यैवाङ्गत्वात्ततः प्रागेव अट् । नतु 'सुमनस्' इति समुदायात्प्रागित्यर्थः । तेन 'सुअमनायत' इत्यस्य सिद्धिः । एतेन सङ्ग्रामयतेरेव सोपसर्गात् नान्यस्मादित्यादिभाष्यं "भृशादिभ्यः" इति सूत्रस्थं व्याख्यातमिति शम् ।

अथवा—

अतुः—अः विष्णुः, स इवाऽऽचरणकर्तुरिति विग्रहे "सर्वप्रातिपदिकेभ्यः क्विबा वक्तव्यः" इति वार्तिकेन क्विपि अनुबन्धलोपे धातुसञ्ज्ञायां लिटि अनुबन्धलोपे तसि तस्य अतुसि च कृते अ अतुस् इति स्थिते "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्याससञ्ज्ञायाम् "अतो गुणे" इति पररूपे

"अत आदेः" इति दीर्घे "आतो लोप इटि च" इत्याकारस्य लोपे सस्य रुत्वे विसर्गे च विहिते 'अतुः' इति सिद्ध्यति।

**पाप्रष्टः**—पृच्छतेर्यङि यङ्लुकि यङ्लुगन्तप्रयुक्तकार्य्यनिष्पन्नात् 'पाप्रच्छ' इत्यस्माद्धातोर्लटि तस्प्रत्यये "च्छ्वोः शूडनुनासिके च" इति च्छस्य शत्वे "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति षत्वे तकारस्य ष्टुत्वे च विहिते सस्य रत्वे विसर्गे च कृते "पाप्रष्टः" इति सिद्धयति।

**चञ्चूर्यते**—३१ पृष्ठे द्रष्टव्यम्।

**ज्ञीप्सति**—'मारणतोषणनिशामनेषु विद्यमानात् 'ज्ञा' इत्यस्माद्धातोर्हेतुमण्णौ पुकि घटादित्वेनास्य मित्वादुपधाह्रस्वे ज्ञपीति ण्यन्तः, "ज्ञप मिच्चे"ति पकारान्तश्चौरादिकश्चोभयविधादपि 'ज्ञपि' इत्यस्मात् सनि इडभावपक्षे णेः परस्य सनः "इको झल्" इति कित्वाद्गुणाभावे "अज्झनगमां सनि" इति दीर्घं प्रबाध्य परत्वाद् णेर्लोपे "आप्ज्ञप्यृधामीत्" इतीत्वे 'ज्ञीप्' इत्यस्य "सन्यङोः" इति द्वित्वेऽभ्याससञ्ज्ञायां "हलादिः शेषः" इति लोपे "अत्र लोपोऽभ्यासस्य" इत्यनेनाभ्यासलोपे 'ज्ञीप्सति' इति सिद्धयति।

**औञ्जिजत्**—४३ पृष्ठे द्रष्टव्यम्।

## ३—प्रश्नोत्तराणि।

'तृप् प्रीणने' इत्यस्माद्धातो लुङि प्रथमपुरुषैकवचने 'अतर्पीत्' 'अताप्र्सीत्' 'अत्राप्सीत्' 'अतृपत्' इति रूपचतुष्टयम्।

**अतर्पीत्**—तृप्धातोर्लुङि तिबादिकार्ये अडागमे च्लौ "च्लेः सिच्" इति सिजादेशम्प्रबाध्य इचावितो "स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः" इति विकल्पेन सिजादेशे इचावितौ "रधादिभ्यश्च" इति विकल्पेनेडागमे तत ईडागमे च कृते "इट ईटि" इति सलोपे "वदव्रजहलन्तस्याचः" इति प्राप्तायाः वृद्धेः "नेटि" इति निषेधे लघूपधगुणे सवर्णदीर्घे च विहिते "अतर्पीत्" इति रूपं सिद्धयति। इडभावे हलन्तलक्षणावृद्धौ 'अताप्र्सीत्' इति। "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" इत्यम्पक्षे—'अत्राप्सीत्' इति। "पुषादिद्युताद्य्लृदितः परस्मैपदेषु" इत्यङि कृते ङित्वाद्गुणाभावे 'अतृपत्' इति च रूपम्।

'शद्लृ शातने' इत्यस्य लोटि मध्यमपुरुषैकवचने **शीयस्व** इति रूपम् तथाहि—शातनार्थक शद्लृधातोरनुबन्धस्य लोपे लोटि "शदेः शितः" इत्यात्मनेपदे ततो थास् प्रत्यये से आदेशे शपि अनुबन्धलोपे सार्वधातुकत्वे "पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः" इत्यनेन शद् इत्यस्य शीयाऽऽदेशे "सवाभ्यां वामौ" इति एकारस्य वकारादेशे 'शीयस्व' इति ।

'विद्लृ लाभे' इत्यस्माद्धातोर्लटि उत्तमपुरुषैकवचने "विन्दामि" इति, आत्मनेपदे "विन्दे" इति च ।

विन्दामि—लकारेत्संज्ञक विद्धातोर्लटि उत्तमपुरुषैकवचने परस्मैपदे मिपि इकारपकारयोरित्सञ्ज्ञायां लोपे च कृते सार्वधातुकसञ्ज्ञायां शपि प्राप्ते "तुदादिभ्यः शः" इति शप्रत्यये शकारस्येत्सञ्ज्ञायां लोपे च कृते "शे मुचादीनाम्" इति सूत्रेण नुमि उभावितौ दीर्घे च कृते "विन्दामि" इति सिद्ध्यति । आत्मनेपदे च उत्तमपुरुषैकवचने इट्प्रत्यये अनुबन्धलोपे "तुदादिभ्यः शः" इति शप्रत्ययेऽनुबन्धलोपे "शे मुचादीनाम्" इति नुमि कृते उभावितौ गुणे च विहिते 'विन्दे' इति सिद्ध्यति ।

## ४—प्रश्नोत्तराणि ।

"शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ।
सरूपः प्रत्ययो नेष्टः सन्नतान्न सनिष्यते" ॥

इति सन्विधायकसूत्रस्थमिदं वार्तिकम् । शैषिकात्सरूपः शैषिकः सरूपः प्रत्ययो न भवतीति तदर्थः । तेन—शालायां भवः 'शालीयः' "वृद्धाच्छः" । शालीये भव इत्यर्थे 'शालीय' शब्दात् पुनः छो नेत्यर्थः । किन्तु शालीये भव इति वाक्यमेव सरूप इति किम् अहिच्छत्रे भव इति विग्रहे आहिच्छत्रशब्दो भवार्थे अणन्तः । ततो भवार्थे "वृद्धाच्छः" इति छ एव भवति, नतु पुनरणिति ।

तथा मत्वर्थात्सरूपः स न । 'धनवानस्यास्ति' । इह मतुबन्तान्मतुब् न । विरूपस्तु स्यादेव । 'दण्डिमती' शाला ।

ननु 'जुगुप्सिषते' इत्यादौ कथं सन्नन्तात् सन्निष्यत आह—सरूप इत्यनुषज्यते । सन्नन्तान्न सनिष्यते इत्यत्रापि सरूप इत्यनुषज्यते इत्यर्थः ।

नन्वेवमपि 'जुगुप्सिषते' इत्यत्र सरूपस्य सनः कथं प्रवृत्तिरित्यत

आह—अर्थद्वारेति । शब्दतो वैरूप्यस्यासम्भवादर्थद्वारकमेव सारूप्यं विवक्षितम् । तेन इच्छासन्नन्तादिच्छासन्नेति लभ्यते । स्वार्थसन्नन्तात्तु इच्छासन् भवत्येवेत्यर्थः । 'जुगुप्सिषते' 'मीमांसिषते' इति शम् ।

प्राणिणत्—७ पृष्ठे द्रष्टव्यम् ।

सपतीयते—समानः पतिः स्वामी यस्याः इति बहुव्रीहौ सपतिशब्दस्य "पत्युर्नो यज्ञसंयोगे" इति सूत्रेण नत्वे ङीपि च निष्पन्नात् सपत्नीशब्दात् क्यङि पुंवत्वेन ङीब्नत्वयोर्निवृत्तौ दीर्घे च कृते "सपतीय" इत्यस्य "सनाद्यन्ता धातवः" इति धातुसंज्ञायां लटि आत्मनेपदे तप्रत्यये टेरेत्वे च कृते "सपतीयते" इति सिद्ध्यति ।

अपप्रथत्—'प्रथ्' इत्यस्माद्धातोर्णिचि अनुबन्धलोपे "सनाद्यन्ता धातवः" इत्यनेन धातुसञ्ज्ञायां लुङि तिपि इकारपकारयोरित्संज्ञायां लोपे च कृते अडागमे "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायाम् "हलादिः शेषः" इत्यभ्यासलोपे "च्लि लुङ्" इति च्लौ "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इत्यनेन च्लेश्चङि अनुबन्धलोपे "सन्यतः" इतीत्वे प्राप्ते तदपवादभूतेन "अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्" इत्यनेनाभ्यासस्याकारान्तादेशे "णेरनिटि" इति णिलोपे संयोगे परे गुरुत्वात् "दीर्घो लघोः" इत्यस्याप्रवृत्तौ संयोगे च "अपप्रथत् इति सिद्ध्यति ।

## ५—प्रश्नोत्तराणि ।

"ओः पुयण्ज्यपरे" इति सूत्रे—पयशोरिति वक्तव्ये इति १६ पृष्ठे द्रष्टव्यम् ।

चिन्त्यते—स्मृतार्थक 'चिति' इत्यस्माद्धातोर्णिचि कृतेऽनुबन्धलोपे धातुस्थेकारस्येत्संज्ञायां लोपे च कृते इदित्वान्नुमि उभावितौ "सनाद्यन्ता धातवः" इति धातुसंज्ञायां लटि आत्मनेपदे तप्रत्यये "सार्वधातुकार्धधातुकयोः" इति गुणे अयादेशे च कृते "णेरनिटि" इति णिलोपे "अतो लोपः" इत्यकारस्य लोपे टेरेत्वे च विहिते 'चिन्त्यते' इति सिद्ध्यति ।

असूषुपत्—स्वप्धातोर्णिचि अनुबन्धलोपे णित्वादादिवृद्धौ 'स्वापि' इत्यस्य "सनाद्यन्ता धातवः" इति धातुसंज्ञायां लुङि तिपि अडागमे च कृतेऽनुबन्धलोपे "च्लि लुङि" इति च्लौ "च्लेः सिच्" इति प्राप्ते "णिश्रिद्रुस्रुभ्यः

कर्तरि चङ्" इत्यनेन च्लेश्चङि कृतेऽनुबन्धलोपे असवाप् इ अ त् इति जाते "णेरनिटि"इति णिलोपे "णौ चङ्युपधाया ह्रस्वः"इति ह्रस्वे ततः "चङि" इत्यनेन द्वित्वे "स्वापेश्चङि" इत्यनेन सम्प्रसारणे च प्राप्ते "सम्प्रसारणं तदाश्रय च कार्यं बलवत्" इति वचनात् पूर्वं कृते सम्प्रसारणे ततो द्वित्वेऽभ्याससंज्ञायां लोपे च विहिते "सम्प्रसारणाच्च" इति पूर्वरूपे "सन्वल्लघुनिचङ्परेऽनग्लोपे" इति सन्वद्भावे "दीर्घो लघोः" इति दीर्घे षत्वे च विहिते 'असूषुपत्' इति सिद्ध्यति ।

कृष्णति—कृष्ण इवाचरतीति विग्रहे "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" इत्यनेन क्विप्प्रत्ययेऽनुबन्धलोपे "सनाद्यन्ताः धातवः" इति धातुसंज्ञायां लटि तिपि सार्वधातुकत्वे अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि च कृतेऽनुबन्धलोपे "अतो गुणे" इति पररूपे च विहिते "कृष्णत" त सिद्ध्यति ।

---

१९२९

२ पत्रम्

१—शास्त्रे वदते, सम्प्रवदन्ते खगाः, शुश्रूषते, एष्वात्मनेपदविधायकानि सूत्राणि दर्शयित्वा "णेरणौ यत्कर्म्मणौ चेत्स कर्त्ताऽनाध्याने" सूत्रमिदमुदाहरणप्रदर्शनपूर्वकं व्याख्यायताम् ।

२—प्रकृतस्य "मितां ह्रस्वः" इति सूत्रेण विहितस्य ह्रस्वस्यात्र विकल्पविधानेनैवेष्टसिद्धेश्चिण्णमुलोर्दीर्घोऽन्यतरस्यामित्यनेन वैकल्पिकदीर्घविधानस्य फलं सम्यगुपपादय ।

३—प्रभानीयम्, वध्यः, अवद्यम्, उद्धयः, पुष्यः, एतान् प्रयोगान् साधय ।

४—वाचंयमः, अरिन्दमः, दार्वाघाटः, आढ्यङ्करणम्, एते धातुप्रत्ययविग्रहप्रदर्शनपूर्वकं प्रसाध्याः ।

५—क्रिया, मृगया, मृजा, वेदना, एतान्प्रसाध्य "अन्यथैवंकथमित्थंसुसिद्धाप्रयोगश्चेत्" समूलाकृतजीवेषु हन्कृञ्ग्रहः" इत्यनयोः सूत्रयोरुदाहरणानि प्रदर्शनीयानि ।

## १—प्रश्नोत्तराणि ।

**शास्त्रे वदते**—नव नव युक्तीरुल्लिखतीत्यर्थे **"भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः"** इति सूत्रेणात्मनेपदे **'शास्त्रे वदते'** इति सिद्ध्यति । व्यवहरतीति तदर्थः । व्यवहारश्च ज्ञानं विना न सम्भवतीति ज्ञानमार्थिकम् । ज्ञात्वा व्यवहरतीति फलितम् ।

**सम्प्रवदन्ते खगाः**—मनुष्यादीनां सम्भूयोच्चारणे वदेरात्मनेपदं स्यादित्यर्थकेन **"व्यक्तवाचां समुच्चारणे"** इति सूत्रेणात्मनेपदे विधीयमाने **"सम्प्रवदन्ते ब्राह्मणाः"** इति सिद्ध्यति । मनुष्यकर्तृकसम्भूयोच्चारणाभावेनात्मनेपदाभावात् **"सम्प्रवदन्ति खगाः"** इत्येव भवति ।

**शुश्रूषते**—इत्यत्र **"ज्ञाश्रुस्मृदृशां सनः"** इत्यात्मनेपदे कृते **'शुश्रूषते'** इति सिद्ध्यति ।

**"णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने"** इति । इह सूत्रे चत्वार्यवान्तरवाक्यानि । तत्र 'णेरिति प्रथमं वाक्यम्' । **"प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्"** इति परिभाषया णेरिति तदन्तग्रहणम् । आत्मनेपदमित्यधिकृतम् । तदाह—ण्यन्तादात्मनेपदं स्यादिति । 'अणौ यत् कर्म णौ चेदिति द्वितीयं वाक्यम् । **"कर्त्तरि कर्मव्यतिहारे"** इति वत्कर्मशब्दोऽत्र क्रियापरः । यत्तदोर्नित्यसम्बन्धात् तदिति लभ्यते । तथाच अणौ या क्रिया सा ण्यन्ते चेदिति लभ्यते । एवं सति **'पचति' 'पाचयति'** इत्यादौ सर्वत्र अणौ क्रियाया ण्यन्ते अवश्यं सत्वाद्वाक्यमिदमनर्थकम् । तस्मादणौ या क्रिया सैव ण्यन्ते चेदित्येवकारो लभ्यते । ततश्च द्वितीयवाक्यस्य फलितमाह—'अणौ या क्रिया सैव चेण्ण्यन्तेनोच्यत इति स कर्त्तेतितृतीयं वाक्यम् । 'अत्र अणौ यत्कर्म णौ चेदित्यनुवर्तते । कर्मशब्दोऽत्र कारकविशेषपरः । शब्दाधिकाराश्रयणात् । तदेतदाह—अणौ यत्कर्मकारकं सचेण्णौकर्त्ता स्यादिति । अत्र तच्छब्दस्य विधेयसमर्पककर्तृशब्दानुसारेण पुंलिङ्गता ज्ञेया, 'शैत्यं हि यत्सा प्रकृतिर्जलस्य, इति वत् । अथ **'अनाध्याने'** इति चतुर्थं वाक्यं व्याचष्टे—**'न त्वाध्याने'** इति । आध्यानमुत्कण्ठापूर्वकं स्मरणम् । तत्र नात्मनेपदमिति प्रसज्यप्रतिषेधोऽयमिति मन्यते । वस्तुतस्तु आध्याने आत्मनेपदं पर्युदास एवायम् । 'न त्वाधाने' इति मूलं तु फलितार्थकथनपरमेव । तथा च आध्यानभिन्नेऽर्थे विद्यमानात् ण्यन्ता-

-दात्मनेपदं स्यादित्येवं प्रथमवाक्य एव 'आध्याने' इत्यस्यान्वयात् त्रीण्येवात्रा-वान्तरवाक्यानीति युक्तम् । वाक्यत्रयमित्येव च भाष्ये दृश्यते ।

ननु "णिचश्च" इत्येव सिद्धे किमर्थमिदं सूत्रमित्यत आह—अकर्त्रभिप्राया-र्थमिदम् । परगामिन्यपि फले आत्मनेपदार्थमिति तदर्थः । कर्त्रभिप्राये तु "विभाषोपपदेन प्रतीयमाने" इति विकल्पे "अणावकर्मकाच्चित्तवत्कर्तृ-कात्" इति परस्मैपदे च परत्वात्प्राप्ते पूर्वविप्रतिषेधेनेदमेवेष्यते ।

ननु दर्शनविषयो भवतीत्यर्थे 'दर्शयते भवः' इत्यत्र वस्तुतो दर्शनकर्मीभू-तस्यैव भवस्य कर्तृत्वविवक्षायां तस्य "कर्मवत्कर्मणा तुल्यक्रियः" कर्मवद्भावात् "भाव-कर्मणोः" इत्यात्मनेपदसिद्धेः "णेरणौ" इति सूत्रं व्यर्थमित्यत आह—"कर्तृस्थ-भावकाः, कर्तृस्थक्रियाश्चोदाहरणम् । तथाहि—'पश्यन्ति भवं भक्ताः' इति । अयम्भावः । प्रथमावस्थायाम् 'भक्ताः पश्यन्ति' भवः प्रेरयतीत्यर्थे—'भक्ताः भवं पश्यन्ति' चाक्षुषज्ञानविषयं कुर्वन्तीति तदर्थः । ततो द्वितीयावस्थायां प्रेरणांश-त्यागे 'किम्—'भक्ताः भवं पश्यन्ति' भवः स्वयमेव पश्यति । विषयो भवतीति तदर्थः । ततः तृतीयकक्षायाम्—'भक्ताः पश्यन्ति' भवः प्रेरयतीत्यर्थे हेतुमण्णिचि कृते 'भक्ताः भवं दर्शयन्ति' इति रूपं सम्पद्यते । पश्यन्तीति तदर्थः । ततः चतुर्थकक्षायाम् किम् 'भक्ताः भवं दर्शयन्ति' भवः स्वयमेव 'दर्शयते' । अत्र ण्यर्थस्याविवक्षायां प्रकृतसूत्रेण आत्मनेपदे विहिते तत्सिद्ध्यति । इह 'प्रथमतृती-ययोरवस्थयोर्द्वितीयचतुर्थ्योश्च तुल्योऽर्थः । तत्र तृतीयकक्षायां न तङ्, 'क्रिया-साम्येऽप्यणौ कर्मकारकस्य णौ कर्तृत्वाऽभावात्' । चतुर्थ्यां तु तङ् । द्वितीयामादाय क्रियासाम्यात् । प्रथमायां कर्मणो भवस्येह कर्तृत्वाच्च । एवम्—'आरोहयते हस्ती' इत्यपि बोध्यमिति शम् ।

## २—प्रश्नोत्तराणि ।

'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इत्यनेन विकल्प दीर्घविधानस्य फलम् १२ पृष्ठे द्रष्टव्यम् ।

## ३—प्रश्नोत्तराणि ।

प्रभाणीयम्—प्रोपसर्गपूर्वकात् भाधातोः "तव्यत्तव्यानीयरः" इत्यनेन अनीयर्प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे च विहिते "कृत्यचः"

इत्यनेन प्राप्तणत्वस्य "नभाभूपूकमिगमिप्यायीवेपाम्" इति निषेधे "प्रभानीयम्' इति सिद्धयति ।

वध्यः—हन्तुमर्हं इति विग्रहे हन्धातोर्यद्वा स्यात्, प्रकृते र्वधादेशश्चेत्यर्थकेन "हनो वा वधश्च वक्तव्यः" इति वार्तिकेन यत्प्रत्यये वधादेशे च कृते अनुबन्धलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते "वध्यः" इति सिद्धयति ।

अवद्यम्—२२ पृष्ठे द्रष्टव्यम् ।

उद्ध्यः—उज्झत्युदकमिति विग्रहे उज्झधातोः "भिद्योद्ध्यौ नदे" इति सूत्रेण क्यप्प्रत्यये उज्झे धंकारे च कृते अनुबन्धलोपे उदक् इत्यस्य उदादेशे च कृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'उद्ध्यः" इति सिद्धयति ।

पुष्यः—२३ पृष्ठे द्रष्टव्यम् ।

## ४—प्रश्नोत्तराणि ।

वाचंयमः—वाचं यच्छतीति विग्रहे वाक्छब्द उपपदे यम्धातोः "वाचि यमो व्रते" इति सूत्रेण खच्प्रत्ययेऽनुबन्धलोपे सुपो लुकि च कृते वाचः "वाचंयमपुरन्दरौ च" इति निपातनात् अम् च कृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते "वाचंयमः" इति सिद्धयति ।

अरिन्दमः—अरिन् दाम्यतीति विग्रहे "सञ्ज्ञायां भृतॄवृजिधारिसहितपिदमः" इत्यनेन खच्प्रत्यये अनुबन्धलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च विहिते 'अरिन्दमः' इति सिद्धयति ।

उक्तसूत्रे—'दमिः शमनायाम्' इति अयम्भावः—'दमु उपशमे' इति धातुपाठे उपशमशब्दे शमेर्ण्यन्तात् घञ् । तथाच—दाम्यतीत्यस्य उपशमयतीत्यर्थोश्रयणात् सकर्मकत्वमिति माधवादिमते सकर्मकोऽयमित्यर्थः । मतान्तरे तु—अन्तर्भावितण्यर्थोऽत्र दमिः । अर्थात्—'दमु उपशमे' इत्युपशमार्थस्य दमेरकर्मकत्वमिति हरदत्तादिभिरुक्तमित्यर्थः ।

दार्वाघाटः—इत्यत्र दारौ आ समन्तात् हन्तीति विग्रहे "दाराावाहनोऽणन्तस्य च टः सञ्ज्ञायाम्" इति वार्तिकेन दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेः अण्प्रत्यये अन्त्यस्य टकारे च विहिते अनुबन्धलोपे णित्वाद्वृद्धौ "चजोः कु घिण्ण्यतोः" इति कुत्वे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'दार्वाघाटः' इति सिद्धयति ।

आढ्यङ्करणम्—न आढ्यमनाढ्यम्, अनाढ्यमाढ्यं कुर्वन्त्यनेनेति विग्रहे—"करणाधिकरणयोश्च" इति ल्युटि प्राप्ते तदपवादभूतेन "आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्" इति सूत्रेण ख्युन्प्रत्ययेऽनुबन्धलोपे "युवोरनाकौ" इत्यनेन अनादेशे "अरुर्द्विषदजन्तस्य मुम्" इति मुमि उमावितौ गुणे णत्वे च विहिते प्रातिपदिकत्वात्सौ अमि, पूर्वरूपे "आढ्यङ्करणम्" इति सिद्ध्यति ।

## ८—प्रश्नोत्तराणि ।

क्रिया—क्रियतेऽनयेति विग्रहे "कृञः श च" इति सूत्रेण शप्रत्ययेऽनुबन्धलोपे "रिङ् शयग्लिङ्क्षु" इत्यनेन रिङादेशे अनुबन्धलोपे शित्वेन सार्वधातुकतया ङित्वाद्गुणाभावे इयङि च कृते प्रातिपदिकत्वात्सौ अदन्तत्वाट्टापि सोर्लोपे 'क्रिया' इति सिद्ध्यति ।

मृगया—'मृग अन्वेषणे' चुरादावदन्तः तस्मात् "परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्" इति वार्तिकेन निपातनात् शे यकि च कृते अतो लोपे प्राप्ते तदभावे च विहिते णिलोपे प्रातिपदिकत्वात्सौ टापि सोर्लोपे 'मृगया' इति सिद्ध्यति ।

मृजा—इत्यत्र ऊकारेत्संज्ञक मृज्धातोः "षिद्भिदादिभ्योऽङ्" इति सूत्रेण अङ्प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ टापि सोर्लोपे "मृजा" इति सिद्ध्यति ।

वेदना—इत्यत्र लृकारेत्संज्ञक लाभार्थक 'विद्' इत्यस्माद्धातोः "घट्टिवन्दिविदिभ्यश्चेति वाच्यम्" इति वार्तिकेन युच्प्रत्ययेऽनुबन्धलोपे "युवोरनाकौ" इत्यनादेशे च विहिते प्रातिपदिकत्वात्सौ टापि सोर्लोपे च कृते 'वेदना' इति सिद्ध्यति ।

"अन्यथैवकथमित्थंसुसिद्धाप्रयोगश्चेत्"—इति—अन्यथा, एवम्, कथम्, इत्थम्, एषूपपदेषु कृञो णमुल् स्यात् सिद्धोऽप्रयोगोऽस्यैवं भूतश्चेत्कृञ्, इति तदर्थः ।

ननु—कृञः अप्रयोगे कथं तदर्थावगतिः । अर्थावगत्यभावे तत्प्रयोगो वा किमर्थं इत्यत आह—व्यर्थत्वात्प्रयोगानर्हं इत्यर्थः । तथाच—'अन्यथाकारम्'

इत्यत्र 'अन्यथा' इत्युपपदात्कृधातोर्णमुलि अनुबन्धलोपे णित्वाद्वृद्धौ प्रातिपदिकत्वात्सौ सोरमादेशे च विहिते 'अन्यथाकारम्' इति सिद्ध्यति । एवम् 'एवङ्कारम्' 'कथङ्कारम्' 'इत्थङ्कारम्' भुङ्क्ते इत्यादीनि ज्ञेयानि ।

"समूलाकृतजीवेषु हन्कृञ्ग्रहः" इति । समूलादिषु कर्मसूपपदेषु हन्, कृञ्, ग्रह, एभ्यो णमुल् स्यादिति तदर्थः । 'समूलघातं' हन्ति इत्यत्र समूलोपपदात् हन्धातोः णमुलि अनुबन्धलोपे णित्वाद्वृद्धौ तकारान्तादेशे विहिते कुत्वे च कृते प्रातिपदिकत्वात्सौ सोरमादेशे "समूलघातं हन्ति" इति सिद्ध्यति एवम्–'अकृतकारं करोति' । 'जीवग्राहं गृह्णाति' इत्यादीनि बोध्यानि । इति शम् ।

---

१९३०

## ४ वर्षे १ पत्रम्

१—बब्धः, अदास्त, जिघाय, आनर्च्छ, अतृणेट्, असात्, गृहाण, चपयति, अजूहवत्, भिप्सति, पम्फुल्यते, जङ्घनीति इमानि रूपाणि धातुनिर्देशपूर्वकसाध्यानि ।

२—अभिषेणयति, वाव्रज्यते, कूलं पिपतिषति, दोषयति, अश्वयते, औब्जिजत्, इमानि रूपाणि विशेषकार्योपन्यासेन साधनीयानि ।

३—'णिच्यचादेशो न स्यात्' इति फक्किकोपपादनीया ।

४—'हिंसायां प्रतेश्च' 'उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च' आख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्, इति सूत्रवार्तिकानि व्याख्यायोदाहरणानि लेख्यानि ।

५—'उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षते पृथक् क्रियते, इत्यत्र प्रमाणं फलञ्च प्रदर्शनीये ।

## १—प्रश्नोत्तराणि ।

बब्धः—भर्त्सनार्थकभस्धातोर्लिटि तत्स्थाने तस्प्रत्यये "तिङ्शित्सार्वधातुकम्" इति सूत्रेण सार्वधातुकसंज्ञायां शपि "जुहोत्यादिभ्यः श्लुः" इति शपः श्लौ "श्लौ" इत्यनेन द्वित्वे च विहितेऽभ्याससंज्ञायाम् "हलादिः

शेषः" इत्यभ्यासलोपे "अभ्यासे चर्च" इति जश्त्वे बभस्+तस् इति जाते "घसिभसोर्हलि च" इत्युपधालोपे "झलो झलि" इति सलोपे तकारस्य "झषस्तथोर्धोऽधः" इति धकारे भकारस्य जश्त्वे च कृते सस्य रुत्वे विसर्गे च जाते 'बब्धः' इति सिद्धयति ।

अदास्त—क्षयार्थक ङकारेत्संज्ञक 'दी' धातोर्लुङि तिपि अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे "च्लि लुङि" इति च्लौ "च्लेः सिच्" इति सिजादेशे इचावितौ "मीनातिमिनोतिदीङां ल्यपि च" इति सूत्रेणात्वे कृते घुत्वे सत्यपि "स्थाघ्वोरित्वे दीङः प्रतिषेधः" इति भाष्यवार्तिकेन निषेधात् "स्थाघ्वोरिच्च" इतीत्वाभावे "अदास्त" इति सिद्धयति ।

जिघाय—गत्यर्थक 'हि' इत्यस्माद्धातोर्लिटि तिपि णलि च कृते "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्याससंज्ञायां "कुहोश्चुः" इति चुत्वे वृद्धौ च कृतायामायादेशे "हेरचङि" इत्यनेन हस्य कुत्वे 'जिघाय' इति सिद्धयति ।

आनर्च्छ—'ऋच्छ' इत्यस्माद्धातोर्लिटि तिपि "लिट् च" इति सूत्रेणार्द्धधातुकत्वे "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इति णलादेशोऽनुबन्धलोपे "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्याससज्ञायाम् "उरत्" इत्यत्वे रपरत्वे "हलादिः शेषः" इति लोपे "ऋच्छत्यॄताम्" इति गुणे रपरत्वे "अत आदेः" इत्यभ्यासस्याचो दीर्घे आ+अर्च्छ इति जाते बहुहल्त्वात् "तस्मानुड्द्विहलः" इत्यस्याप्राप्तौ सत्यां 'द्विहल्ग्रहणस्यानेकहलुपलक्षणान्नुटि' 'आनर्च्छ' इति सिद्धयति ।

अतृणेट्—हिंसार्थक 'तृह्' इत्यस्माद्धातोर्लङि तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते "रुधादिभ्यः श्नम्" इति श्नमि अनुबन्धलोपे "तृणह इम्" इतीमागमे मस्येत्संज्ञायां लोपे च विहिते तकारस्य "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति लोपे "होढः" इति ढत्वे जश्त्वे चर्त्वे च कृते नस्य णत्वे गुणे च जाते 'अतृणेट्' इति सिद्धयति ।

असात्—दानार्थक-उकारेत्संज्ञक 'षण्' धातोः "धात्वादेः षः सः" इति सत्वे "निमित्तापाये नैमित्तकस्याप्यपायः" इति परिभाषया णस्य नत्वे निष्पन्नात् सन्धातोर्लुङि तिपि अनुबन्धलोपे अडागमे "च्लि लुङि" इति च्लौ च्लेः सिजादेशे इचावितौ "तनादिभ्यस्तथासोः" इति सिचो लुकि "जनस-

नखनां सञ्झलोः" इति नस्यात्वे । "भसात्" इति सिद्धयति । लुगभावे इटि कृते षत्वे ष्टुत्वे सति 'भसनिष्ट' इति सिद्धयति ।

गृहाण—उपादानार्थक ग्रह्-इत्यस्माद्धातोर्लोटि मध्यमपुरुषैकवचने सिपि पकारस्येत्संज्ञायां लोपे च विहिते सार्वधातुकत्वे "सेर्ह्यपिच्च" इति सेर्हिभावे सार्वधातुकसंज्ञायां शपि प्राप्ते श्ना प्रत्यये "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इति सूत्रेण सम्प्रसारणे "हलः श्नः शानज्झौ" इति शानजादेशे चकारस्य "हलन्त्यम्" इतीत्संज्ञायां लोपे च विहिते "लशक्वतद्धिते" इति शस्येत्संज्ञायां लोपे नस्य णत्वे "अतो हेः" इति हेर्लुकि च कृते 'गृहाण' इति सिद्धयति ।

चपयति—चयनार्थक ञकारेत्संज्ञक 'चि' इत्यस्माद्धातोः" "सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्" इति णिचि णकारचकारयोरित्संज्ञायां लोपे च विहिते "चिस्फुरोर्णौ" इत्यात्वे चा+इ+इति स्थिते "अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ" इति पुगागमे अनुबन्ध लोपे "सनाद्यन्ता धातवः" इति धातुसंज्ञायां लटि तिपि अनुबन्धलोपे चेत्यनुवर्त्य मित्वस्यानुकर्षणेन मित्वाद्ध्रस्वे गुणेऽयादेशे च विहिते "चपयति" इति सिद्धयति । आत्वाभावपक्षे-'चययति' इति । चेर्णिचि वृद्धौ आयादेशे मित्वादुपधाह्रस्वे तत्सिद्धयति ।

ननु चिञ्-धातोरिह ञित्करणं व्यर्थम्, ण्यन्तात् 'णिचश्च' इत्यनेनैवोभयपदसिद्धेः । चौरादिकस्यास्य नित्यं ण्यन्तत्वेन 'चयति' 'चयते' इति केवलस्याण्यन्तस्य शशश्रृङ्गायमाणत्वादित्यत आह—ञित्करणसामर्थ्यादस्यणिज्विकल्पः । एवञ्च-णिजभावपक्षे उभयपदार्थमिह ञित्करणमर्थवदिति शम् ।

अजूहवत्–२८ पृष्ठे द्रष्टव्यम् ।

धिप्सति–'दम्भ्' इत्यस्माद्धातोः "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इत्यनेन सन्प्रत्ययेऽनुबन्धलोपे "दम्भ इच्च" इति सूत्रेणेत्वे "सन्यङोः" इति सूत्रेण द्वित्वेऽभ्यासत्वे" "अत्र लोपोऽभ्यासस्य" इति सूत्रेणाभ्यासस्य लोपे "हलन्ताच्च" इति सूत्रेण 'हल्ग्रहणं जातिपरम्' इत्याश्रित्य कित्वे "अनिदितां हल उपधायाः क्ङिति" इति नलोपे भष्भावे "खरि च" इति चर्त्वे धिप्स इत्यस्य धातुत्वे लटि तिपि शपि पररूपे 'धिप्सति' इति भवति यदि

"दम्भ इच्च" इति दीर्घेकारादेशस्तदा 'धीप्सति' यदा "सनीवन्तर्धभ्रस्ज-दम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्" इति सूत्रेण पाक्षिके इटि 'दिदाम्भिषति' इति रूपत्रयम् बोध्यम् ।

पम्फुलयते—'फल्' इत्यस्माद्धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति यङि अनुबन्धलोपे "सनाद्यन्ता धातवः" इति धातुसंज्ञायां लटि आत्मनेपदे तप्रत्यते "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायां लोपे च विहिते "अभ्यासे चर्च" इति चर्त्वे "चरफलोश्च" इति नुगागमेऽनुबन्धलोपे 'नुक्' इत्यनेनानुस्वारो लक्ष्यते "स च पदान्तवद्वाच्यः" इति वार्तिकेन पदान्तवद्भावात् "वा पदान्तस्य" इति विकल्पेनानुस्वारे परसवर्णे च विहिते "उत्परस्यातः" इति सूत्रेणाभ्यासात्परस्याकारस्योकारे–'पम्फुलयते' इति परसवर्णाभावे 'पंफुलयते' इति च सिद्ध्यति ।

जङ्घनीति—'हन्' इत्यस्माद्धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति यङि तस्य च "यङोऽचि च" इति लुकि च कृते "सनाद्यन्ता धातवः" इति धातुसंज्ञायां लटि तिपि अनुबन्धलोपे "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायां लोपे च विहिते "कुहोश्चुः" इति चुत्वे "अभ्यासाच्च" इति कुत्वं यद्यपि "हो हन्तेर्ञ्णिन्नेषु" इत्यतो हन्ते रित्यनुवर्त्य विहितं तच्च यङ्लुक्कृतेऽपि स्वीकारात् कुत्वे विहिते "एकाचो द्वे प्रथमस्य" इति सूत्रस्थ एकाच्ग्रहणेन "श्तिपा शपा" इत्यादिसर्वनिषेधानां यङ्लुकि क्वचिदप्रवृत्तिज्ञापनात् निषेधाभावे "यङो वा" इति विकल्पेनेडागमे "नुगतोऽनुनासिकान्तस्य" इति नुगागमेऽनुबन्धलोपे अनुस्वारे परसवर्णे च जाते 'जङ्घनीति' इति सिद्ध्यति ।

अभिषेणयति—सेनयाऽभियातीति विग्रहे अभिपूर्वकात् सेनाशब्दात् "सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्" इत्यनेन णिचि इष्टवद्भावे च विहिते "इष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वाणावपि स्युः" इति वचनाट्टिलोपे षत्वे णत्वे च कृते 'अभिषेणि' इत्यस्य "सनाद्यन्ता धातवः" इति धातुसंज्ञायां लटि तिपि गुणेऽयादेशे च 'अभिषेणयति' इति रूपं सिद्ध्यति ।

**वाव्रज्यते**—नित्यं कुटिलं व्रजतीति विग्रहे 'व्रज्' इत्यस्माद्धातोः "नित्यं कौटिल्ये गतौ" इति यङि अनुबन्धलोपे "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायां लोपे "दीर्घोऽकितः" इत्यभ्यासदीर्घे 'वाव्रज्य' इत्यस्य "सनाद्यन्ता धातवः" इति धातुसंज्ञायां लटि ङित्वादात्मनेपदे तप्रत्यये "टित आत्मनेपदानां टेरे" इति टेरेत्वे च विहिते 'वाव्रज्यते' इति सिद्ध्यति ।

**कूलं पिपतिषति**—शङ्कितपतनं भवतीत्यर्थे पत्धातोः "आशङ्कायां सन्वक्तव्यः" इति वार्तिकेन सन्प्रत्ययेऽनुबन्धलोपे "तनिपतिदरिद्रातिभ्यः सनो वा इड् वाच्यः" इति वार्तिकेन विकल्पेनेडागमे "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायायां "हलादिः शेषः" इत्यभ्यासहल्लोपे सन्वद्भावे च विहिते "सन्यतः" इतीत्वे सनः सकारस्य षत्वे च कृते "सनाद्यन्ता धातवः" इति धातुसंज्ञायां लटि तिपि अनुबन्धलोपे "पिपतिषति' इति सिद्ध्यति ।

**चित्तं दोषयति**—चित्तं दुष्यति स्नानसन्ध्यावन्दनादिनित्यकर्मसु विरक्तं भवति, तत्प्रयोजति काम इत्यर्थे "हेतुमति च" इति सूत्रेण णिचि अनुबन्ध-लोपे च विहिते "वा चित्तविरागे" इत्यनेन दुष उपधाया उकारस्य विकल्पेन ऊकारे कृते "सनाद्यन्ता धातवः" इति धातुसञ्ज्ञायां लटि तिपि अनुबन्ध-लोपे च विहिते गुणे अयादेशे च जाते 'दूषयति' इति । ऊकाराभावपक्षे तु—उकारस्य गुणे 'दोषयति' इति सिद्धयति ।

**अश्वयते**—अश्वतरमाचष्टे इति विग्रहे अश्वतरशब्दात् "श्वेताश्वाश्व-तरगालोडिताह्वरकाणामश्वतरेतकलोपश्च" इति णिङि अनुबन्धलोपे तर-शब्दस्य च लोपे विहिते इष्ठवद्भावे—"इष्ठे यथा प्रातिपदिकस्य पुंवद्भा-वरभावटिलोपविन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशभसञ्ज्ञास्तद्व-णावपि स्युः" इति टिलोपे "सनाद्यन्ता धातवः" इति धातुसञ्ज्ञायां लटि आत्मनेपदे तप्रत्यये शपि इकारस्य गुणे अयादेशे च कृते "टित आत्मनेपदानां टेरे' इति टेरेत्वे कृते 'अश्वयते' इति सिद्धयति ।

**औञ्जित्**—४३ पृष्ठे द्रष्टव्यम् ।

## ३—प्रश्नोत्तराणि ।

**णिच्यजादेशो न स्थानिवदिति** 'ओः पुयण्ज्यपरे' इति सूत्रव्या-ख्यावसरे १६ पृष्ठे द्रष्टव्यम् ।

## ४—प्रश्नोत्तराणि ।

'हिंसायां प्रतेश्च'—सूत्रस्थचकारादुपादिति समुच्चीयते । तदाह—उपात्प्रतेश्च किरतेः सुट् स्याद्धिंसायामिति सूत्रार्थः ।

उपस्किरति, प्रतिस्किरति—४० पृष्ठे द्रष्टव्यम् ।

'उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च'—उपात्कृञः सुट् स्यादेष्वर्थेषु, चात्प्रागुक्तभूषणसमवाययोरिति सूत्रार्थः । प्रतियत्नो, गुणाधानम् । विकृतमेव वैकृतम्, विकारः । वाक्यस्याध्याहारः, आकाङ्क्षितैकदेशपूरणम् । उपस्कृता कन्या, अलङ्कृतेत्यर्थः । उपस्कृताः ब्राह्मणाः, समुदिता इत्यर्थः । एधो दकस्योपस्कुरुते, गुणाधानं करोतीत्यर्थः । उपस्कृतं भुङ्क्ते, विकृतमित्यर्थः । उपस्कृतं ब्रूते, वाक्याध्याहारेण ब्रूते इत्यर्थः । उपेत्युपसर्गपूर्वकात् कृधातोः प्रकृतसूत्रेण सुटि कृते एते सिद्ध्यन्ति ।

'आख्यानात्कृतस्तदाचष्टे' इति ४१ पृष्ठे द्रष्टव्यम् ।

## ५—प्रश्नोत्तराणि ।

'उपसर्गसमानाकारं पूर्वपदम्' इति—५८ पृष्ठे द्रष्टव्यम् ।

---

१९३०

४ वर्षे २ पत्रम् ।

१—कण्ड्वादीनां धातुत्वे प्रातिपदिकत्वे च सुदृढं प्रमाणं निरूप्य 'यथेष्टं नामधातुष्विति' वार्तिकं सफलयन्तु ।

२—आदित्यमुपतिष्ठते, शतं प्रकुरुते, क्रोधं विनयते स्मारिता, एतान् सूत्रतदर्थोपन्यासमुखेन संस्कृत्य कर्मवत्कर्मणेति सूत्रं सोदाहरणं व्याख्यायताम् ।

३—अपि गिरिं शिरसा भिन्द्यात्, अगच्छत् किम्—इत्यत्र लिङ्लुङौ केन सूत्रेणेति प्रदर्श्य, शक्यम्, अर्घः, समवसर्ग्या, एषु यानि कार्याणि तानि सूत्रार्थोपपादनपुरस्सरं प्रदर्श्यन्ताम् ।

अथवा—

३—'ईच खनः, इति सूत्रे दीर्घेकारस्य प्रयोजनं साधु निरूपयत । किञ्चैतदीयं लक्ष्यम् ।

४—मधुसूदनः, स्तुग्लः, खनकौ, शोकापनुदः, एककरः, नखम्पचा, स्तुतङ्गमः, दूनः, एते सूत्रतदर्थविग्रहप्रदर्शनमुखेन सम्यक् साधनीयाः।

३—जघन्वान्, सहिष्णुः, जञ्जपूकः, उपाध्यायः, ईहा, वापिः, उदरपूरं भुङ्क्ते, तूष्णीम्भूय, एते कथं संस्क्रियन्ते।

## १—प्रश्नोत्तराणि।

'कण्ड्वादिभ्यो यक्'—एभ्यो धातुभ्यः नित्यं यक् स्यात् स्वार्थे। वृत्तौ धातुभ्यः किम् प्रातिपदिकेभ्यो माभूदिति। ननु कण्ड्वादीनां धातुत्वस्यैव सम्भवेन तेभ्यः एव यक् सिद्धेः प्रातिपदिकेभ्यो सर्वथाऽसम्भवेन तद्व्यावृत्त्यर्थं तद्व्यर्थमिति वाच्यम्। तन्न। 'द्विधा हि कण्ड्वादयः' 'धातवः प्रातिपदिकानि च'। तत्र प्रमाणम्—सूत्रस्थयकः कित्वेन धातव इति ज्ञायते। कण्डूञ् इति दीर्घपाठेन च प्रातिपदिकान्यपीति। यदि तु धातव एव स्युस्तर्हि ह्रस्वान्ते पठितेऽपि यकि परे "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घेण 'कण्डूयति' इत्यादि सिद्धेः किं तेन दीर्घपाठेन। द्वैविध्ये तु धातुभ्यो यकि गुणनिषेधेन कित्वं सार्थकमिति शम्।

'यथेष्टं नामधातुषु'—इदमपि वार्तिकम्। नाम प्रातिपदिकं तद्घटितधातुषु यथेष्टं द्वित्वं कर्त्तव्यमिति तदर्थः। तदेव दर्शयति—आद्यानां त्रयाणामन्यतमस्य द्वित्वम्, अजादेस्त्वाद्येतरस्य। पुपुत्रीयिषति, पुतित्रीयिषति, पुत्रीयियिषति। पुत्रमात्मानमिच्छतीति विग्रहे 'पुत्र' इत्यस्मात् क्यचि 'पुत्रीय' इत्यस्य "सनाद्यन्ता धातवः" इति धातुसञ्ज्ञायां तस्मात् सनि इटि "सन्यङोः" इति द्वित्वे क्रमेण पुत्रीय शब्देषु प्रवर्त्तत इति। 'अशिश्वीयिषति, अश्वीयियिषति, 'नदराणां संयुक्तानामचः परस्यैव द्वित्वनिषेधः'। इन्द्रीयतेः सन्। द्रीशब्दयिशब्दयोरन्यतरस्य द्वित्वम्। इन्दिद्रीयिषति, इन्द्रीयियिषति। चिचन्द्रीयिषति, चन्दिद्रीयिषति, चन्द्रीयियिषति। इत्यादीनि बोध्यानि।

## २—प्रश्नोत्तराणि।

आदित्यमुपतिष्ठते—३३ पृष्ठे द्रष्टव्यम्।

शतं प्रकुरुते—इत्यत्र "गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्र-

कथनोपयोगेषु कृञः" इति सूत्रेणात्मनेपदे 'शतं प्रकुरुते' इति सिद्धयति । धर्मार्थं विनियुङ्क्ते इति तदर्थः ।

क्रोधं विनयते—इत्यत्र नियः कर्तृस्थे कर्मणि यदात्मनेपदं प्राप्तं तच्छरीरावयवभिन्न एव स्यादित्यर्थकेन "कर्तृस्थे चाशरीरे कर्मणि" इति सूत्रेणात्मनेपदे विहिते 'क्रोधं विनयते' इति सिद्धयति ।

स्मारिता—स्मृधातोर्लुटि तिपि अनुबन्धलोपे तास्प्रत्यये तिपो डादेशे डित्वाट्टिलोपे गुणे कृते "स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च" इत्यनेन चिण्वद्भावे चिण्वदिटि च कृते णित्वादुपधावृद्धौ 'स्मारिता' इति । तदभावे अयमिट् चिण्वद्भावसन्नियोगशिष्टत्वात्तदभावे न । तेन 'स्मर्त्ता' इति च सिद्धयति ।

"कर्मवत्कर्मणा तुल्यक्रियः" इति—'कर्मस्थया क्रियया तुल्यक्रियः कर्त्ता कर्मवत्स्यादिति' सूत्रार्थः । कर्मवद्भावातिदेशेन कार्यातिदेशोऽयम् । यद्यपि शास्त्रातिदेशे कार्यातिदेशे वा न फलभेदः । तथापि शास्त्रातिदेशस्यापि कार्यातिदेशार्थत्वान्मुख्यत्वात् कार्यातिदेश एव आश्रयणीय इति । तेन—कर्मवत्ववचनेन कर्मकार्याणि "सार्वधातुके यक्" इति यक्, "भावकर्मणोः" इत्यात्मनेपदम्, "चिण् भावकर्मणोः" इति चिण् "स्यसिच्सीयुट्तासिषु भावकर्मणोः उपदेशेऽज्झनग्रहदृशां चिण्वदिट् च" इति चिण्वत्वं तत्सन्नियोगशिष्टः इट् च स्युरिति । कर्मणः कर्तृत्वविवक्षायां कर्त्तरि लकारे सति तदादेशतिङा कर्तुरभिहितत्वात्प्रथमेति । यथा 'पच्यते ओदनः' इत्यत्र 'देवदत्तः ओदनं पचति' इति विवक्षायां किं देवदत्तः ओदनं पचति, ओदनः स्वयमेव पच्यते, अत्र कर्मवद्भावातिदेशात् यक्, आत्मनेपदं, कर्त्तुरभिहितत्वाच्च प्रथमा सिद्धयति । इति ।

## ३—प्रश्नोत्तराणि ।

अपि गिरिं शिरसा भिन्द्यात्—बलवन्तं पुरुषमधिकृत्य अस्युक्तिरियम् । प्रायेण शिरसा गिरिं भेत्तुमयं समर्थं इत्यर्थः । गिरिभेदसम्भावनस्य सामर्थ्यहेतुकत्वद्योतकः अपि शब्दः । अत्र लिङ्निमित्तसत्त्वात् क्रियातिपत्तौ भूते "सम्भावनेऽलमिति चेत्सिद्धाप्रयोगे" इति सूत्रेण लृङ्लकारे तत्सिद्धयति ।

गमच्छत् किम्—इत्यत्र "प्रश्ने चासन्नकाले" इति सूत्रेण लङ् लिट् च लकारे विहिते 'अगच्छत् किम्', 'जगाम किम्' इति च सिद्धयति ।

**शक्यम्**—इत्यत्र "शकि सहोश्च" इति सूत्रेण यत्प्रत्यये अनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे '**शक्यम्**' इति सिद्धयति ।

**अर्यः**—इत्यत्र "ऋहलोर्ण्यत्" इति ण्यत्, प्राप्ते तदपवादेन "अर्यः स्वामिवैश्ययोः" इति सूत्रेण निपातनात् ऋ गतावित्यस्मात् यत्प्रत्ययेऽनुबन्धलोपे गुणे च विहिते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते '**अर्यः**' इति सिद्धयति ।

**समवसर्या**—इत्यत्र 'समवपूर्वाच्च' इति वार्तिकेन सृजेर्ण्यत् प्रत्ययेऽनुबन्धलोपे "चजोः कु घिण्ण्यतोः" इति कुत्वे गुणे टापि प्रातिपदिकत्वात्सौ सोर्लोपे '**समवसर्या**' इति सिद्धयति ।

## ४—प्रश्नोत्तराणि ।

**मधुसूदनः**—मधुनामकः कश्चिदसुरविशेषः । तं सूदयति हन्तीत्यर्थे "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इति सूत्रेण ल्युप्रत्ययेऽनुबन्धलोपे "युवोरनाकौ" इत्यनादेशे "णेरनिटि" इति णिलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च विहिते '**मधुसूदनः**' इति सिद्धयति ।

**सुग्लः**—सुष्ठु ग्लायतीत्यर्थे ग्लैधातोः "आदेच उपदेशेऽशिति" इत्यात्वे कृते "आतश्चोपसर्गे" इति सूत्रेण कप्रत्यये कस्येत्सञ्ज्ञायां लोपे च विहिते "आतो लोप इटि च" इत्याकारस्य लोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते '**सुग्लः**' इति सिद्धयति ।

**खनकी**—इत्यत्र "नृतिखनिरञ्जिभ्यः एव" इति वार्तिकात् एष्वेवार्थेषु "शिल्पिनि ष्वुन्" इति सूत्रेण ष्वुन्प्रत्यये अनुबन्धलोपे वोरकादेशे षित्वात् "षिद्गौरादिभ्यश्च" इति ङीषि अनुबन्धलोपे सौ सोर्लोपे '**खनकी**' । इति सिद्धयति ।

**शोकापनुदः**—शोकमपनुदतीति विग्रहे "तुन्दशोकयोः परिमृजापनुदोः" इति सूत्रेण "आलस्यसुखाहरणयोरिति वक्तव्यम्' इति वार्तिकेन सुखाहरणरूपेऽर्थे कप्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च विहिते '**शोकापनुदः**' इति सिद्धयति ।

**एककरः**—एकं करोतीति विग्रहे संख्यावाचकात् एकशब्दपूर्वकात् कृधातोः "दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु" इति सूत्रेण टप्रत्य-

येऽनुबन्धलोपे गुणे च विहिते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'एककरः' इति सिद्ध्यति ।

नखम्पचा—इत्यत्र नखं पचतीति विग्रहे "मितनखे च" इति सूत्रेण खश्प्रत्ययेऽनुबन्धलोपे "अरुर्द्विषदजन्तस्य मुम्" इत्यनेन मुमागमे उभावितौ प्रातिपदिकत्वात्सौ स्त्रीत्वविवक्षायामदन्तत्वाट्टापि च कृते सोर्लोपे 'नखम्पचा' इति सिद्ध्यति ।

सुतङ्गमः—इत्यत्र सुतं गच्छतीत्यर्थे "गमश्च" इति सूत्रेण खच्प्रत्यये अनुबन्धलोपे "अरुर्द्विषदजन्तस्य मुम्" इत्यनेन मुमागमे च विहिते उभावितौ मस्यानुस्वारे परसवर्णे कृते कृदन्तत्वात् प्रातिपदिकत्वे सौ रुत्वे विसर्गे च जाते "सुतङ्गमः" इति सिद्ध्यति ।

दूनः—'दु' इत्यस्माद्धातोः "क्तक्तवतू निष्ठा" इति निष्ठासंज्ञायां "निष्ठा" इति सूत्रेण निष्ठासंज्ञकक्तप्रत्ययेऽनुबन्धलोपे तकारस्य 'दुग्वोर्दीर्घश्च' इति वार्तिकेन नकारे दीर्घे च कृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च 'दूनः' इति सिद्ध्यति ।

## ८—प्रश्नोत्तराणि ।

जघन्वान्—हन्–धातोर्लिटः क्वसुः । नित्यत्वाद् द्वित्वे अभ्यासकार्ये । ततो "आर्द्धधातुकस्येड्वलादेः" इतीटि प्राप्ते "नेड्वशि कृति" इत्यनेन निषेधे "विभाषागमहनविदविशाम्" इत्यनेन विकल्पेनेडागमे कुत्वे "गमहनजनखनघसां लोपः क्ङित्यनङि" इति सूत्रेण अलोपे नुमि दीर्घे संयोगान्तलोपे प्रातिपदिकत्वात्सौ सोर्लोपे च 'जघ्निवान्' इति । इडभावेऽजादिपरकत्वाभावेनालोपाभावात् 'जघन्वान्' इति च सिद्ध्यति ।

सहिष्णुः—'षह् मर्षणे इति धातोः "धात्वादेः षः सः" इति सूत्रेण सत्वे ततो "अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्" इत्यनेन इष्णुच् प्रत्यये चकारस्येत्संज्ञायां लोपे च विहिते कृदन्तत्वात् प्रातिपदिकत्वे सौ रुत्वे विसर्गे "सहिष्णुः" इति सिद्ध्यति ।

जञ्जपूकः—ज धातोः "धातोरेकाचो हलादेः क्रियासमभिव्याहारे यङ्" इति यङि अनुबन्धलोपे "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायां लोपे च कृते अभ्यासस्य "जपजभदहदशभञ्जपशां च" इति नुकि उकावितौ नस्यानु-

स्वारे परसवर्णे च विहिते "यजजपदशां यङः" इत्यनेन ऊक्प्रत्यये अल्लोपय-लोपयोः कृदन्तत्वात् प्रातिपदिकत्वे सौ रुत्वे विसर्गे च जाते 'जञ्जपूकः' इति सिद्ध्यति ।

उपाध्यायः—उप समीपे एत्य यस्मादधीयते स इति विग्रहे उप–अधि–उपसर्गपूर्वकात् इङ्धातोः "इङश्च"इति सूत्रेण घञ्प्रत्ययेऽनुबन्धलोपे ञित्वाद्वृद्धौ आयादेशे च विहिते कृदन्तत्वात् प्रातिपदिकत्वे सौ रुत्वे विसर्गे 'उपाध्यायः' इति सिद्धयति ।

ईहा—ईहते या सेति विग्रहे स्त्रियाम् "गुरोश्च हलः" इत्यकारप्रत्यये टापि सोर्लोपे 'ईहा' इति सिद्धयति ।

वापिः–इत्यत्र वप्धातोः "इञ्वपादिभ्यः" इति वार्तिकेन इञ्प्रत्ययेऽ-नुबन्धलोपे ञित्वादादिवृद्धौ कृदन्तत्वात् प्रातिपदिकत्वे सौ रुत्वे विसर्गे च विहिते 'वापिः' इति सिद्धयति ।

उदरपूरं भुङ्क्ते–उदरं पूरयन् भुङ्क्ते इति विग्रहे 'उदर' इति कर्मण्यु-पपदे पूरयतेः "चर्मोदरयोः पूरेः" इति सूत्रेण णमुलि अनुबन्धलोपे सोर्लोपे 'उदरपूरं भुङ्क्ते' इति सिद्धयति ।

तूष्णीं भूय—तूष्णीं शब्दे उपपदे "तूष्णीमि भुवः" इत्यनेन भूइत्यस्मात् क्त्वाप्रत्यये तस्य ल्यबादेशे अनुबन्धलोपे सोर्लोपे 'तूष्णीं भूय' इति सिद्धयति ।

---

१९३१

४ वर्ष १ पत्रम् ।

१—ओहाङ्' ओहाक्' खव्धातूनां हौ, दीङ्, लीङ्, धात्वोर्णलि, नशेर्लुटि, वृञ्आशिर्लिङि प्रथमपुरुषैकवचने ऋच्छमृङास्तुसि च सिद्धरूपाणि प्रदर्श्य तेषु विशेषकार्याणि ब्रूत ।

२—रुन्धन्ति, अतत, क्षिणोति, पपिता, एतानि शङ्कासमाधानपूर्वकं साधनीयानि ।

३—चुरादौ पृधातौ दीर्घोच्चारणस्य फलमुक्त्वा लज्जापयति, गालो-ड्यते, अस्रयति, एषु विशेषं ब्रूत ।

४—अट्, वञ्च, चर्, जन् धातूनां यङि, उब्ज, वा, लीधातूनाञ्च णिचि लुङि च विशेषकार्य्यप्रदर्शनपूर्वकमेकैकं रूपं लेख्यम् ।

५—"अज्झनगमां सनि" इत्यत्र "अजादेशगमेः" इत्यर्थलाभप्रकारं लिखित्वा किमः क्यचि, युवतेः क्यङि उढिम्, अदद्र्यञ्चश्चा-ख्यदिति विग्रहे णिचि रूपेषु विशेषकार्य्याणि दर्शनीयानि ।

## १—प्रश्नोत्तराणि ।

गत्यर्थक ओकारङकारेत्संज्ञक हाधातोर्लोटि मध्यमपुरुषैकवचने 'जिहीस्व' इति रूपम् ।

तथा च हाधातोर्लोटि मध्यमपुरुषैकवचने थास् प्रत्यये सार्वधातुकसंज्ञायां शपि "जुहोत्यादिभ्यः श्लुः" इत्यनेन श्लौ "श्लौ" इति द्वित्वेऽभ्याससंज्ञायां "भृञामित्" इत्यभ्यासस्येत्वे "कुहोश्चुः" इति चुत्वे "अभ्यासे चर्च" इत्यनेन जश्त्वेन जकारे "ई हल्यघोः" इति दीर्घेकारादेशे "थासः से" इत्यनेन से, इत्यादेशे "सवाभ्यां वामौ" इति एकारस्य वकारे "जिहीस्व" इति सिद्धयति ।

ओकारककारेत्संज्ञक हाधातोर्लोटि मध्यमपुरुषैकवचने हौ 'जहाहि, जहिहि, जहीहि, जहितात्, जहीतात्' इत्येव रूपपञ्चकम् बोध्यम् । साधनप्रकारश्च २६ पृष्ठे द्रष्टव्यम् ।

खव्—धातोर्लोटि मध्यमपुरुषैकवचने हौ 'खौनीहि' इति रूपम् । साधन-प्रकारश्च ५ पृष्ठे द्रष्टव्यम् ।

दीङ्—लीङ्धातोर्लिटि प्रथमपुरुषैकवचने 'दिदीये' 'लिल्ये' इति रूपे स्तः । तथाच 'दिदीये' इत्यत्र ङकारेत्संज्ञक 'दी' इत्यस्माद्धातो लिंटि आत्मनेपदे तप्रत्यये "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्याससंज्ञायां "ह्रस्वः" इति ह्रस्वे "लिटस्तझयोरेशिरेच्" इति तप्रत्ययस्यैशादेशेऽनुबन्धलोपे दिदी ए इति स्थिते परत्वात् "एरनेकाचोऽसंयोगपूर्वस्य" इति यणि प्राप्ते नित्यत्वात् युटि अनुबन्धलोपे टित्वादाद्यावयवे 'दिदीये' इति सिद्धयति ।

ननु युटि कृतेऽपि तस्यासिद्धत्वाद्यण् दुर्वारः । तथा च 'दिद्य्ये' इत्यस्या-पत्तिः स्यात् । इकारो न श्रूयेत, यकारद्वयञ्च श्रूयेत इत्यत आह—"वुग्युटावु-वङ्यणोः सिद्धौ वक्तव्यौ" इति वार्तिकेन युटो सिद्धत्वान्न यणिति शम् ।

लिल्ये—श्लेषणार्थक ङकारेत्संज्ञक 'ली' इत्यस्माद्धातो लिटि आत्मनेपदे तप्रत्यये द्वित्वेऽभ्याससंज्ञायां ह्रस्वे च विहिते तप्रत्ययस्यैशादेशे "एरनेकाचोऽसंयोगपूर्वस्य" इति यणि 'लिल्ये' इति सिद्ध्यति ।

नश्धातोर्लुटि प्रथमपुरुषैकवचने 'नशिता, नंष्टा' इति रूपद्वयं बोध्यम् । तथा च नश्धातोर्लुटि तिपि "स्यतासी लृलुटोः" इति तास्प्रत्यये तिपो डादेशे डित्वाट्टिलोपे "रधादिभ्यश्च" इति विकल्पेनेडागमे 'नशिता' इति । इडभावे "मस्जिनशोर्झलि" इति नुमि उमावितौ नस्यानुस्वारे षत्वे ष्टुत्वे च विहिते 'नंष्टा' इति च सिद्ध्यति ।

वृञ्धातोराशिर्लिङि प्रथमपुरुषैकवचने 'वरिषीष्ट' 'वृषीष्ट' इति रूपेस्त साधनप्रकारस्तु २६ पृष्ठे द्रष्टव्यम् ।

ऋच्छ्धातोर्लिटि अतुसि 'आनर्च्छतुः' इति रूपम् । तथाच—ऋच्छ् इत्यस्माद्धातोर्लिटि तस्प्रत्यये "लिट् च" इति आर्द्धधातुकत्वे तुसि कृते "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्याससञ्ज्ञायाम् "उरत्" इत्यत्वे रपरे च कृते "हलादिः शेषः" इति लोपे "ऋच्छत्यृताम्" इति गुणे रपरत्वे "अत आदेः" इति सूत्रेणाभ्यासाकारस्य दीर्घे 'द्विहल्ग्रहस्यानेकहल्उपलक्षणत्वान्नुटि' उटावितौ सस्य रुत्वे विसर्गे च 'आनर्च्छतुः' इति सिद्ध्यति ।

मृङ्—धातोर्लिटि अतुसि 'मम्रतुः' इति रूपम् । तथाच ङकारेत्सञ्ज्ञकं 'मृ' इत्यस्माद्धातोर्लिटि तस्प्रत्यये आर्द्धधातुकत्वेऽतुसि च कृते द्वित्वेऽभ्याससञ्ज्ञायाम् "उरत्" इत्यत्वे रपरे च कृते "हलादिः शेषः" इति लोपे यणि कृते सस्य रुत्वे विसर्गे च जाते 'मम्रतुः' इति सिद्ध्यति ।

## २—प्रश्नोत्तराणि ।

रुन्धन्ति—रुध्धातोर्लटि तत्स्थाने झिप्रत्यये "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकसंज्ञायां शपि प्राप्ते तम्प्रबाध्य श्नमि कृतेऽनुबन्ध लोपे रुन ध झि जाते "झोऽन्तः" इति झेरन्तादेशे "श्नसोरल्लोपः" इत्यकारलोपे प्राप्तणत्वस्यासिद्धत्वादनुस्वारे परसवर्णे च विहिते तस्यासिद्धत्वादिह पुनर्णत्वं न नन्विह अल्लोपस्य "अचः परस्मिन्" इति स्थानिवत्वात् कथमनुस्वारपरसवर्णाविति चेन्न, "न पदान्त" इति निषेधात्, "रुन्धन्ति" इति सिद्ध्यति ।

अतत—उकारेत्संज्ञक तन् इत्यस्माद्धातोर्लुङि आत्मनेपदे तप्रत्यये "लुङ्-

लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमेऽनुबन्धलोपे "च्लि लुङि" इति च्लौ "च्लेः सिच्" इत्यनेन सिजादेशे इचाविती "तनादिभ्यस्तथासोः" इति सिचो लुकि "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इति सूत्रेणानुनासिकनकारस्य लोपे च विहिते 'अतत' इति सिद्ध्यति ।

क्षिणोति—उकारेत्संज्ञक क्षिणु इत्यस्माद्धातोर्लटि तिपि सार्वधातुकसंज्ञायां शपि प्राप्ते "तनादिकृञ्भ्य उः" इत्युप्रत्यये "सार्वधातुकार्धधातुकयोः" इति गुणे 'क्षिणोति' इति सिद्ध्यति ।

ननु 'क्षिणोति' इत्यत्र उप्रत्ययमाश्रित्य इकारस्य लघूपधगुणः कस्मान्नेत्याशङ्क्य वदति उप्रत्ययनिमित्तो लघूपधगुणः 'संज्ञापूर्वको विधिरनित्यः' इति न भवतीति आत्रेयादयः भवत्येवेत्यन्ये–तन्मते 'क्षेणोति' इति रूपं सिद्ध्यति ।

एषिता—४१ पृष्ठे द्रष्टव्यम् ।

## ३—प्रश्नोत्तराणि ।

"पॄ" पूरणे इति । ननु चुरादौ हलन्त एवायं धातुर्निर्दिश्यताम् । तावतैव 'पारयति' इत्यादिरूपसिद्धेः । नच णिजभावपक्षे 'परिता' 'परिष्यति' इत्यत्र इडर्थं दीर्घोच्चारणं ऋदन्तत्वे अनिट्कत्वप्रसङ्गादिति वाच्यम् , चुरादिणिचो नित्यत्वेन ततो णिजभावस्य शशश्रृङ्गायमाणत्वादित्यत आह–पॄधातोः दीर्घोच्चारणं णिचः पाक्षिकत्वे लिङ्गम् । णिचः पाक्षिकत्वे तु 'परिता' इत्यादौ 'पर्ता' इत्यादिकरूपवारणाय दीर्घोच्चारणं सार्थकमिति ।

ननु हलन्तत्वेपि 'परिता' इत्यादौ इट् कुतो न स्यादित्यत आह–तद्धि सेट्कत्वायेति । अयम्भावः–हि = यतः तत् = दीर्घोच्चारणं 'परिता' इत्यादौ सेट्कत्वार्थम् , ऋदन्तत्वे तु इण् न स्यात् , "ऊदॄदन्तैः" इत्याद्यनिट्कारिकासु ॠदन्तस्य पर्युदासेन ऋदन्तस्यानिट्कत्वावगमादिति ।

ननु 'पॄ' धातोः णिचः पाक्षिकत्वज्ञापकस्य किं फलम् । श्नाविकरणश्नुविकरणपठिताभ्यामेव पॄधातुभ्यां 'परिता' इत्यादिसिद्धेरित्यत आह–एवञ्चोक्तरीत्या

पृ धातोः णिचः पाक्षिकत्वे ज्ञापिते सति 'पृणाति पिपर्तिभ्यां परिता, परीता, इत्यादि सिद्धावपि 'परति, परतः, इत्यादि सिद्धिः फलमिति शम्।

लज्जापयति—'लज् प्रकाशने' तन्मते-णिचि णेरयादेशे 'लजयति' इति रूपम्। तत्र 'लजि' इत्येके, तन्मते इदित्वान्नुमि अनुस्वारे परसवर्णे 'लञ्जयति' इति रूपम्।

ननु कथादावनयोः पाठो व्यर्थः। इदितोरनयोः टकारजकारान्तयोरदन्तत्व-स्याप्रसक्तेः फलाभावाच्चेत्यत आह–अदन्तेष्विति। अयम्भावः–अदन्तेषु पाठ-बलात् वराट लञ्जेति कदाचिददन्तत्वमप्यनयोर्विज्ञायते। अदन्तत्वस्य च फला-भावादतोलोपं बाधित्वा "अचो ञ्णिति" इति वृद्धौ "अर्तिह्रीव्लीरीक्नूयीक्ष्मा-य्यातां पुङ्णौ" इति सूत्रेण पुकि 'लज्जापयति' इति वदन्ति।

गालोडयते—४१ पृष्ठे द्रष्टव्यम्।

असयति—'असिना हन्ति' इति विग्रहे "कर्तृकरणाद्धात्वर्थे" इति गण-सूत्रेण णिचि अनुबन्धलोपे इष्टवद्भावाट्टिलोपे गुणे अयादेशे च विहिते 'असयति' इति सिद्ध्यति।

## ४—प्रश्नोत्तराणि।

अट् धातोर्यङन्ताल्लटि प्रथमपुरुषैकवचने 'अटाट्यते' साधनप्रकारश्च ४५ पृष्ठे द्रष्टव्यम्। इति रूपम्।

'वञ्चु' धातोर्यङन्ताल्लटि प्रथमपुरुषैकवचने 'वनीवच्यते' इति रूपम्। साधनप्रकारश्च ४६ पृष्ठे द्रष्टव्यम्।

'चर' धातोर्यङन्ताल्लटि प्रथमपुरुषैकवचने 'चञ्चूर्यते' इति रूपम्। साधनप्रकारश्च ३१ पृष्ठे द्रष्टव्यम्।

जन धातोर्यङन्ताल्लटि प्रथमपुरुषैकवचने 'जाजायते' 'जञ्जन्यते' इति रूपद्वयम्।

तथा च–जन धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इत्यनेन यङि अनुबन्धलोपे "ये विभाषा" इत्यनेन विकल्पेनात्वे "सन्यङोः" इति द्वित्वेऽभ्यासंज्ञायां "ह्रस्वः" इत्यनेन ह्रस्वे "दीर्घोऽकितः" इति सूत्रेणा-भ्यासस्य दीर्घे च विहिते "जाजायते" इति रूपं सिद्ध्यति। आत्वाभावे "नुग-

तोऽनुनासिकान्तस्य" इत्यनेन नुगागमेऽनुबन्धलोपे अनुस्वारे परसवर्णे च विहिते 'जञ्जन्यते' इति सिद्ध्यति ।

उब्ज–धातोर्णिचि लुङि प्रथमपुरुषैकवचने "औब्जिजत्" इति रूपं भविष्यति साधनप्रक्रिया च ४३ पृष्ठे द्रष्टव्यम् ।

वाधातोर्णिचि लुङि प्रथमपुरुषैकवचने 'अवीवजत्' 'अवीवपत्' इति द्वे रूपे स्तः ।

तथा च वाधातोः "तत्प्रयोजको हेतुश्च" इत्यनेन णिच्प्रत्ययेऽनुबन्धलोपे "वो विधूनने जुक्" इत्यनेन जुगागमे अनुबन्धलोपे "सनाद्यन्ता धातवः" इति सूत्रेण 'वाजि' इत्यस्य धातुसंज्ञायां लुङि तिपि अनुबन्धलोपे अडागमे च विहिते "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इत्यनेन चङादेशे अनुबन्धलोपे 'अ + वाजि + अ + त्' इति स्थिते "णेरनिटि" इति णिलोपे "णौ चङ्युपधाया ह्रस्वः" इति ह्रस्वे "चङि" इत्यनेन द्वित्वेऽभ्याससंज्ञायां "हलादिः शेषः" इत्यभ्यासलोपे "सन्वल्लघुनि चङ्परेऽनग्लोपे" इति सन्वद्भावे "सन्यतः" इतीत्वे "दीर्घो लघोः" इत्यभ्यासस्य दीर्घे "अवीवजत्" इति रूपं सिद्ध्यति। जुगभावपक्षे तु "अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ" इति पुगागमे 'अवीवपत्' इति च रूपं सिद्ध्यति ।

लीधातोर्णिचि लुङि प्रथमपुरुषैकवचने "अलीलपत्" "अलीललत" "अलीलिनत" "अलीलयत" इति च–रूपचतुष्टयम् बोध्यम् । तथा च–लीधातोर्णिचि कृतेऽनुबन्धलोपे णित्वात् "अचो ञ्णिति" इत्यनेन वृद्धौ "विभाषा लीयतेः" इति विकल्पेनात्वे "अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ" इति पुगागमे धातुसंज्ञायां लुङि आत्मनेपदे तप्रत्यये "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे 'च्लि लुङि' इति च्लौ "णौ चङ्युपधाया ह्रस्वः" इति ह्रस्वे "णेरनिटि" इति णिलोपे "चङि" इति द्वित्वेऽभ्याससंज्ञायां "हलादिः शेषः" इत्यभ्यासलोपे "सन्वल्लघुनिचङ्परेऽनग्लोपे" इति सन्वद्भावे "सन्यतः" इति सूत्रेण इत्वे च विहिते "दीर्घो लघोः" इत्यभ्यासदीर्घे "अलीलपत्" इति रूपं सिद्ध्यति । "लीलोर्नुग्लुकावन्यतरस्यां स्नेहनिपातने" इत्यनेन लुगागमे "अलीलत" आत्वाभावपक्षे च पूर्वोक्तसूत्रेण नुगागमे "अलीलिनत" इति, नुगभावपक्षे च 'अलीलयत' इति रूपं च सिद्ध्यति ।

## ५—प्रश्नोत्तराणि ।

"अज्झनगमां सनि" इति । इह सूत्रे गमधातुरजादेश एव विवक्षित इति प्रकृतसूत्रे भाष्ये स्पष्टमिति ।

किमिच्छति—किमिच्छतीति विग्रहे "मान्तप्रकृतिकसुबन्ताद्व्ययाच्च क्यच् न" इति वार्तिकेन तन्निषेधे 'किमिच्छति' इत्येव सिद्ध्यति ।

युवायते—युवतिरिवेति विग्रहे "क्यङ्मानिनोश्च" इति क्यङि अनुबन्धलोपे पुंवद्भावेन तिप्रत्ययस्य निवृत्तौ नलोपे दीर्घे च विहिते 'युवायते' इति सिद्ध्यति ।

ऊढिमाख्यत्—इति विग्रहे "औजिढत्" इति रूपम् । साधनप्रकारश्च ३१ पृष्ठे द्रष्टव्यम् ।

अदद्रयञ्चमाख्यदिति विग्रहे—"आदद्द्रायत" इति रूपम् । तथाहि सर्वनामत्वाददस्शब्दस्य टेरद्र्यादेशः । त्यदाद्यत्वे सत्येव उत्वमत्वे भवतः, अत्र तु अदस् शब्दाद्विभक्तेः लुका लुप्तत्वेन विभक्तिपरकत्वाभावेन त्यदाद्यत्वाप्रवृत्तेः । इति शम् ।

---

१९३१

### ४ वर्षे २ पत्रम् ।

१—अधोनिर्दिष्टानि पदानि प्रक्रियाक्रममाश्रित्य विशेषकार्योपन्यासपूर्वकं साध्यन्ताम् । मूलकोपदंशं भुङ्क्ते, द्व्यहमत्यासम्, परिवीय, प्रेत्य, शायिका, जागरा, सुगः, तूः, यागाय याति, भुक्त्वा व्रजति ।

२—वस्, वप्, यज्, शी, तनू, एषां भावे, कर्मणि वा लटि रूपाणि साधनीयानि ।

३—अहम्भवामि, अहन्त्वामनुभवामि, इत्युभयत्र वाच्यपरिवर्तने वाक्यस्वरूपभेदोऽस्ति नवेति सप्रमाणमुपपाद्य भावे प्रत्यये कथं प्रथमपुरुषैकवचनमात्रमिति सप्रमाणमुपपाद्यताम् ।

४—निम्नलिखिताः प्रयोगाः प्रत्ययार्थमुक्त्वा धातूपन्यासपूर्वकं विशे-

वसूत्रैः साध्यन्ताम्—वास्तव्यः, पाथ्यम् इत्यः, उच्छूनः, भित्तम्, शीनम्, शुत्रं निष्नानः, उध्निमम्, याथावरः, पाणिन्धमः ।

५—प्रारम्भार्थकप्रोपोपसर्गात् क्रम्धातोः, उद्-उपसर्गात् चरधातोः, समुपसर्गात् दृश्धातोः, सन्नन्तात् श्रुधातोः व्युपोपसर्गात् रम्धातोः सूत्रोपन्यासपूर्वकं पदव्यवस्थोपपाद्यताम् ।

## १—प्रश्नोत्तराणि ।

मूलकेनोपदंशं भुङ्क्ते—इत्यत्र मूलकेन उपदंश्य भुङ्क्ते इति विग्रहे तृतीयान्ते उपपदे उपपूर्वात् दंशधातोः "उपदंशस्तृतीयायाम्" इति सूत्रेण णमुलि अनुबन्धलोपे ततो "तृतीयाप्रभृतीन्यन्यतरस्याम्" इत्यनेन समासे विभक्तेर्लुकि च विहिते गुणे प्रातिपदिकत्वात्सौ सोर्लुकि 'मूलकोपदंशं भुङ्क्ते' इति सिद्ध्यति । समासाभावे 'मूलकेनोपदंशं भुङ्क्ते' इति च सिद्ध्यति ।

नन्वत्र—मूलकस्य उपदंशनं प्रति कर्मत्वात् कथं मूलकात् तृतीया, कथञ्च वा उपदंशात् णमुल् इत्यत आह—दश्यमानस्येति । ननु मूलकस्य भुजिक्रियां प्रति करणत्वे उपदंशनेन असामर्थ्यात्समासानुपपत्तिरिति शङ्कते—यद्यपीति । अयम्भावः—उपदंशिना सह मूलकस्य कर्मत्वेनान्वयः शब्दगम्यो न भवति । तस्य भुजिक्रियां प्रति करणत्वेनान्वयस्योक्तत्वादित्याक्षिपति । समाधत्ते च तथापीति तस्यायम्भावः—भुजिक्रियां प्रति शब्दमर्यादया करणत्वेनान्वितस्यापि मूलकस्योपदंशनं प्रति आर्थिकः कर्मत्वान्वयोऽस्त्येव मूलकस्योपदंशनं प्रति वस्तुतः कर्मत्वस्य सत्वादिति ।

नन्वार्थिककर्मत्वान्वयमादाय कथं तृतीया, कथं वा णमुल्, कथं वा समास इत्यत आह—एतावतैव सामर्थ्येन प्रत्ययः समासश्च । कुत एतदित्याह तृतीयायामिति वचनसामर्थ्यादिति—ततश्चायमर्थः मूलकेन भुङ्क्ते शब्दान्वये किं कृत्वा मूलकेन भुङ्क्ते इत्याकाङ्क्षायाम् 'उपदश्य' इत्यनेनान्वेतीति । 'किमुपदश्य' इत्याकाङ्क्षायां तदेव मूलकमर्थात् कर्मत्वेनान्वेतीति शम् ।

द्व्यहमत्यासम्—द्व्यहमतिक्रम्येत्यर्थे अतिपूर्वादस्यतेः "अस्यति तृषोः क्रियान्तरे कालेषु" इत्यनेन णमुलि अनुबन्धलोपे णित्वादादिवृद्धौ समासे विभक्तेर्लुकि च कृते सवर्णदीर्घे प्रातिपदिकत्वात्सौ सोर्लुकि च कृते 'द्व्यहात्यासम्' इति सिद्ध्यति । समासाभावे 'द्व्यहमत्यासम्' इति ।

परिवीय—परिपूर्वात् व्येञ्धातोः "समानकर्तृकयोः पूर्वकाले" इति क्त्वा प्रत्यये तस्य "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति ल्यबादेशे अनुबन्धलोपे "विभाषा परेः" इत्यनेन सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे परि + वि + य इति स्थिते "ह्रस्वस्य पिति कृति तुक्" इति तुकि प्राप्ते किन्तु तुकं बाधित्वा परत्वात् "हलः" इति सूत्रेण दीर्घे च विहिते 'परिवीय' इति सिद्ध्यति ।

ननु स्वापकाले एव मुखव्यादानं हासकाल एव नेत्रनिमीलनम् । एवञ्च व्यादाननेत्रनिमीलनयोः स्वापहासपूर्वकालकत्वाभावात् कथं क्त्वा प्रत्यय इत्याशङ्क्य वदति कथम् 'मुखं व्यादाय स्वपिति' 'नेत्रे निमील्य हसति' इति । समाधत्ते व्यादाननिमीलनोत्तरकालेऽपि स्वापहासयोरनुवृत्तेस्तदंशविवक्षया भविष्यतीति दिक् ।

प्रेत्य—प्रपूर्वादिण्धातोः "समानकर्तृकयोः पूर्वकाले" इति क्त्वाप्रत्यये तस्य "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति ल्यबादेशे "आद्गुणः" इति गुणे प्राप्ते तस्यासिद्धत्वात् "ह्रस्वस्य पिति कृति तुक्" इति तुगागमे अनुबन्धलोपे गुणे प्रातिपदिकत्वात्सौ सोर्लोपे 'प्रेत्य' इति सिद्ध्यति ।

शायिका—इत्यत्र पर्यायः परिपाटीक्रमः । तस्यां द्योत्यायां "शीङ्" इत्यस्माद्धातोः "पर्यायार्हर्णोत्पत्तिषु ण्वुच्" इत्यनेन ण्वुचि अनुबन्धलोपे णित्वाद्वृद्धौ वोरकादेशे इत्वे च विहिते स्त्रीत्वविवक्षायां टापि आयादेशे सौ सोर्लोपे "शायिका" इति सिद्ध्यति ।

जागरा—इत्यत्र "जागर्तेरकारो वा" इत्यकारप्रत्यये आर्धधातुकत्वाद्गुणे च विहिते टापि अनुबन्धलोपे प्रातिपदिकत्वात्सौ सोर्लोपे "जागरा" इति सिद्ध्यति । पक्षे शप्रत्यये शित्वेन सार्वधातुकत्वात् यकि "जाग्रोऽविचिण्णल्ङित्सु" इति गुणे सौ सुलोपे "जागर्या" इति सिद्ध्यति ।

सुगः—सुष्ठु गच्छति अस्मिन्निति विग्रहे अधिकरणे वाच्ये सु इत्युपसर्गपूर्वात् गम्धातोः "सुदुरोरधिकरणे" इति वार्तिकेन डप्रत्ययेऽनुबन्धलोपे डित्वाट्टिलोपे कृदन्तत्वात् प्रातिपदिकत्वे सौ रुत्वे विसर्गे च विहिते 'सुगः' इति सिद्ध्यति ।

तूः—त्वरधातोः क्विपि अनुबन्धलोपे "ज्वरत्वरस्रिव्यविमवामुपधा-

याश्च" इत्यनेनाकारवकारयोरेकस्मिन् ऊठि अनुबन्धलोपे प्रातिपदिकत्वे सौ सोर्लोपे रस्य विसर्गे 'तूः' इति सिद्धयति ।

यागाय याति—इत्यत्र यजनं यागस्तस्मै इत्यर्थे 'यज' धातोः "भावव-चनाश्च" इति सूत्रेण घञि अनुबन्धलोपे ञित्वादादिवृद्धौ "चजोः कु घिण्ण्य-तोः" इति कुत्वे "तुमर्थाच्च भाववचनात्" इति चतुर्थीविभक्तौ 'यागाय' याति इति सिद्धयति ।

भुक्त्वा व्रजति—इत्यत्र पूर्वकालिकाद्भोजनात् उत्तरकालिकं व्रजनमित्यर्थे 'भुज्' धातोः "समानकर्तृकयोः पूर्वकाले" इति सूत्रेण क्त्वाप्रत्यये अनुबन्ध-लोपे कुत्वे चर्त्वे "भुक्त्वा" इति सिद्धयति ।

## २—प्रश्नोत्तराणि ।

"लः कर्मणि च भावे चाकर्मकेभ्यः" इति सूत्रेण सकर्मकेभ्यो धातुभ्यो कर्मणि कर्त्तरि अकर्मकेभ्यश्च भावे कर्त्तरि च लकाराः । विधीयन्ते । तत्र निवा-सार्थकोऽयं वस्धातुरकर्मकः । तस्मात् भावे "सार्वधातुके यक्" इति यक् प्रत्य-येऽनुबन्धलोपे "वचिस्वपियजादीनां किति" इत्यनेन सम्प्रसारणे वस्य उकारे सस्य षत्वे च विहिते "भावकर्मणोः" इत्यनेनात्मनेपदे लटि तप्रत्यये "टित आत्मनेपदानां टेरे" इत्यनेन टेरेत्वे "उष्यते" इति रूपं सिद्धयति ।

वप्—धातुरयं सकर्मकः । तस्मात् कर्मणि यक्प्रत्यये सम्प्रसारणे च विहिते आत्मनेपदे लटि तप्रत्यये टेरेत्वे उप्यते इति रूपं सिद्धयति ।

यजधातुः सकर्मकः, तस्मात् कर्मणि यक्प्रत्ययेऽनुबन्धलोपे सम्प्रसारणे पूर्वरूपे आत्मनेपदे लटि तप्रत्यये टेरेत्वे "इज्यते" इति सिद्धयति ।

स्वप्नार्थकृकारेत्संज्ञक 'शी' धातुरकर्मकः, तस्मात् भावलकारे यकि "अ-यङ् यि क्ङिति" इत्यनेनायङादेशे अनुबन्धलोपे आत्मनेपदे लटि तप्रत्यये टेरेत्वे "शय्यते" इति सिद्धयति ।

तनू-धातुः सकर्मकः, तस्मात् कर्मणि यक्प्रत्ययेऽनुबन्धलोपे "तनोतेर्यकि" इति विकल्पेन नकारस्याकारादेशे आत्मनेपदे लटि तप्रत्यये टेरेत्वे 'तायते' 'तन्यते' इति च सिद्धयति ।

## ३—प्रश्नोत्तराणि।

'अहम्भवामि' इति—भूधातुरकर्मकः, तस्मात् भावे, कर्त्तरि च प्रत्ययः। "लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रे भावशब्देन भावना विवक्षिता। सा च धातुत्वेन सकलधातुवाच्या भावार्थकलकारेणानूद्यते। युष्मदस्मद्भ्यां सामानाधिकरण्याभावात्प्रथमपुरुषः, औत्सर्गिकत्वात्। तिङ्वाच्यभावनायाश्चासत्त्वरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि। किन्त्वेकवचनमेव तस्यौत्सर्गित्वेन संख्यानपेक्षत्वात्, अनभिहिते कर्त्तरि च तृतीया—'अहं भवामि' इत्यस्य भावे 'मया भूयते' इति रूपम्। अयमेव च वाक्यस्वरूपभेदः। एवं—अहं त्वामनुभवामि इत्यत्र।

"उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते।
प्रहाराहारसंहारविहारपरिहारवत्" ॥

इति रीत्या अकर्मकोऽपि भूधातुरत्र सकर्मकः, तस्मात् कर्मणि प्रत्यये विहिते कर्मणो उक्तत्वात् "कर्मणि द्वितीया" इत्यनेन च अनुक्ते कर्मणि द्वितीया विधानात् उक्ते कर्मणि प्रथमा सिद्ध्यति। 'त्वाम्' इत्यस्य स्थाने 'त्वम्' इत्यस्य प्रयोगः। तदनुसारेण च 'अनु' उपसर्गपूर्वकात् भूधातोः मध्यमपुरुषैकवचने 'अनुभूयसे' इति रूपम्। कर्त्तुः 'अहम्' इत्यस्य चानुक्तत्वात् "कर्त्तृकरणयोस्तृतीया" इत्यनेनानुक्ते कर्त्तरि तृतीया विधानात् 'मया' इत्यस्य च प्रयोगः। इत्येवम् 'मया त्वमनुभूयसे' इति वाक्यस्वरूपभेदः।

## ४—प्रश्नोत्तराणि।

वास्तव्यः—वसतीति विग्रहे "वसेस्तव्यत्कर्त्तरि णिच्च" इति वार्तिकेन तव्यत् प्रत्ययेऽनुबन्धलोपे णित्वादुपधावृद्धौ कृदन्तत्वात् "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकसञ्ज्ञायां प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च "वास्तव्यः" इति सिद्ध्यति।

पाय्यम्—मीयतेऽनेनेति विग्रहे माधातोः "पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु" इति सूत्रेण निपातनात् ण्यत् प्रत्यये धात्वादेः पत्वे च विहितेऽनुबन्धलोपे "मीनातिमिनोतिदीङां ल्यपि च" इत्यनेन आत्वे "आतो युक् चिण्कृतोः" इति युगागमे उकावितौ प्रातिपदिकत्वात्सौ सोरमादेशे 'पाय्यम्' इति सिद्ध्यति।

इत्यः—एतीति विग्रहे 'इण्' धातोः "एतिस्तुशास्वृदृजुषः क्यप्"इत्यनेन क्यपि अनुबन्धलोपे "ह्रस्वस्य पिति कृति तुक्"इति तुगागमे उकावितो प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते "इत्यः" इति सिद्ध्यति ।

उच्छूनः—उदुपसर्गपूर्वकात्-'टु-ओकारेत्संज्ञकश्च श्विधातोः "क्तक्तवतू निष्ठा" इत्यनेन निष्ठासंज्ञायां "निष्ठा" इति सूत्रेण क्तप्रत्ययेऽनुबन्धलोपे कित्वात् "वचिस्वपियजादीनां किति" इत्यनेन सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे "आर्द्धधातुकस्येड्वलादेः" इतीटि प्राप्ते तस्य च "श्वीदितो निष्ठायाम्" इति निषेधे "हलः" इत्यनेन दीर्घे च विहिते निष्ठातकारस्य "ओदितश्च" इति सूत्रेण नकारे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'उच्छूनः' इति सिद्धयति ।

भित्तम्—भिद् धातोः निष्ठासंज्ञायां "निष्ठा" इत्यनेन क्तप्रत्यये विहिते "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इत्यनेन निष्ठातकारस्य नत्वे प्राप्ते शकले वाच्ये भिदेः "भित्तं शकलम्" इति सूत्रेण निषेधे धातुदकारस्य चर्त्वे प्रातिपदिकत्वात्सौ सोरमादेशे 'भित्तम्' इति सिद्ध्यति । भिदिक्रियाविवक्षायां 'भित्तं भिन्नम्' इति भाष्ये स्पष्टमिति ।

शीनम्—'श्यैङ्' इत्यस्माद्धातोः "निष्ठा" इत्यनेन क्तप्रत्यये अनुबन्धलोपे "द्रवमूर्तिस्पर्शयोः श्यः" इति सम्प्रसारणे पूर्वरूपे च कृते "श्योऽस्पर्शे" इति । निष्ठातकारस्य नकारे "हल" इति दीर्घे प्रातिपदिकत्वात्सौ सोरमादेशे 'शीनम्' घृतमिति सिद्ध्यति धातूनामनेकार्थत्वाद्घनीभूतमिति तदर्थः ।

शत्रुं निघ्नानः—'नि' इत्युपसर्गपूर्वकात् हन्-धातोः "ताच्छील्यवयोवचनशक्तिषु चानश्" इति सूत्रेण शक्तिद्योत्ये चानश् प्रत्ययेऽनुबन्धलोपे अदादित्वाच्छपो लुकि च विहिते अतः परत्वाभावात् "आने मुक्" इति मुगभावे "गमहनजनखनघसां लोपः क्ङित्यनङि" इत्युपधालोपे "हो हन्तेर्ञ्णिन्नेषु" इति कुत्वे प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च 'निघ्नानः' इति सिद्धयति । शत्रुमित्यत्र च तृन्निति प्रत्याहाराश्रयणात् "न लोकाव्ययनिष्ठाखलर्थतृनाम्" इति षष्ठीप्रतिषेधाद् द्वितीयेति ।

उप्त्रिमम्—'डु' इत्संज्ञक वप्धातोः "ड्वितः क्त्रिः" इति सूत्रेण क्त्रिप्रत्यये "क्त्रेर्मम्नित्यम्" इति सूत्रेण मप्प्रत्ययेऽनुबन्धलोपे कित्वात् "वचि-

स्त्रपियजादीनां किति" इत्यनेन सम्प्रसारणे "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपादिकसंज्ञायां प्रातिपदिकत्वात्सौ सोरमादेशे 'उदित्रमम्' इति सिद्ध्यति

**यायावरः**—'या' प्रापणे इत्यस्माद्धातोः यङि "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायां "दीर्घोऽकितः" इत्यभ्यासस्य दीर्घे 'यायाय' इति यङन्तात् "यश्च यङः" इत्यनेन वरच्प्रत्ययेऽनुबन्धलोपे हलः परत्वाभावात् "यस्य हलः" इत्यस्याप्रवृत्तौ "अतो लोपः" इत्यकारलोपे तस्य "अचः परस्मिन् पूर्वविधौ" इति स्थानिवद्भावे प्राप्ते यलोपम्प्रति "नपदान्तद्विर्वचनवरेयलोपस्वरसवर्णाऽनुस्वारदीर्घजश्चर्विधिषु" इति सूत्रेण निषेधे ततो "लोपो व्योर्वलि" इति यलोपे अल्लोपस्य च स्थानिवत्त्वमाश्रित्य "आतो लोप इटि च" इत्याकारस्य लोपे प्राप्ते "न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु" इति सूत्रेण वरे परे विहितं न स्थानिवदित्यर्थकेन तन्निषेधे प्रातिपदिकत्वात्सौ 'यायावरः' इति सिद्ध्यति ।

**पाणिन्धमः**—पाणयो ध्मायन्तेऽस्मिन्निति विग्रहे ध्मा धातोः "उग्रम्पश्येरम्मदपाणिन्धमाश्च" इति सूत्रेण खश् प्रत्ययेऽनुबन्धलोपे शित्वात्सार्वधातुकसंज्ञायां शपि कृते "पाघ्राध्मास्थाम्नादाणदृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः" इत्यनेन धमादेशे "अरुर्द्विषदजन्तस्य मुम्" इति मुमागमे उमावितौ मस्यानुस्वारे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च विहिते 'पाणिन्धमः' इति सिद्ध्यति ।

## ९—प्रश्नोत्तराणि ।

**प्रक्रमते**—प्रारम्भार्थकप्रोपसर्गपूर्वकात् क्रम्धातो "प्रोपाभ्यां समर्थाभ्याम्" इति सूत्रेणात्मनेपदे लटि तप्रत्यये टेरेत्वे 'प्रक्रमते' इति सिद्ध्यति ।

**धर्ममुच्चरते**—उदुपसर्गपूर्वकात् चरधातोः "उदश्चरः सकर्मकात्" इति सूत्रेणात्मनेपदे 'धर्ममुच्चरते' इति सिद्ध्यति ।

**सम्पश्यते**—समुपसर्गपूर्वकात् दृश्धातोः "अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्" इति वार्तिकेन आत्मनेपदे तप्रत्यये टेरेत्वे च कृते "पाघ्राध्मास्थाम्नादाणदृश्यर्ति सर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः" इति 'पश्य' आदेशे 'सम्पश्यते' इति सिद्ध्यति ।

**शुश्रूषते**—'श्रु' धातोः सन्प्रत्ययेऽनुबन्धलोपे तस्मात् "ज्ञाश्रुस्मृदृशां

सनः" इत्यात्मनेपदे द्वित्वेऽभ्यासादिकार्ये "अज्झनगमां सनि" इति दीर्घे "इको झल्" इति सनः कित्संज्ञायां "श्रयुकः किति" इतीण्निषेधे षत्वे टेरेत्वे 'शुश्रूषते' इति सिद्ध्यति ।

विरमति—'वि' इत्युपसर्गपूर्वकात् रम्धातोः "व्याङ्परिभ्यो रमः" इति सूत्रेण परस्मैपदे 'विरमति' इति सिद्ध्यति ।

उपरमति—'उप' उपसर्गपूर्वकात् रम्धातोः "उपाच्च" इति सूत्रेण परस्मैपदे 'उपरमति' इति सिद्ध्यति । अन्तर्भावितण्यर्थोऽयम् 'उपरमयति' इति तदर्थं इति शम् ।

---

१९३२

४ वर्षे १ पत्रम् ।

१—अधो लिखितपदानि सूत्रोपन्यासपूर्वकं साधनीयानि । अश्लिक्षत् , प्रनङ्क्ष्यति, ऐयः, जजन्ति, दुधुविव ।

२—रुन्धन्ति, संस्क्रियात् , अबान्धाम् , खौनाति, एते प्रयोगाः ससमन्वयं साधनीयाः ।

३—'पॄ' पूरणेऽत्र दीर्घनिर्देशस्य फलं प्रदर्श्य, प्रापयति, औननत् , अपीपटत् , एते शङ्कासमाधानपूर्वकं साधनीयाः ।

४—अरिरिषति, ईप्सति, अवनीवन् , शाशय्यते, चञ्चूर्ति एते विशेषसूत्रनिर्देशपूर्वकं साधनीयाः ।

५—अभिषिषेणयिषति, पटपटायते, स्वमनायत, एतान्संसाध्य सपत्नीवाचरतीति विग्रहे कियन्ति रूपाणीति प्रक्रियानिर्देशपूर्वकं ब्रूत ।

## १—प्रश्नोत्तराणि ।

अश्लिक्षत्—आलिङ्गनार्थक् श्लिष्धातोर्लुङ्लकारे तिप्प्रत्ययेऽनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे "च्लि लुङि" इति च्लौ "पुषादिद्युताद्यॢदितः परस्मैपदेषु" इत्यङि प्राप्ते तदपवादभूतेन "श्लिषः" इति सूत्रेण "आलिङ्गने" इति नियमात् आलिङ्गन एव च्लेः क्सादेशे अनुबन्धलोपे षढोः कः सि" इति सूत्रेण षस्य ककारे सस्य षत्वे च विहिते 'क्-ष'

संयोगे क्षत्वे 'अश्लिक्षत्' इति सिद्ध्यति । आलिङ्गनरूपार्थाभावे "पुषादिद्युताद्लृदितः परस्मपदेषु" इत्यनेन अङि 'अश्लिषत्' इति रूपं सिद्ध्यति ।

प्रनङ्क्ष्यति—प्रोपसर्गपूर्वकात् 'णश्' इत्यस्माद्धातोः "णो नः" इत्यनेन नकारे निष्पन्नात् 'नश्' इत्यस्माल्लृटि तिपि अनुबन्धलोपे "स्यतासी लृलुटोः" इत्यनेन स्यप्रत्यये "मस्जिनशोर्झलि" इति सूत्रेण नुमागमे च विहिते उभावितौ व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इत्यनेन धातुशकारस्य षकारे "षढोः कः सि" इत्यनेन षकारस्य कादेशे नुमो नकारस्य "नश्चापदान्तस्य झलि" इत्यनेनानुस्वारे परसवर्णे च कृते "उपसर्गादसमासेऽपि णोपदेशस्य" इति णत्वे प्राप्ते "नशेः षान्तस्य" इति निषेधे "प्रनङ्क्ष्यति' इति सिद्ध्यति ।

नन्वत्र षत्वे कत्वे जाते षान्तत्वाभावात्कथं णत्वप्रतिषेध इति वाच्यम् । तन्न । षस्य इत्युक्तेऽपि पदस्येत्यस्य विशेषणेन षान्तस्येति लाभादन्तग्रहणस्य भूतपूर्वगतिप्रतिपत्यर्थत्वादिति शम् ।

पेयः—'ॠ' इत्यस्माद्धातोर्लङ्लकारे तिपि अनुबन्धलोपे सार्वधातुकत्वे सार्वधातुकसञ्ज्ञायां शपि "जुहोत्यादिभ्यः श्लुः" इति श्लौ "श्लौ" इति द्वित्वेऽभ्याससञ्ज्ञायाम् "उरत्" इत्यत्वे रपरे च विहिते "हलादिः शेषः" इत्यभ्यासलोपे "अर्तिपिपर्त्योश्च" इत्यनेनाभ्यासाकारस्येत्वे "अभ्यासस्यासवर्णे" इतीयङि उत्तरखण्डस्य "सार्वधातुकाऽर्द्धधातुकयोः" इति गुणे रपरत्वे च जाते "इतश्च" इतीकारस्य लोपे "आडजादीनाम्" इत्याडागमे "आटश्च" इति वृद्धौ "हल्ङ्याभ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति सूत्रेण लोपे रेफस्य विसर्गे च विहिते 'पेयः' इति रूपं सिद्ध्यति ।

जजन्ति—जननार्थकात् 'जन' इत्यस्माद्धातोर्लेट्लकारे तिपि अनुबन्धलोपे सार्वधातुकसञ्ज्ञायां शपि "जुहोत्यादिभ्यः श्लुः" इति श्लौ "श्लौ" इति द्वित्वेऽभ्याससञ्ज्ञायां "हलादिः शेषः" इति लोपे नकारस्यानुस्वारे परसवर्णे च विहिते "जजन्ति" इति सिद्ध्यति ।

दुधुविव—ऊकारेत्सञ्ज्ञक "धू" इत्यस्माद्धातोर्लिट्लकारे उत्तमपुरुषद्विवचने वसूप्रत्ययेऽनुबन्धलोपे द्वित्वेऽभ्याससञ्ज्ञायां लोपे च विहिते "ह्रस्वः" इत्यभ्यासस्य ह्रस्वे जश्त्वे च कृते "स्वरतिसूतिसूयतिधूञूदितो वा"

इति विकल्पेनेटि प्राप्ते ततः "श्र्युकः क्किति" इति निषेधे प्राप्ते तं च बाधित्वा क्र्यादिनियमान्नित्यमिटि क्त्वादगुणनिषेधे च विहिते उवङि "दुधुविव" इति सिद्ध्यति ।

## २—प्रश्नोत्तराणि ।

रुन्धन्ति ८० पृष्ठे द्रष्टव्यम् ।

संस्क्रियात् ४१ पृष्ठे द्रष्टव्यम् ।

अबान्धाम्—४ पृष्ठे द्रष्टव्यम् ।

खौनाति—'खव्' इत्यस्माद्धातोर्लट्लकारे तिप्प्रत्यये अनुबन्धलोपे सार्व्वधातुकसञ्ज्ञायां शपि प्राप्ते क्र्यादिभ्यः श्ना' इति श्नाप्रत्ययेऽनुबन्धलोपे खव्+ना+ति इति जाते "च्छ्वोः शूडनुनासिके च" इत्यनेन वकारस्य ऊठि ठस्येत्सञ्ज्ञायां लोपे च जाते "एत्येधत्यूठ्सु" इति सूत्रेण वृद्धौ 'खौनाति" इति सिद्ध्यति ।

## ३—प्रश्नोत्तराणि ।

'पॄ' पूरणे—दीर्घोच्चारणफलम् ८१ पृष्ठे द्रष्टव्यम् ।

प्रापयति—प्रोपसर्गपूर्वक लृकारेत्सञ्ज्ञक आपधातोर्णिच्यनुबन्धलोपे आपि इत्यस्य धातुत्वे लटि तिपि "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकत्वे शपि अनुबन्धलोपे गुणेऽयादेशे दीर्घे 'प्रापयात' इति सिद्धम् ।

औननत्—२८ पृष्ठे द्रष्टव्यम् ।

अपीपटत्—पटुमाख्यदिति विग्रहे पटुशब्दात् "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" इति वार्तिकेन णिच्प्रत्ययेऽनुबन्धलोपे णित्वात्परत्वादवृद्धौ सत्यां टिलोपे धातुसञ्ज्ञायां लुङि तिपि अडागमे अनुबन्धलोपे "च्लि लुङि" इति च्लौ "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इति सूत्रेण श्लेश्चङादेशे "चङि" इत्यनेन द्वित्वेऽभ्याससञ्ज्ञायां "हलादिः शेषः" इत्यनेन लोपे "सन्वल्लघुनि चङ्परेऽनग्लोपे" इति सन्वद्भावे "सन्यतः" इतीत्वे "दीर्घो लघोः" इत्यभ्यासदीर्घे "णेरनिटि" इति णिलोपे "इतश्च" इतीकारलोपे "अपीपटत्" इति सिद्ध्यति ।

## ४—प्रश्नोत्तराणि ।

अरिरिषति—ऋइत्यस्माद्धातोः "धातोः कर्मणः समानकर्तृकादि-

च्छायां वा" इति सूत्रेण सनि अनुबन्धलोपे सनः आर्द्धधातुकसञ्ज्ञायां "स्मिपूङ्रञ्ज्वशां सनि" इति सूत्रेण सन इडागमे गुणे रपरे अरिस् इति जाते "अजादेर्द्वितीयस्य" इति रिस् शब्दस्य द्वित्वेऽभ्यासत्वे "हलादिः शेषः" इति सलोपे अरिरिस् इत्यस्य धातुत्वे लटि तिपि शपि षत्वे 'अरिरिषति' इति सिद्धम्। अत्र इस् इति सनोऽवयवः कार्यभागिति कार्यिणो निमित्तत्वाऽयोगाद् द्विर्वचनेऽचीति न प्रवर्तते इति दिक्।

**ईप्सति**—आप्तुमिच्छतीति विग्रहे लृकारेत्संज्ञकः आप्धातोः "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इत्यनेन सनि अनुबन्धलोपे "आप्ज्ञप्यृधामीत्" इत्यनेनाकारस्य ईत्वे "अजादेर्द्वितीयस्य" इति सूत्रसहकारेण "सन्यङोः" इत्यनेन 'प्स' इत्यस्य द्वित्वेऽभ्याससंयाज्ञाम् "अत्र लोपोऽभ्यासस्य" इत्यभ्यासलोपे ततः "सनाद्यन्ता धातवः" इति धातुसंज्ञायां लटि तिपि च कृते अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि शपावितौ "अतो गुणे" इति पररूपे च कृते 'ईप्सति' इति सिद्ध्यति।

**अवनीवन्**—उकारेत्संज्ञक 'वञ्चु' इत्यस्माद्धातोः "नित्यं कौटिल्ये गतौ" इति यङि "यङोऽचि च" इति लुकि च कृते द्वित्वेऽभ्याससंज्ञायां लोपे च विहिते "निग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्" इत्यभ्यासस्य नीगागमेऽनुबन्धलोपे 'वनीवञ्च' इत्यस्य धातुत्वाल्लङि तिपि अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे "यङो वा" इति विहितस्येटोः वैकल्पिकत्वात्तदभावे "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति तलोपे चकारस्य "संयोगान्तस्य लोपः" इति लोपे 'अवनीवन्' इति सिद्ध्यति।

**शाशय्यते**—पुनः पुनः अतिशयेन शीयत इति विग्रहे 'शीङ्' इत्यस्माद्धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति यङि अनुबन्धलोपे 'शीय इति स्थिते "अयङ् यि क्ङिति" इति ईकारस्य अयादेशे ततः "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायां "हलादिः शेषः" इति लोपे च कृते "दीर्घोऽकितः" इत्यभ्यासस्य दीर्घे च "शाशय्यते" इति सिद्ध्यति।

**चञ्चूर्ति**—गतिभक्षणार्थकाच्च 'चर' इत्यस्माद्धातोः "धातोरेकाचो हलादेःक्रियासमभिहारे यङ्" इति यङि "यङोऽचि च" इति लुकि च कृते "सनाद्यन्ता धातवः" इति धातुत्वाल्लटि तिपि 'यङो वा' इति इटो वैकल्पि-

त्वेन तदभावे "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायां 'चरफलोश्च' इत्यभ्यासस्य नुगागमे "उत्परस्यातः" इत्युत्तरखण्डे अकारस्य उत्वे "हलि च" इति दीर्घे 'चञ्चूर्ति' इति सिद्धयति ।

नन्वत्र तिपमाश्रित्य उकारस्य "पुगन्तलघूपधस्य च" इत्यनेन लघूपधगुणो कुतो नेति चेन्न । "उत्परस्य" इति तपरत्वात्, अन्यथा-उरित्युक्तेऽपि 'भाव्यमानोऽण् सवर्णान् न गृह्णाति' इति परिभाषयैव दीर्घादिव्यावृतेः ।

ननु यथा 'उदिति तपरकरणाद्गुणो निवर्तते तथा "हलि च" इति दीर्घोऽपि निवर्तेत इत्यत आह हलि चेति दीर्घस्तु स्यादेव, तस्यासिद्धत्वेन तपरत्वनिवर्त्यत्वायोगादिति शम् ।

## ९—प्रश्नोत्तराणि ।

अभिषिषेणयिषति—अभिषेणयितुमिच्छतीति विग्रहे "सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्" इति णिजन्तात् "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इति सन्प्रत्ययेऽनुबन्धलोपे सन आर्धधातुकत्वादिडागमे "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायां "हलादिः शेषः" इति लोपे ह्रस्वे च विहिते गुणे अयादेशे "स्थादिष्वभ्यासेन चाभ्यासस्य" इति अभ्यासादुत्तरस्य सकारस्य षत्वे "उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्" इति पूर्वसकारस्यापि षत्वे "आदेश प्रत्यययोः" इत्यनेन सनः सकारस्य षत्वे च विहिते धातुत्वाल्लटि तिपि शपि "अतो गुणे" इति पररूपे च कृते "अभिषिषेणयिषति" इति सिद्ध्यति ।

पटपटायते—पटच्छब्दात् "अव्यक्तानुकरणात् द्व्यजवरार्द्धादनितौ डाच्" इति डाचि विवक्षिते सति 'डाचि विवक्षिते द्वे बहुलम्' इति द्वित्वे ततो डाचि "नित्यमाम्रेडिते डाचि" इति पूर्वखण्डान्तस्य तकारस्य उत्तरखण्डादेः पकारस्य च पररूपे एकस्मिन् पकारे डित्वाट्टिलोपे च कृते पटपटाशब्दात् डाजन्तात् "लोहितादिडाज्भ्यः क्यष्" इति सूत्रेण क्यष्प्रत्ययेऽनुबन्धलोपे धातुसंज्ञायां तदन्ताल्लटि "वा क्यषः" इत्यनेन विकल्पेनात्मने पदे 'पटपटायते' इति सिद्ध्यति ।

ननु कृभ्वस्तियोगाभावादिह कथं डाजित्यत आह—कृभ्वस्तियोगं विनापीह

भवत्यर्थसत्तामात्रेण डाच्। कुत इत्यत आह—डाजन्तात्क्यषो विधानसामर्थ्या-
दिति शम्।

स्वमनायत—असुमनः सुमनो भवतीति विग्रहे "भृशादिभ्यो भुव्य-
च्वेर्लोपश्च हलः" इति क्यङ्प्रत्ययेऽनुबन्धलोपे सकारलोपे च विहिते "अकृ-
त्सार्वधातुकयोर्दीर्घः" इति दीर्घे क्यङन्तस्य धातुसञ्ज्ञायां लङि आत्मनेपदे
तप्रत्यये सार्वधातुकसञ्ज्ञायां शपि अनुबन्धलोपे पररूपे 'उपसर्गसमानाकारं पूर्वपद-
मिति' नियमात् मनशब्दात्प्रागेवाटि यणि च कृते "स्वमनायत" इति सिद्ध्यति।

सपत्नीवाचरतीति विग्रहे सपत्नायते, सपतीयते, सपत्नीयते,
इति त्रीणि रूपाणि भवन्ति। तत्र शत्रुपर्यायात् सपत्नशब्दात् "शार्ङ्गरवादि-
भ्यो ङीन्" इति ङीनन्तात्क्यङ्प्रत्ययेऽनुबन्धलोपे "क्यङ्मानिनोश्च"
इति पुंवद्भावेन ङीनो निवृत्तौ "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घे प्रथमं
रूपं सिद्ध्यति। ततो समानः पतिः स्वामी यस्या इति बहुव्रीहौ सपतिशब्दस्य
नत्वे ङीपि च विहिते निष्पन्नात् सपत्नीशब्दात् क्यङि पुंवद्भावेन ङीत्वनत्वयो-
र्निवृत्तौ दीर्घे द्वितीयं रूपं सिद्ध्यति।

तृतीये तु विवाहनिबन्धनं पतिशब्दमाश्रित्य समानः पतिर्यस्या इति बहुव्रीहौ
सपत्नीशब्दस्य नित्यस्त्रीलिङ्गत्वान्न पुंवत्त्वमिति शम्।

---

१९३२

४ वर्षे २ पत्रम्।

१—चेध्यति, अदायत, पैतृकमश्वा अनुहरन्ते, मातरं मातुर्वा सञ्जा-
नाति एषु विशेषकार्यं प्रदर्श्य 'णेरणौ' इति सूत्रे कति वाक्यानि
तानि सार्थानि ब्रूत।

२—मादयत्यन्नं बटुना, धापयेते शिशुमेकं समीची, भारिता, अव-
धि, एषां साधुत्वप्रकारमुक्त्वा 'तपस्तपः कर्मकस्यैव', इति सूत्र-
स्य विध्यर्थत्वं नियमार्थत्वं वेति निर्णयत।

३—'सम्भावनेऽलमिति चेत्सिद्धाप्रयोगे' इति सूत्रार्थं सोदाहरणं
व्याख्याय 'कतमो हरिं निन्देत्, कृष्णश्चेद् भुङ्क्ते त्वं शाश्चा-

रय, एते कस्य कस्योदाहरणे इति लिखित्वा च 'अत्रोष्त्राधीष्वेत्यधीते देवदत्तः, इत्यत्र कर्मणि प्रत्यये वाक्यस्वरूपं ब्रूत ।

४—जन्यम् , प्रयास्यम् , धाय्या, गृहाः, आमात् , प्रतिशोनः, ततुरिः मृगया, अप्राप्य नदीं पर्वतः, गोष्पदप्रं वृष्टो देवः, । एषु धातुप्रत्ययाः ससूत्रं लेख्याः ।

५—'शमित्यष्टाभ्यो घिनुण्' इत्यत्रोकारस्यानुबन्धत्वे फलं प्रदर्श्य आपतितदूषणं परिहृत्य 'मूलकोपदंशम्' इत्यत्र मूलकस्योपदंशनक्रियायां करणत्वाभावेन सामर्थ्याभावात् कथं प्रत्ययः समासश्चेति विशदं निरूपयत ।

## १—प्रश्नोत्तराणि ।

वेद्यति—वेद इत्यस्माद्धातोः "कण्ड्वादिभ्यो यक्" इति यकि अनुबन्धलोपे धातुसंज्ञायां लटि तिपि अनुबन्धलोपे 'वेद्यति' इति सिद्धयति ।

उदायत—उत्–आ–इत्युपसर्गपूर्वकात् यमधातोर्लुङि तप्रत्यये "तिङ्शित्सार्वधातुकम्" इति सार्वधातुकत्वे अडागमे अनुबन्धलोपे च्लौ च्लेः सिचि इत्वावितौ उत्+आ+यम्+स्+त, इति स्थिते "यमो गन्धने" इति सिचः कित्वात् "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इति मकारस्य लोपे सस्य लोपे च विहिते 'उदायत' इति सिद्धयति ।

पैतृकमश्वा अनुहरन्ते—इत्यत्र 'हरतेर्गतताच्छील्ये' इति वार्तिकेनात्मनेपदे 'पैतृमश्वा अनुहरन्ते' इति सिद्धयति ।

मातरं मातुर्वा सञ्जानाति—"सम्प्रतिभ्यामनाध्याने" इति सूत्रे आध्यानमुत्कण्ठापूर्वकस्मरणम् तद्भिन्ने एवानेनात्मनेपदविधानात्–आध्यानग्रहणाभावे 'मातरं मातुर्वा सञ्जानाति' इत्यत्राप्यात्मनेपदापत्तेः । अतस्तद्ग्रहणमिति । ननु यदा आध्याने कर्मणः शेषत्वविवक्षया षष्ठीमाश्रित्य 'मातुः सञ्जानाति' इति प्रयुज्यते तदा सम्पूर्वो जानातिरयमकर्मक इति स्थितिः । तत्र "सम्प्रतिभ्यामनाध्याने" इत्यात्मनेपदस्याप्रवृत्तावपि "अकर्मकाच्च" इति सूत्रेणात्मनेपदं दुर्वारम् । तत्र अनाध्याने इत्यभावात् । सम्प्रतिभ्यामित्यत्र अनाध्यानग्रहणस्य 'मातरं सञ्जानाति' इति सकर्मके चरितार्थत्वादित्यत आह—अना-

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ध्याने इति योगो विभज्यते। तत्सामर्थ्याच्च "अकर्मकाच्च" इति प्राप्तिरपि बाध्यते इति दिक्।

णेरणाविति—६४ पृष्ठे द्रष्टव्यम्।

## २—प्रश्नोत्तराणि।

आदयत्यन्नं बटुना—'आदयते देवदत्तेन' इत्यत्र "निगरणचलनार्थेभ्यश्च" इति प्राप्तस्यापि परस्मैपदस्य "अदेः प्रतिषेधः" इति वार्तिकेन प्रतिषेधादात्मनेपदविधानाच्च—"आदयत्यन्नं बटुना" इत्यत्रापि परस्मैपदप्रतिषेधेनात्मनेपदत्वापत्तेरित्याशङ्कायाह—'अनन्तरस्येति न्यायात्' "निगरणचलनार्थेभ्यश्च" इति सूत्रप्राप्तस्यैवायं निषेधः, "शेषात्कर्त्तरि परस्मैपदम्" इति तु स्यादेवेति दिक्।

'धापयेते शिशुमेकं समीची' इत्यत्र "निगरणचलनार्थेभ्यश्च" इति प्राप्तस्य परस्मैपदस्ये "धेट उपसङ्ख्यानम्" इति वार्तिकेन निषेधे 'धापयेते शिशुमेकं समीची' इति सिद्ध्यति।

आरिता—'ऋ' गतावित्यस्माद्धातोर्लुटि तिपि "स्यतासी लृलुटोः" इति तासि प्रत्यये अनुबन्धलोपे तिपो डादेशे डित्वाट्टिलोपे परत्वान्नित्यत्वाच्च गुणे रपरे कृते अजन्तत्वाभावेऽपि "स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च" इति सूत्रे उपदेशग्रहणाच्चिण्वद्भावे चिण्वदिटि च कृते चिण्वद्भावाद्वृद्धौ 'आरिता' इति सिद्ध्यति। इडभावे—'अर्त्ता' इति रूपं सिद्ध्यति।

अवधि—हन्धातोर्लुङि तप्रत्ययेऽडागमे च कृते 'च्लि लुङि' इति च्लौ च्लेश्चिणि अनुबन्धलोपे "आत्मनेपदेष्वन्यतरस्याम्" इति सूत्रेण वधादेशे "जनिवध्योश्च" इति वृद्धिनिषेधे "चिणो लुक्" इति तप्रत्ययस्य लुकि कृते 'अवधि' इति सिद्ध्यति।

"तपस्तपः कर्मकस्यैव" इति—'तप्यते तपस्तापसः' इत्यत्र उपवासादितपस्तापसं तपति = दुःखयतीत्यर्थः। एवञ्च तापसस्य कर्मत्वे तपेर्दुःखजननमर्थः। कर्तृत्वे तु अर्जनमर्थः तापसस्तपस्तप्यते अर्जयतीत्यर्थः। एवञ्च—क्रियाभेदात् सकर्मत्वाच्चाप्राप्ते विध्यर्थमिदं सूत्रम्। ननु विध्यर्थत्वे एवकारो व्यर्थ इत्यत आह—एवकारस्तु व्यर्थ एवेति वृत्त्यनुसारिण इति दिक्।

## ३—प्रश्नोत्तराणि ।

**सम्भावनेऽलमिति चेत्सिद्धाप्रयोगे**—उत्कटान्यतरकोटिकं ज्ञानं सम्भावनमित्युच्यते । तस्मिन् वाच्ये लिङ् स्यात्, तच्च सम्भावनम्, अलम्=पर्याप्तहेतुकं चेदिति ; अलं शब्दप्रयोगं विनापि तदर्थगम्यमाने सतीति सूत्रार्थः । तदुदाहरणं तु—**'अपि गिरिं शिरसा भिन्द्यात्'** इति । बलवन्तं पुरुषमधिकृत्य अत्युक्तिरियम् । प्रायेण शिरसा गिरिं भेत्तुमयं समर्थः । गिरिभेदसम्भावनस्य सामर्थ्यहेतुकत्वद्योतकः अपिशब्दः । अत्र लिङ्निमित्तसत्वात् क्रियातिपत्तौ भूते लिङिति दिक् ।

**कतमो हरिं निन्देत्**—३४ पृष्ठे द्रष्टव्यम् ।

**'कृष्णश्चेद्भुङ्क्ते, त्वं गाश्चारय'**—इत्यत्र "लोडर्थलक्षणे च" इति सूत्रेण विकल्पेन लट्लकारे तत्सिद्ध्यति । पक्षे—लुट्लृटाविति ।

**अधीष्वाधीष्वेत्यधीते**—कर्मणि प्रत्यये 'अधीष्वाधीष्वेति—अधीयते देवदत्तेन' इति वाक्यस्वरूपम् ।

## ४—प्रश्नोत्तराणि ।

**जन्यम्**—५२ पृष्ठे द्रष्टव्यम् ।

**प्रयाम्यम्**—इत्यत्र "गदमदचरयमश्चानुपसर्गे" इत्यनेन अनुपसर्गेभ्यो यद्विधानात् सोपसर्गेभ्यो "ऋहलोर्ण्यत्" इत्यनेन ण्यति अनुबन्धलोपे णित्वादुपधावृद्धौ प्रातिपदिकत्वात्सो सोरमादेशे **'प्रयाम्यम्'** इति सिद्ध्यति ।

**ननु "पोरदुपधात्"** इत्येव सिद्धे सूत्रे यमग्रहणं व्यर्थं सद् सोपसर्गान्माभूदिति नियमार्थम् । नचैवम् **'अनियम्यस्य नायुक्तिः'** 'त्वया नियम्या ननु दिव्यचक्षुषा' इत्यादौ का गतिरिति वाच्यम् । तन्न । 'तेन तत्र न भवेद्विनियम्यम्" इति वार्तिकप्रयोगात्—निपूर्वाद्यमेस्तु स्यादेवेति दिक् ।

**धाय्या**—धीयतेऽनया समिदिति विग्रहे **"पाय्यसान्नाय्यनिकाय्यधाय्यामानहविर्निवाससामिधेनीषु"** इत्यनेन निपातनात् करणे ण्यत्प्रत्ययेऽनुबन्धलोपे णित्वाद्वृद्धौ आयादेशे च कृते **'धाय्या'** इति सिद्ध्यति ।

**गृहाः**—गृह्णाति धान्यादिकमिति गृहम्, तात्स्थ्यादिति विग्रहे "गेहे कः" इति सूत्रेण कप्रत्यये अनुबन्धलोपे 'कित्वात्सम्प्रसारणे पूर्वरूपे च विहिते

अदन्तत्वाद्यपि प्रातिपदिकत्वाज्जसि अनुबन्धलोपे सस्य रुत्वे विसर्गे 'गृहाः' इति सिद्ध्यति ।

**आमात्**—आममत्तीति विग्रहे "अदोऽनन्ने" इति सूत्रेण विट्प्रत्ययेऽनुबन्धलोपे सवर्णदीर्घे प्रातिपदिकत्वात्सौ सोर्लोपे **'आमात्'** इति सिद्ध्यति ।

**प्रतिशीनः**—इत्यत्र प्रतिपूर्वात् श्यः निष्ठाक्तप्रत्ययेऽनुबन्धलोपे "प्रतेश्च" इति सम्प्रसारणे पूर्वरूपे च विहिते 'शि+त' इति जाते "श्योऽस्पर्शे" इति निष्ठातकारस्य नत्वे "हलः" इति सूत्रेण दीर्घे च कृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे **'प्रतिशीनः'** इति सिद्ध्यति ।

**ततुरिः**—'तॄ'-इत्यस्माद्धातोः "आदृगमहनजनः किकिनौ लिट् च" इति सूत्रेण किप्रत्ययेऽनुबन्धलोपे लिड्वदतिदेशाच्च द्वित्वे उरदत्वे रपरत्वे च विहिते "हलादिः शेषः" इति लोपे अनभ्यासे "बहुलं छन्दसि" इत्युत्वे रपरत्वे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे **'ततुरिः'** इति सिद्ध्यति ।

**मृगया**—६७ पृष्ठे द्रष्टव्यम् ।

**अप्राप्य नदीं पर्वतः**—इत्यत्र परनदीयोगोऽत्रपर्वतस्य । तथा च—परेण पूर्वस्य योगे गम्ये धातोः क्त्वाप्रत्यये तस्य च ल्यबादेशेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ सोर्लोपे **'अप्राप्य नदीं पर्वतः'** इति सिद्ध्यति ।

**गोष्पदप्रं वृष्टो देवः**—इत्यत्र वृष्टेर्गोष्पदपूरणक्षमत्वादल्पत्वे गम्ये 'गोष्पद' पूर्वकात् पूरेर्णमुलि अनुबन्धलोपे विकल्पेन ऊकारस्य लोपे च विहिते प्रातिपदिकत्वात्सौ सोरमादेशे **'गोष्पदप्रं वृष्टो देवः'** इति सिद्ध्यति ।

## ८—प्रश्नोत्तराणि ।

"शमित्यष्टाभ्यो घिनुण्" अत्र सूत्रे उकार उच्चारणार्थ इति काशिका, अनुबन्ध इति भाष्यम् । तेन 'शमिनीतरा' इत्यादौ शमिन् शब्दात् स्त्रियां "ऋन्नेभ्यो ङीप्" इति नान्तलक्षणङीबन्तात् तरबन्ताद्यपि कृते भाष्यमते उगित्वाद्ध्रस्वः सिद्ध्यति । काशिकामते तु—उगित्वाभावान्न ह्रस्वः । नच ह्रस्वाऽभावे "तसिलादिष्वाकृत्वसुचः" इति पुंवत्वं शङ्क्यम् । तत्र "संज्ञा पूरण्योश्च" इति निषेधात् ।

ननु भाष्यरीत्या उगित्वाभ्युपगमे 'शमी शमिनौ', इत्यादौ "उगिदचां सर्वनामस्थानेऽधातोः" इति सूत्रेण नुम्प्रसङ्गः । तत्र "उगिदचां सर्वनाम-

स्थानेऽधातोः" इति सूत्रे "नपुंसकस्य झलचः" इत्युत्तरसूत्रात् झल्ग्रहणमपकृष्य झलन्तानामेव तद्विधानात्। एतत्सर्वं 'युवोरनाकौ" इति सूत्रे भाष्ये स्पष्टमिति दिक्।

मूलकोपदंशमिति—८५ पृष्ठे द्रष्टव्यम्।

---

१९३३

४ वर्षे १ पत्रम्।

१—पपरुः, अभृत, जिगति, दिदीये, एतान् सूत्रोपन्यासपूर्वकं संसाध्य 'राधोऽकर्मकाद्वृद्धावेव' इत्यत्रैवकारस्य भिन्नक्रमत्वे प्रमाणं फलञ्च वदत।

२—ररन्धिव, स्तरिषीष्ट, जिघाय, अष्टा, एषां सिद्धिप्रकारमभिधाय 'आलिङ्गने' इति सूत्रस्य विधायकत्वे को दोषः, सुस्पष्टमुच्यताम्।

३—बभ्रज्ज, सिञ्चति, तृणेढि, क्षौनीहि, एतान् विशेषकार्यप्रदर्शनपुरस्सरं साधयित्वा, ऊनधातौ ज्ञापकस्य सजातीयाऽपेक्षत्वे फलं प्रमाणञ्च निरूपणीयम्।

४—ऐर्ष्यियत्' ऊर्णुनुविषति, अरिरिषति, सिस्वादयिषति, एषु विशेषकार्याणि दर्शयत।

५—जङ्घन्यते, चञ्चूर्तः, अजर्घतं, आजायते, फेनायते, सिद्धिं विलिख्य रूपत्नीवाचरतीति विग्रहे रूपाणि वदत।

## १—प्रश्नोत्तराणि।

पपरुः—"पृ" इत्यस्माद्धातोर्लिट्लकारे झिप्रत्यये "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इत्यतुसादेशे "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्याससञ्ज्ञायां "उरत्" इत्यत्वे रपरत्वे "हलादिःशेषः" इति लोपे "शृदृप्रां ह्रस्वो वा" इत्यनेन विकल्पेन ह्रस्वे यणि च सस्य रुत्वे विसर्गे "पप्रुः" इति सिद्ध्यति। ह्रस्वादेशपक्षे "ऋच्छत्यॄताम्" इति गुणे रपरे सस्य रुत्वे विसर्गे "पपरुः" इति सिद्ध्यति।

अभृत—'भृ' इत्यस्माद्धातोर्लुङि आत्मनेपदे तप्रत्यये "च्लि लुङि" इति च्लौ "च्लेः सिच्" इति सिजादेशे इडभावे "ह्रस्वादङ्गात्" इति सलोपे

अडागमे च विहिते 'अभृत' इति सिद्ध्यति ।

जिगति—स्तुतावित्यर्थकात् 'गा' इत्यस्माद्धातोर्लटि झिप्रत्यये सार्वधातुकसञ्ज्ञायां शपि "जुहोत्यादिभ्यः श्लुः" इति श्लौ "श्लौ" इति सूत्रेण द्वित्वेऽभ्याससञ्ज्ञायां ह्रस्वे च विहिते "भृञामित्" इत्यत्र "बहुलं छन्दसि" इति वचनादभ्यासस्येत्वे "कुहोश्चुः" इति चुत्वे "अदभ्यस्तात्" इति झस्यादादेशे "श्नाभ्यस्तयोरातः" इत्याकारलोपे 'जिगति' इति सिद्ध्यति ।

दिदीये—क्षयार्थकात्–ङकारेत्सञ्ज्ञक दी इत्यस्माद्धातोर्लिटि आत्मनेपदे तप्रत्यये "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्यास संज्ञायां ह्रस्वे च कृते "लिटस्तझयोरेशिरेच्" इत्यनेन एशादेशेऽनुबन्धलोपे 'दि + दी + ए' इति स्थिते परत्वात् "एरनेकाचोऽसंयोगपूर्वस्य" इति यणि प्राप्ते नित्यत्वात् "दीङो युडचि क्ङिति" इति युडागमेऽनुबन्धलोपे टित्वादाद्यवयवे 'दिदीये' इति सिद्ध्यति ।

ननु युटि कृतेऽपि तस्यासिद्धत्वात् यण् दुर्वारस्तथा च दिद्य्ये इति स्यात्, इकारो च श्रूयेत यकारद्वयं च श्रूयेत इत्यत आह "वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ" इति तन्निषेधादिति दिक् ।

"राधोऽकर्मकात् वृद्धावेव" इति राधधातोरकर्मकाद्वृद्धावेवार्थे श्यन् भवतीति प्रतीयमानोऽर्थः । एवं सति अकर्मकादिति व्यर्थम् । राधेरर्थान्तरे च श्यन् न स्यात् । इष्यते हि 'अपराध्यति' इत्यादौ द्रोहाद्यर्थेऽपि श्यन् । तदाह एवकारो भिन्नक्रमः, अर्थात् वृद्धावित्यतः उद्ध्वं पठितः एवकारः, अन्यत्र निवेशनीयः । तदेव–दर्शयति–राधोऽकर्मकादेव श्यन् । एवञ्च–अर्थान्तरेऽपि श्यन् सिद्ध्यति । शत्रुं हिनस्तीत्यर्थे 'शत्रुमपराध्नोति' इत्यत्र सकर्मकत्वात् न श्यनिति भावः । तर्हि—वृद्धावित्यस्य किं प्रयोजनमित्याशङ्क्य अकर्मकक्रिया एवं विधेति प्रदर्शनार्थं तत् । ननु परिसङ्ख्यानार्थमित्याह—उदाहरणमाह—वृद्धाविति । तथाविधार्थान्तराणि उदाहरति–'यन्मह्यमपराध्यति' द्रुह्यतीत्यर्थः । 'विराध्यन्तं क्षमेत कः' द्रुह्यन्तमित्यर्थ इति शम् ।

## २—प्रश्नोत्तराणि ।

ररन्धिव—हिंसार्थकात् 'रध' इत्यस्माद्धातोर्लिटि 'वस्प्रत्यये "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्याससञ्ज्ञायां "हलादिः शेषः" इत्यनेन लोपे "रधिजभोरचि" इति नुमागमे उभावितौ "आर्धधातुकस्येड्वलादेः"

इतोऽडागमे प्राप्ते "रधादिभ्यश्च" इति विकल्पेन इडागमे सस्य लोपे च विहिते "ररन्धिथ" इति सिद्ध्यति ।

स्तरिषीष्ट—५८ पृष्ठे द्रष्टव्यम् ।

जिघाय—६९ ,, ,,

अष्टा—सङ्घातार्थकात्–ऊकारेत्सञ्ज्ञक "अश्" इत्यस्माद्धातोः लुटि तिपि "स्यतासी लृलुटोः" इति तासूप्रत्यये "लुटः प्रथमस्य डारौरसः" इति तिपो डादेशे डित्वसामर्थ्याद्भस्यापि टेर्लोपे "स्वरतिसूतिसूयतिधूञूदितो वा" इति विकल्पेनेडागमे 'अशिता' इति सिद्ध्यति । इडभावे—'व्रश्चभ्रस्ज-सृजमृजयजराजभ्राजच्छशां षः" इति शस्य षत्वे ष्टुत्वे च विहिते "अष्टा" इति सिद्ध्यति ।

"आलिङ्गने" इति आलिङ्गने विद्यमानात् श्लिषेः परस्य च्लेः क्सः स्यादिति सूत्रार्थः ।

ननु 'श्लिषः' इति पूर्वसूत्रेणैव सिद्धे 'आलिङ्गने' इति सूत्रं व्यर्थं सन्नियमार्थं भविष्यति—"श्लिषश्च्लेरालिङ्गने एव क्सो नान्यत्र" इति ।

ननु "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति न्यायेन "श्लिषः" इति सूत्रप्राप्तस्यैवायं नियमः, नतु "शल इगुपधादनिटः क्सः" इत्यस्यापीति चेन्न । यदि 'श्लिषः' इति प्राप्त एव क्स आलिङ्गन एव नियम्येत तर्हि "श्लिष आलिङ्गने" इत्येकसूत्रत्वे सत्यपि अनालिङ्गने क्सो नेत्यर्थस्य सिद्धत्वात् योगविभागो व्यर्थः स्यादिति योगविभागारम्भसामर्थ्यात् "शल इगु-पधादनिटः क्सः" इति सूत्रविहितक्सोऽपि "श्लिषेरालिङ्गने एव नत्वनालि-ङ्गनेऽपि इति नियमो विज्ञायत इति दिक् ।

बभ्रज्ज—'भ्रस्ज' धातोर्लिटि तिपि तिपो "परस्मैपदानां णलतुसुस्थ-लथुसणल्वमाः" इति सूत्रेण णलि च कृते 'भ्रस्ज अ' इति स्थिते "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्याससंज्ञायां लोपे च कृते "अभ्यासे चर्च" जश्त्वे "भ्रस्जो रोपधयो रमन्यतरस्याम्" इति रमागमेऽनुबन्ध-लोपे 'बभर्ज' इति सिद्ध्यति रमागमाभावे सस्य श्चुत्वेन शकारे तस्य जश्त्वेन जकारे च कृते 'बभ्रज्ज' इति सिद्ध्यति ।

सिञ्चति—क्षरणार्थकात् 'षिच' इत्यस्माद्धातोः "धात्वादेः षः सः"

इत्यनेन सत्वे लटि तिपि सार्वधातुकसंज्ञायां शपि प्राप्ते "तुदादिभ्यः शः" इत्यनेन शप्रत्ययेऽनुबन्धलोपे "शे मुचादीनाम्" इति नुमागमे उभावितौ श्चुत्वेन ञकारे 'सिञ्चति' इति सिद्ध्यति।

तृणेढि—हिंसार्थकात् तृह इत्यस्माद्धातोर्लटि तिपि सार्वधातुकसंज्ञायां शपि प्राप्ते "रुधादिभ्यः श्नम्" इति श्नमि अनुबन्धलोपे "तृणह इम्" इतीमागमे अनुबन्धलोपे "हो ढः" इति हस्य ढत्वे "झषस्तथोर्धोऽधः" इति तकारस्य धकारे ष्टुत्वे "ढो ढे लोपः" इति लोपे च कृते गुणे नस्य णत्वे 'तृणेढि' इति सिद्ध्यति।

क्षौनीहि—५ पृष्ठे द्रष्टव्यम्।

ऊनधातौ ज्ञापकस्य सजातीयापेक्षत्वादिति—"ओः पुयण्ज्यपरे" इति सूत्रव्याख्यावसरे १६ पृष्ठे द्रष्टव्यम्।

## ४—प्रश्नोत्तराणि।

ऐर्ष्यियत—२९ पृष्ठे द्रष्टव्यम्।

ऊर्णुनुविषति—७ पृष्ठे द्रष्टव्यम्।

अरिरिषति—९३ ,, ,,

सिस्वादयिषति—'ष्वद्' इत्यस्माद्धातोः "धात्वादेः षः सः" इति सत्वे निष्पन्नात् 'स्वद्' इत्यस्मात् णिचि अनुबन्धलोपे उपधावृद्धौ स्वादि इत्यस्मात्सनि सन आर्धधातुकत्वादिडागमे "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायां लोपे च विहिते णेर्गुणे अयादेशे सनः सस्य षत्वे "सन्यतः" इत्यभ्यासाकारस्य इत्वे धातुसकारस्य षत्वे प्राप्ते "सः स्विदिस्वदिसहीनां च" इति नियमात् सस्य स एवादेशे 'सिस्वादयिषति' इति सिद्ध्यति।

## ५—प्रश्नोत्तराणि।

"जङ्घन्यते" इत्यत्र गर्हितं गच्छतीत्यर्थे "हन्तेर्हिंसायां यङि घ्नी भावो वाच्यः" इति वार्तिकेन हिंसायां यङि हन्तेः घ्नी भावविधानात् वार्तिके हिंसायां ग्रहणाभावे 'जङ्घन्यते' इत्यत्रापि, घ्नीभावापत्तिः स्यात्तद्वारणार्थं हिंसायामिति ग्रहणं कर्त्तव्यमिति शम्।

चञ्चूर्तः—चर गतौ भक्षणे, अस्माद्यङ्लुङि कटस्तप्रत्यये ईडभावे द्वित्वे

"चरफलोश्च" इत्यभ्यासस्य नुकि "उत्परस्यातः" इत्यकारस्य उकारे "हलि च" इति दीर्घे सस्य रुत्वे विसर्गे च विहिते 'चञ्चूर्त्तः' इति सिद्धयति।

अजर्घर्त—"गृध" इत्यस्माद्धातोः यङि, यङ्लुकि च कृते प्रत्ययलोपे प्रत्ययलक्षणतया धातुसंज्ञायां लुङि तिपि अडागमे अनुबन्धलोपे द्वित्वेऽभ्याससंज्ञायां लोपे च विहिते ईडभावे उरदत्वे रपरे च कृते "कुहोश्चुः" इति चुत्वे 'अज गृंध + त + इति स्थिते पित्वादङित्वात् गुणे रपरे "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति तकारलोपे पदान्तस्य गस्य भष्भावेन घकारे घस्य च जश्त्वेन दकारे तस्य "वाऽवसाने" इति विकल्पेन चर्त्वे 'अजघर्त' इति सिद्धयति।

ओजायते—ओजस्वीवाचरतीति विग्रहे ओजश्शब्दात् "कर्त्तुः क्यङ सलोपश्च" इति क्यङि विकल्पेन सलोपे च प्राप्ते 'ओजसोऽप्सरसो नित्यमितरेषां विभाषया' इति वार्तिकेन नित्य एव सलोपे "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घे धातुसंज्ञायां लटि क्यङो ङित्वादात्मनेपदे तप्रत्यये टेरेत्वे 'ओजायते' इति सिद्धयति।

फेनायते—फेनमुद्वमतीतिविग्रहे "फेनाच्च" इति वार्तिकेन क्यङ्प्रत्ययेऽनुबन्धलोपे "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घे "सनाद्यन्ता धातवः" इति धातुसंज्ञायां लटि ङित्वादात्मनेपदे तप्रत्यये टेरेत्वे च कृते 'फेनायते' इति सिद्धयति।

सपत्नीवाचरतीति विग्रहे—सपत्नायते इति रूपम्। साधनप्रकारश्च—९६ पृष्ठे द्रष्टव्यम्।

---

१९३३

४ वर्षे २ पत्रम्।

१—क्रोधं विनयते, सर्पिषोऽनुजिज्ञासते, मुमूर्षति, एषु कथमात्मनेपदपरस्मैपदे भवतः इति शङ्कासमाधिपुरस्सरं ब्रूत।

२—शीङो लटि, गिरतेर्लुङि स्वमि, लभेर्लुङि, ते भावकर्मणोर्यया रीत्या यादृशानि रूपाणि जायन्ते तानि लिखत।

३—अन्योन्यं स्पृशतः, गौः पयो दुग्धे' ग्रन्थते ग्रन्थः, कं धर्म

त्यजे" सम्भावयामि भुञ्जीत भोदयते वा, ऊध्वं मुहूर्तादयजतां स्म, अत्र ससूत्रं विशेषकार्यं प्रदर्शयत ।

४—नञि उपपदे वदः, कृ-भञ्ज-भूधातुभ्यश्चार्थविशेषे कृत्यप्रत्यये रूपाण्युक्त्वा, दुराढ्यम्भवम्, घनाघनः, द्विकरः, नरं मन्यः, समक्नः, वृत्तम्, पोत्रम्, ओढुम, चिक्लिदम्, द्व्यहन्तर्षम्, नानाभावम्, एतानि कस्माद्धातोः केन कस्मिन् प्रत्यये सिद्ध्यन्तीति विशदं वर्णयत ।

५—"कर्मवत्कर्मणा तुल्यक्रियः" इति सूत्रे 'कर्मणेति किम्, इति प्रश्ने स्वसंस्कृतेन शङ्कासमाधाने सम्यक् लेखनीये ।

६—"प्रकाशनस्थेयाख्ययोश्च" "यथाविध्यनुप्रयोगः पूर्वस्मिन्" "लक्षणहेत्वोः क्रियायाः" समासत्तौ" "न क्विचि दीर्घश्च" एतेषां सूत्राणां केवलमर्था लेख्याः ।

## १—प्रश्नोत्तराणि ।

क्रोधं विनयते—७५ पृष्ठे द्रष्टव्यम् ।

सर्पिषोऽनुजिज्ञासते—२१ पृष्ठे द्रष्टव्यम् ।

मुमूर्षति—अत्र 'आशङ्कायां सन् वक्तव्यः' इत्यनेन सन् भवति "पूर्ववत्सनः" इत्यात्मने पदमिह न शङ्क्यम् 'शदेः' इत्यादि सूत्रद्वये सनो नेत्यनुवर्त्य-वाक्यभेदेन व्याख्यानात्—

## २—प्रश्नोत्तराणि ।

शीङो लटि भावकर्मणोः शय्यते इति रूपम् । ८७ पृष्ठे द्रष्टव्यम् ।

गिरतेर्लुङि ध्वमि च भावकर्मणोः चतुरधिकं शतं रूपम् । तथाहि—'गॄ' इत्यस्माद्धातोर्लुङि ध्वमि अडागमे च कृते च्लौ च्लेः सिचि च जाते इचाविती 'अ+गॄ+स्+ध्वम्' इति स्थिते चिण्वदिटि वृद्धौ रपरत्वे "धि च" इत्यनेन सलोपे 'अगारिध्वम्' इति रूपम् । द्वितीये तु चिण्वदिड्भावपक्षे बलादित्वात् सिचः इडागमे ऋकारस्य गुणे रपरे 'धि च' इति सलोपे "वॄतो वा" इति दीर्घविकल्पे 'अगरीध्वम्' 'अगरिध्वम्' इति रूपद्वयम् । एषां त्रयाणां लत्वं ढत्वं द्वित्वत्रयं चेति पञ्चवैकल्पिकानि । इत्थं षण्णवतिः । "लिङ्सिचोरात्मनेपदेषु" इति विकल्पादिड्भावे "उश्च" इति कित्वम् । इत्थं रपरत्वं "हलि च" इति

दीर्घः । "इणः षीध्वं लुङ्लिटां धोऽङ्गात्" इति नित्यं ढत्वम् । 'अगीढ्वम्' इति । ढत्वमानां द्वित्वविकल्पेऽष्टौ । उक्तषण्णवत्या सह सङ्कलने पूर्वोक्ता सङ्ख्येति । उक्तञ्च ।

इट् दीर्घश्चिण्वदिट् लत्वं ढत्वं द्वित्वत्रिकं तथा ।
इत्यष्टानां विकल्पेन चतुर्भिरधिकं शतम् ॥

लभेर्लुङि ते भावकर्मणोः 'अलम्भि' 'अलाभि' इति रूपे । तथाहि लभधातोर्लुङि भावकर्मणोरात्मनेपदे तप्रत्यये अडागमे 'च्लि लुङि' इति च्लौ श्लेश्चिणि अनुबन्धलोपे 'चिणो लुक्' इति तशब्दस्य लुकि "विभाषा चिण्णमुलोः" इति विकल्पेन नुमागमे अनुस्वारे । 'अलम्भि' इति तदभावे णित्वादादिवृद्धौ 'अलाभि' इति रूपञ्च सिद्ध्यति ।

ननु 'प्रालम्भि' 'उपालम्भि' इत्यादौ उपसर्गपूर्वस्यापि लभेर्नुम् विकल्पः स्यादित्यत आह—व्यवस्थितविकल्पत्वात्प्रादेर्नित्यं नुम् । 'प्रालम्भि' इति ।

## ३—प्रश्नोत्तराणि ।

अन्योन्यं स्पृशतः—इत्यत्र "सकर्मकाणां प्रतिषेधो वक्तव्यः" इति वार्तिकेन कर्मवद्भावप्रतिषेधे "अन्योन्यं स्पृशतः" इति सिद्ध्यति । कर्मवद्भावे तु यकि तङि च 'स्पृश्येते' इति स्यादिति भावः ।

गौः पयो दुग्धे—इत्यत्र 'गां दोग्धि पयः' इत्यत्र किं देवदत्तः गां पयो दोग्धि, स्वयमेव गौः पयो दुग्धे इति कर्मकर्त्तरि विवक्षायां "न दुहस्नुनमां यक्चिणौ" इति सूत्रेण दुहेरनेन यक एव निषेधे चिण् तु "दुहश्च" इति सूत्रेण विकल्पिष्यते, दुग्धे इत्यत्र दुहेः कर्मकर्त्तरि यकि निषिद्धेऽपि तस्य "अदिप्रभृतिभ्यः शपः" इति शपो लुकि तत्सिद्ध्यति ।

ग्रन्थते ग्रन्थः—इत्यत्र 'ग्रन्थम् ग्रन्थति' किं देवदत्तः ग्रन्थं ग्रन्थति 'स्वयमेव 'ग्रन्थते ग्रन्थः' इति कर्मकर्त्तरि विवक्षायां 'णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसङ्ख्यानम्' इति वार्तिकेन यक्निषेधे तत्सि ध्यति ।

कथं धर्मं त्यजेः—इत्यत्र "विभाषा कथमि लिङ् च" इति सूत्रेण लिङ्लकारे चकाराल्लटि च 'कथं धर्मं त्यजेः, त्यजसि' वेति सिद्ध्यति ।

सम्भावयामि भुञ्जीत, भोक्ष्यते वा"इत्यत्र "विभाषा धातौ सम्भावनवचनेऽयदि" । इति सूत्रेण विकल्पेन लिङ्लकारे "सम्भावयामि भुञ्जीत भोक्ष्यते वे"ति सिद्ध्यति ।

ऊर्ध्वं मुहूर्ताद्यजतां स्म—इत्यत्र 'स्मे लोट्' इति सूत्रेण लोड्लकारे 'ऊर्ध्वं मुहूर्ताद्यजतां स्म' इति सिद्ध्यति ।

## ४—प्रश्नोत्तराणि ।

**अवद्यम्**—इत्यत्र वदेर्नञ्युपपदे "वदः सुपि क्यप् च" इति यत्क्यपोः प्राप्तयोः "अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु" इति सूत्रेण निपातनात् 'यदेव' सोऽपि गर्ह्यायामेवेति कृदन्तत्वात्प्रातिपदिकसंज्ञायां सौ सोरमादेशे 'अवद्यं पापम्' इति सिद्ध्यति ।

**अर्यः**—इत्यत्र 'ऋ' गतावित्यस्मात् "ऋहलोर्ण्यत्" इति ण्यति प्राप्तेऽपवादत्वात् "अर्यः स्वामिवैश्ययोः" इत्यनेन यत्प्रत्ययेऽनुबन्धलोपे ऋकारस्य गुणे रपरे च कृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च विहिते 'अर्यः' इति सिद्ध्यति । अन्यत्र ण्यति वृद्धौ रपरे च कृते 'आर्यो ब्राह्मणः' इति च सिद्ध्यति ।

**आज्यम्**—'आङ्' इत्युपसर्गपूर्वकादुकारेत्संज्ञक 'अञ्जु' इत्यस्माद्धातोः बाहुलकात्करणे क्यपि अनुबन्धलोपे "अनिदितां हल उपधायाः क्ङिति" इत्यनेन नलोपे प्रातिपदिकत्वात्सौ सोरमादेशे 'आज्यम्' इति सिद्ध्यति ।

**भव्यम्**—इत्यत्र "भुवो भावे" इति सूत्रेण सुबुपपदादेव क्यपो विधानात् अत्र च सुबुपपदत्वाभावात् यत्प्रत्ययेऽनुबन्धलोपे गुणे अवादेशे च कृते प्रातिपदिकत्वात्सौ सोरमादेशे 'भव्यम्' इति सिद्ध्यति ।

**दुराढ्यम्भवम्**—अनाढ्येन आढ्येन दुःखेन भूयत इति विग्रहे 'कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम्' इति वार्तिकेन खल्प्रत्ययेऽनुबन्धलोपे खित्वान्मुमागमे उमावितौ गुणेऽवादेशे कृदन्तत्वात्प्रातिपदिकसंज्ञायां सौ सोरमादेशे "दुराढ्यम्भवम्" इति सिद्ध्यति ।

**घनाघनः**—इत्यत्र 'हन्तेर्घत्वं च' इति वार्तिकेन हन्धातोरचि द्वित्वेऽभ्यासस्य घत्वे आक्च कृतेऽनुबन्धलोपे उत्तरखण्डस्य हकारस्य च "अभ्यासाच्च" इति कुत्वे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते "घनाघनः" इति सिद्ध्यति ।

**दिवाकरः**—दिवा करोतीति विग्रहे 'दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घा-

वाह्यहर्यंचद्धनुरुरुषु" इति सूत्रेण कृधातोष्टप्रत्ययेऽनुबन्धलोपे गुणे रपरे च विहिते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'द्विकरः' इति सिद्धयति ।

नरम्मन्यः—नरमात्मानं मन्यत इत्यर्थे "आत्ममाने खश्च" इति सूत्रेण खश्प्रत्ययेऽनुबन्धलोपे शित्वात्सार्वधातुकसंज्ञायां शपि प्राप्ते श्यनि कृते अनुबन्ध-लोपे सुपो लुकि च कृते खित्वान्मुमागमे प्राप्ते तम्प्रबाध्य "इच एकाचोऽम्प्र-त्ययवच्च" इत्यनेनामागमे अम्प्रत्ययवदित्यतिदेशात् "ऋतोङिसर्वना-मस्थानयोः" इति गुणे रपरत्वे कृदन्तत्वात्प्रातिपदिकसंज्ञायां सौ रुत्वे विसर्गे च कृते 'नरम्मन्य' इति सिद्धयति ।

समक्षः—१३ पृष्ठे द्रष्टव्यम् ।

वृत्तम्—ण्यन्तात् वृतेः धातोः क्तप्रत्यये अनुबन्धलोपे आर्द्धधातुकत्वे वला-दित्वादिडागमे प्राप्ते "णेरध्ययनेवृत्त म्"इति सूत्रेण निपातनात् क्तस्येडभावोणि-लुक् च जाते प्रातिपदिकत्वात्सौ सोरमादे पूर्वरूपे "वृत्तं छन्दः" इति सिद्धयति ।

पोत्रम्--इत्यत्र "हलसूकरयोः पुवः" इति सूत्रेण पूङ्पूञोर्वा करणे ष्ट्रन प्रत्ययेऽनुबन्धलोपे गुणे वलादित्वादिडागमे प्राप्ते "तितुत्रतथसिसुसरक-सेषु च" इति निषेधे प्रातिपदिकत्वात्सौ सोरमादेशे 'पोत्रम्' इति सिद्धयति ।

ओम्नः—इत्यत्र "अवोदैधौद्म प्रश्रथहिमश्रथाः" इति सूत्रेण निपात-नात् उन्देरौणादिके मन्प्रत्यये नलोपे गुणे च विहिते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च 'ओद्मः' उन्दनम् , इति सिद्धयति ।

चिक्लिदम्—'क्लिद्' त्यस्माद्धातोः "द्वित्वप्रकरणे के कृञादीना-मिति वक्तव्यम्" इति वार्तिकेन कप्रत्ययेऽनुबन्धलोपे द्वित्वेऽभ्यासकार्ये कृदन्त-त्वात्प्रातिपदिकसंज्ञायां सौ सोरमादेशे 'चिक्लिदम्' इति सिद्धयति ।

द्व्यहतर्षम्—द्व्यहं तृष्णात्रती कृत्वेति विग्रहे "अस्यतितृषोः क्रियान्त-रेकालेषु' इत्यनेन द्वितीयान्तेषूपपदेषु तृष्यतेर्णमुलि अनुबन्धलोपे गुणे रपरे च विहिते कृदन्तत्वात्प्रातिपदिकसंज्ञायां सौ सोरमादेशे "द्व्यहतर्षम्" इति सिद्धयति ।

नानाभावम्—इत्यत्र अनाना नानाभूत्वेति विग्रहे "नाधार्थप्रत्यये च्व्यर्थे" इत्यनेन णमुलि अनुबन्धलोपे णित्वाद्वृद्धौ प्रातिपदिकत्वात्सौ सोरमा-देशे आवादेशे च विहिते "नानाभावम" इति सिद्धयति ।

**कर्मणेति किम्**—ननु "**कर्मवत्कर्मणा तुल्यक्रियः**" इति सूत्रे कर्मणेतिपदाभावे "**असिना छिनत्ति स्थाल्यां पचति**" इत्यत्र करणाधिकरणयोर्यो व्यापारः स एव 'असिश्छिनत्ति स्थाली पचति' इत्यत्र कर्तृस्थ इति तत्रापि कर्मवत्वं स्यात्तन्निवृत्यर्थं 'कर्मणा' इति पदम् ।

ननु "**कर्मवत्कर्मणातुल्यक्रियः**" इति सूत्रे '**धातोरेकाचो हलादेः क्रियासमभिहारे यङ्**" इति सूत्राद्धातोरित्यनुवर्त्य धातोर्वाच्यया क्रियया तुल्यक्रिय इत्यर्थे करणत्वाद्यवस्थायां वस्तुतः सन्नपि असिस्थाल्योर्व्यापारो न धातूपात्त इति नोक्तदोष इत्यस्वरसादाह—**किञ्च—कर्तृस्थक्रियाभ्यो माभूदिति ।** '**गच्छति ग्रामः' 'आरोहति हस्ती अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधाति वा**' यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते यथा '**पक्वेषु तण्डुलेषु**' यथा वा **छिन्नेषु काष्ठेषु,** तत्र कर्मस्था क्रिया, नेतरत्र न हि पक्वापक्वतण्डुलेष्विव गतागतग्रामेषु वैलक्ष्यण्यमुपलभ्यते ।

**ननु** 'ज्ञानेच्छयोरिव यत्नस्यापि कर्तृस्थत्वात् तद्वाचिनः कृञोऽपि कर्ता न कर्मवत् स्यात् । ततश्च '**क्रियते घटः स्वयमेव**' इति यगादिः न सिद्ध्येदित्याशङ्क्य कृञो न यत्नार्थत्वमित्याह—**करोतिरुत्पादनार्थः ।** उत्पत्तिश्च कर्मस्था । तेन '**करिष्यते घटः**' इत्यादि । यत्नार्थत्वे तु नैतत्सिद्ध्येत् । ज्ञानेच्छादिवद्यत्नस्य कर्तृस्थत्वादिति शम् ।

## ६—प्रश्नोत्तराणि ।

**प्रकाशनस्थेयाख्ययोश्च**—प्रकाशनम् स्वाभिप्रायाविष्करणम् । स्थेयः विवादपदनिर्णेता । आख्या—अभिधानम् । तथा च प्रकाशनाख्यायां स्थेयाख्यायां च वर्तमानात् स्थाधातोरात्मनेपदमिति सूत्रार्थः ।

**यथाविध्यनुप्रयोगः पूर्वस्मिन्**—आद्ये लोट्विधाने लोट्प्रकृतिभूत एव धातुरनुप्रयोज्यः इति सूत्रार्थः ।

**लक्षणहेत्वोः क्रियायाः**—क्रियायाः परिचायके हेतौ चार्थे वर्तमानाद्धातोर्लटः शतृशानचौ स्त इति सूत्रार्थः ।

"**समासत्तौ**"—तृतीयासप्तम्योर्धातोर्णमुल् स्यात् सन्निकर्षे गम्यमाने इति सूत्रार्थः ।

"न क्विचि दीर्घश्च"—अनिटां वनतितनोत्यादीनां च दीर्घानुनासिकलोपौ न स्तः क्विचि परे इति सूत्रार्थः।

---

१९३४

४ वर्षे १ पत्रम्।

१—जह्यात्, जुहुयात्, नेनिजानि, अशुः। एतान् विशेषसूत्रार्थोपन्यासपूर्वकं संस्कृत्य दिवादेराकृतिगणत्वे फलप्रमाणे निरूपणीये।

२—विसोष्यति, प्रहिणोति, उपस्किरति, स्कुनीते। एतेषां साधुत्वं यथासूत्रमभिधाय पूरणार्थकपृधातोर्दीर्घोच्चारणस्य फलं निरूप्यताम्।

३—चपयति, अलुलोकत्, अपीपृथत्, एतेषां संस्कारप्रकारं प्रदर्श्य असिना हन्तीतिविग्रहे रूपञ्च साधयत।

४—जिघांसति, दुदूषति, तितंसति, वावश्यते, वर्वृतः, चक्रौ, एतेषां साधुत्वं वदत।

५—अजाहासीत्, सुमनायते, अजहलत्, के विधयः संस्कारका एतेषामिति सविचारमुच्यताम्।

६—परीपृच्छ्यते, बाष्पायते, अचकशत, एतान् साधयित्वा यकारान्तवकारान्तोठूभाविभ्यो यङ्लुक् कथं निराकरणीयः। एषु एकचैव प्रश्नाः समाधेयाः।

## १—प्रश्नोत्तराणि।

जह्यात्—ओकारेत्सञ्ज्ञक ककारेत्सञ्ज्ञकश्च 'हा' इत्यस्माद्धातोर्लिङि तिपि अनुबन्धलोपे "यासुट् परस्मैपदेषूदात्तो ङिच्च" इति सूत्रेण यासुडागमे उटावितौ सार्वधातुकसञ्ज्ञायां शपि "जुहोत्यादिभ्यः श्लुः" इति श्लौ "श्लौ" इति द्वित्वेऽभ्याससञ्ज्ञायां ह्रस्वे च कृते "कुहोश्चुः" इति चुत्वे जश्त्वे च कृते "लोपो यि"इत्यनेन आकारलोपे सलोपे च विहिते "जह्यात्" इति सिद्ध्यति।

जुहुयात्—हु इत्यस्माद्धातोर्विधिलिङि तिपि अनुबन्धलोपे यासुडागमेऽनुबन्धलोपे सार्वधातुकसञ्ज्ञायां शपि "जुहोत्यादिभ्यः श्लुः" इति श्लौ "श्लौ"

इत्यनेन द्वित्वेऽभ्याससञ्ज्ञायां "कुहोश्चुः" इति चुत्वे "अभ्यासे चर्च" इति जश्त्वे सलोपे च कृते "जुहुयात्" इति सिद्ध्यति ।

नेनिज्ञानि—इरेत्संज्ञक 'णिज्' इत्यस्माद्धातोः 'णोनः' इति नत्वे लोट्लकारे उत्तमपुरुषैकवचने मिप्प्रत्ययेऽनुबन्धलोपे "मेर्निः"इति निभावे सार्वधातुकसंज्ञायां शपि "जुहोत्यादिभ्यः श्लुः" इति श्लौ "श्लौ" इति द्वित्वेऽभ्याससंज्ञायां हलादिः शेषे "निजां त्रयाणां गुणः श्लौ" इत्यभ्यासस्य गुणे उत्तरखण्डे च "आडुत्तमस्य पिच्च" इत्याडागमे आटः पित्त्वाल्लघूपधगुणे प्राप्ते "नाभ्यस्तस्याचि पिति सार्वधातुके" इति तन्निषेधे "नेनिज्ञानि" इति सिद्ध्यति ।

अशुः—'शा' इत्यस्माद्धातोर्लुङि झिप्रत्यये "आदेच उपदेशेऽशिति" इत्यात्वे अडागमे च कृते "च्लि लुङि" इति च्लौ च्लेः सिचि च कृते इत्संज्ञितो "विभाषाघ्राधेट्शाच्छासः" इति सिचा विकल्पेन लुकि च कृते "आतः" इत्यनेन झेर्जुसादेशेऽनुबन्धलोपे पररूपे च विहिते सस्य रुत्वे विसर्गे च "अशुः" इति सिद्ध्यति ।

दिवादिस्त्वाकृतिगण इति—पुषादयो दिवादयश्च वृत्ता इति प्रागुक्तम् । तत्र केचित् पुषादिसमाप्त्यर्थमेव वृत्करणम् । अत्रेत्थं शङ्कते—दिवादयो वृत्ताः" इत्येव कुतो न व्याख्यायते इत्यत आह—दिवादिस्त्वाकृतिगण इति । तेन "क्षीयते' मृग्यति' इत्यादौ च श्यन्कार्यं सिद्ध्यति ।

## २—प्रश्नोत्तराणि ।

विसोष्यति—'वि' इत्युपसर्गपूर्वकात् अकारेत्संज्ञक 'षु' इत्यस्माद्धातोः "धात्वादेः षः सः" इत्यनेन सत्वे लृट्लकारे तिप्प्रत्ययेऽनुबन्धलोपे "स्यतासीलृलुटोः" इत्यनेन स्यप्रत्यये गुणे च विहिते "उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्" इत्यनेन षत्वे प्राप्ते "सुनोतेः स्यसनोः' इत्यनेन षत्वनिषेधे "विसोष्यति" इति सिद्ध्यति ।

प्रहिणोति—प्रोपसर्गात् 'हि' इत्यस्माद्धातोर्लटि तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते "स्वादिभ्यः श्नुः" इति श्नुप्रत्यये अनुबन्धलोपे गुणे च कृते "हिनु मीना" इत्यनेन नस्य णत्वे च विहिते "प्रहिणोति" इति सिद्ध्यति ।

**उपस्किरति**—'उप' इत्युपसर्गपूर्वकात् 'कृ' इत्यस्माद्धातोर्लटि तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते **"तुदादिभ्यः शः"** इत्यनेन शप्रत्ययेऽनुबन्धलोपे **"ऋत इद्धातोः"** इति इत्वे रपरत्वे च विहिते **"किरतौ लवने"** इति सुडागमे उटावितौ टित्वादाद्यवयवे **'उपस्किरति'** इति सिद्ध्यति ।

**स्कुनीते**—ञकारेत्संज्ञक स्कु' इत्यस्माद्धातोर्लटि आत्मनेपदे तप्रत्यये सार्वधातुकसंज्ञायां शपि प्राप्ते तम्प्रबाध्य **"क्र्यादिभ्यः श्ना"** इति श्नाप्रत्ययेऽनुबन्धलोपे **"ई हल्यघोः"** इतीत्वे **"टित आत्मनेपदानां टेरे"** इत्येत्वे **"स्कुनीते"** इति सिद्ध्यति ।

"पॄ" धातौ दीर्घोच्चारणस्य फलमिति ८१ पृष्ठे द्रष्टव्यम् ।

## ३—प्रश्नोत्तराणि ।

**चपयति**—७० पृष्ठे द्रष्टव्यम् ।

**अलुलोकत्**—चौरादिकात्-ऋकारेत्संज्ञक 'लोक' इत्यस्माद्धातोः **"सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्"** इति णिचि अनुबन्धलोपे धातुसंज्ञायां लुङि तिपि अडागमे **"च्लि लुङि"** इति च्लौ **"णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्"** इत्यनेन च्लेश्चङि अनुबन्धलोपे अ+लोक्+इ+अ+त् इति जाते द्वित्वेऽभ्याससंज्ञायां ह्रस्वे च कृते **"णौ चङ्युपधायाः ह्रस्वः"** इत्यनेनोपधाह्रस्वे च प्राप्ते ऋदित्वात् **'नाग्लोपिशास्वृदिताम्'** इति तन्निषेधे लघुपरकत्वाभावादभ्यासदीर्घाप्रवृत्तौ **"णेरनिटि"** इति णिलोपे **"अलुलोकत्"** इति सिद्ध्यति ।

**अपप्रथत्**—६२ पृष्ठे द्रष्टव्यम् ।

## ४—प्रश्नोत्तराणि—

**जिघांसति**—हन्तुमिच्छतीति विग्रहे **"धातोः कर्मणः समानकर्तृकादिच्छायां वा"** इत्यनेन सनि अनुबन्धलोपे धातुसञ्ज्ञायां लटि तिपि अनुबन्धलोपे च विहिते **"सन्यङोः"** इति द्वित्वेऽभ्याससंज्ञायां हलादिः शेषे **"कुहोश्चुः"** इति चुत्वे **"अभ्यासे चर्च"** जश्त्वे **"सन्यतः"** इत्यभ्यासस्येत्वे **"अज्झनगमां सनि"** इत्यकारस्य दीर्घे **'अभ्यासाच्च"** इत्यनेन हस्य कुत्वे जश्त्वे च विहिते **"नश्च"** इत्यनेन नकारस्यानुस्वारे **"जिघांसति"** इति सिद्ध्यति ।

दुद्यूषति—दिव्धातोः सन्प्रत्ययेऽनुबन्धलोपे "सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्" इत्यनेन विकल्पेनेड्विधानात् तदभावे "हलन्ताच्च" इति सनः कित्वे "च्छ्वोः शूडनुनासिके च" इत्यनेन वकारस्य ऊठि इकारस्य यणि च कृते "सन्यङोः" इत्यनेन द्वित्वेऽभ्याससंज्ञायां "हलादिः शेषे" प्रत्ययावयवस्य सनः सकारस्य षत्वे "अज्झनगमां सनि" इति दीर्घे धातुसंज्ञायां लटि तिपि अनुबन्धलोपे 'दुद्यूषति' इति सिद्ध्यति। इट्पक्षे तु—झलादित्वाभावात् सनः कित्वाभावे ऊठोऽप्रवृत्तौ लघूपधगुणे "दिदेविषति" इति च सिद्ध्यति।

तितंसति—तन्, इत्यस्माद्धातोः सन्प्रत्ययेऽनुबन्धलोपे "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायां "हलादिः शेषे" "सन्यतः" इत्यभ्यासाकारस्येत्वे धातुसंज्ञायां लटि तिपि अनुबन्धलोपे च कृते "तनिपतिदरिद्रातिभ्यः सनो वा इड्वाच्यः" इति वार्तिकेन विकल्पेनेडागमे सस्य षत्वे "िततनिषति" इति सिद्ध्यति। इडभावे—"तनोतेर्विभाषा" इति सूत्रेण विकल्पेन दीर्घे नस्यानुस्वारे "तितांसति" इति सिद्ध्यति। दीर्घाभावे—"तितंसति" इति सिद्ध्यति।

वावश्यते—'वश्' इत्यस्माद्धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इत्यनेन यङि अनुबन्धलोपे "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायां "हलादिः शेषे" अभ्यासस्य दीर्घे च विहिते धातुसंज्ञायां लटि आत्मनेपदे तप्रत्यये "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इत्यनेन सम्प्रसारणे प्राप्ते "न वशः" इति तन्निषेधे "वावश्यते" इति सिद्ध्यति।

वर्वृतः—'वृतु' वर्तने इत्यस्माद्धातोः यङि यङ्लुकि च कृते "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायाम् "उरत्" इत्यत्वे रपरत्वे च कृते "हलादिः शेषः" इत्यनेन लोपे 'ववृत' इत्यस्य "सनाद्यन्ताधातवः" इत्यनेन धातुसंज्ञायां लटि तसि "रुग्रिकौ च लुकि" इत्यनेन रुगागमेऽनुबन्धलोपे "झरो झरि सवर्णे" इत्यनेन तकारस्य लोपे सस्य रुत्वे विसर्गे च विहिते "वर्वृत" इति सिद्ध्यति। रिगागमे च 'वरिवृतः' इति रीगागमे तु "वरीवृतः" इति सिद्ध्यति।

चकौ—क इव चकारेति विग्रहे कशब्दात्किबन्तात्लिटि तिपि णलि द्वित्वेऽभ्याससंज्ञायां "कुहोश्चुः" इति चुत्वे 'च क+अ' इति स्थिते ककारोत्तराकारस्य "अतो लोपः" इत्यल्लोपात्परत्वाद्वृद्धौ आकारे "आत औ णलः" इत्यौत्वे

वृद्धिरेकादेशे 'चकौ' इति हरदत्तः । माधवस्तु—च+अ इति स्थिते "णयल्लोपावियङ्‌यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन' इति पूर्वविप्रतिषेधाण्णलि वृद्धिं बाधित्वा "अतो लोपः" इत्यल्लोपे कृते णलोऽकारेण सह 'चक' इति रूपमाहेति शम् ।

## ८—प्रश्नोत्तराणि ।

**अजाहासीत्**—ओकार-ङकारेत्संज्ञक "हा" इत्यस्माद्धातोर्यङि यङ्लुकि च कृते प्रत्ययलोपे प्रत्ययलक्षणतया "सन्यङोः" इति द्वित्वे धातुसंज्ञायां लुङि तिपि अडागमे च विहिते "च्लि लुङि" इति च्लौ च्लेः सिजादेशे इचावितौ ईडागमे "यमरमनमातां सक् च" इत्यनेन सगागमे इटि च कृतेऽनुबन्धलोपे "इट ईटि" इति सलोपे "अजाहासीत्" इति सिद्धयति ।

**सुमनायते**—असुमनाः सुमना भवतीति विग्रहे "भृशादिभ्यो भुव्यच्वेर्लोपश्च" इति क्यङि अनुबन्धलोपे सलोपे, च कृते "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घे धातुसंज्ञायां लटि आत्मनेपदे तप्रत्यये टेरेत्वे "सुमनायते" इति सिद्धयति ।

**अजहलत्**—अत्र "हल्यादिभ्यो ग्रहणे" इति 'हलिकल्योरदन्तत्वनिपातनात् 'हल' इत्यस्माद् "मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्" इति सूत्रेण णिचि अनुबन्धलोपे "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायां "हलादिः शेषे" च कृते 'कुहोश्चुः' इति चुत्वे "अभ्यासे चर्च" इति जश्त्वे "णेरनिटि" इति णिलोपे धातुसंज्ञायां लुङि तिप्यडागमे च विहिते अनुबन्धलोपे च्लौ च्लेश्चङादेशे अनुबन्धलोपे "इतश्च" इति सूत्रेणेकारस्य लोपे "अजहलत्" इति सिद्धयति ।

नन्वनयोरिकारयोरदन्तत्वनिपातनं व्यर्थम् । इकारस्य णाविष्ठवत्त्वाल्लोपे 'हलयति' 'कलयति' इति च सिद्धेः । नच 'अचहलत्' 'अचकलत्' इत्यत्र सन्वत्वाप्रवृत्तये अग्लोपित्वाय तयोरदन्तत्वमिति वाच्यम् । इकारलोपेऽप्यग्लोपित्वसिद्धेरित्यत आह—परत्वाद्वृद्धौ सत्यामपीष्ठवद्भावेनाऽगेव लुप्यते । अतः सन्वद्भावदीर्घौ नेति शम् ।

## ६—प्रश्नोत्तराणि ।

**परीपृच्छ्यते**—'प्रच्छ' इत्यस्माद्धातोर्यङि "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इति सम्प्रसारणे पूर्वरूपे च कृते द्वित्वेऽभ्याससंज्ञायाम् "उरत्" इत्यत्वे रपरत्वे "हलादिः शेषः" इति सूत्रेण लोपे च कृते "रीगृत्वत इति वक्तव्यम्" इति वार्तिकेन रीगागमेऽनुबन्धलोपे धातुसंज्ञायां लटि आत्मनेपदे तप्रत्यये टेरेत्वे "परीपृच्छ्यते" इति सिद्ध्यति ।

**बाष्पायते**—बाष्पमुद्वमतीति विग्रहे "बाष्पोष्मभ्यामुद्वमने" इत्यनेन क्यङ्प्रत्ययेऽनुबन्धलोपे धातुसंज्ञायां लटि ङित्वादात्मनेपदे तप्रत्यये टेरेत्वे दीर्घे 'बाष्पायते' इति सिद्ध्यति ।

**अचकृशत्**—कृशधातोर्णिचि अनुबन्धलोपे टिलोपे च कृते ण्यन्तात् लुङि तिपि अनुबन्धलोपे अडागमे च विहिते "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायां हलादिः शेषे च कृते "कुहोश्चुः" इति चुत्वे "र ऋतः" इति रभावे वृद्धेः पूर्वं पश्चाद्वा टिलोपेऽपि अग्लोपित्वात् "सन्वतः" इतीत्वाभावे "अचकृशत्" इति सिध्यति ।

यकारान्तवकारान्तोठ्भाविभ्यो यङ्लुक् नास्तीति—३० पृष्ठे द्रष्टव्यम् ।

---

१९३४

४ वर्षे २ पत्रम् ।

१—"द्विधा हि कण्ड्वादयो धातवः प्रातिपदिकानि च" इति सप्रमाणं सफलञ्च व्याख्याय वारिरयिषति, व्यतिषते, निह्नयते, उद्युङ्क्ते, प्रावयति अलम्भि, एषु सूत्रनिर्देशपूर्वकं विशेषकार्यं प्रदर्शयत ।

२—भावो भावना उत्पादना क्रिया । सा च धातुत्वेन सकलधातुवाच्या" इत्यस्याभिप्रायमुल्लिख्य "प्रकृतो मितां ह्रस्वः एव तु न विकल्पितः" इत्याद्युक्तग्रन्थस्याशयः स्वसंस्कृतेन सम्यग्वर्णनीयः ।

३—चिकीर्षते कटः, रज्यति वस्त्रम्, येयममावास्याऽऽगामिनी तस्यामग्नीनाधास्यते, आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति, इमानि केषामुदाहरणानीति लिखित्वा "इचेति ह्रस्वः सुपठः" इति फक्किका व्याख्येया ।

४—संभृत्याः संभार्य्याः, मृषोद्यम्, हायनः, यत्करा, श्रिमन्यं कुलम्, अमितः, आरिवान्, अस्यपगारम्, एषु कस्माद्धातोः केन सूत्रेण कः प्रत्ययः, किञ्च प्रधानकार्य्यमिति स्पष्टं ब्रूत ।

५—दन्तच्छदः चक्रबन्धं बध्नाति, मुखतो भावम्, शय्या, पयः पानं सुखम्, अत्रासाधारणं कार्थं ससूत्रं लेख्यम् ।

## १—प्रश्नोत्तराणि ।

"द्विधा हि कण्डूवादय" ७४ पृष्ठे द्रष्टव्यम् ।

वारिरयिषति—उरुमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छतीत्यर्थे उरुशब्दादाचष्टे इत्यर्थे "तत्करोति तदाचष्टे" इत्यनेन णिचि "प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फबर्हिगर्वर्षित्रब्द्राघिवृन्दाः" इत्यनेन वरादेशे णित्वादुपधावृद्धौ 'वारि' इति ण्यन्तात्सनि इटि णिचो गुणायादेशयोः 'वारयिष' इति सन्नन्तम् । तत्र माधवमते वृद्धयङ्गीकारात् 'वारि' इत्यस्मात् हेतुमण्ण्यन्तात् सनि इटि प्रथमणेर्लोपे षत्वे च 'वारयिषा' इत्येव रूपम् । तत्र च—'यथेष्टं नाम धातुषु' इत्याश्रित्यैकैकस्य एकाचो द्वित्वे इति मते रिशब्दस्य द्वित्वे गुणेऽयादेशे च "वारिरयिषति" इति सिद्धयति ।

व्यतिषते—इत्यत्र वि अति इत्युपसर्गपूर्वकाच्च 'अस्' धातोर्लटि "कर्त्तरि कर्मव्यतिहारे" इत्यनेनात्मनेपदे झप्रत्यये "व्यतिषते" इति सिद्धयति ।

निह्वयते—इत्यत्र 'नि' इत्युपसर्गपूर्वकात् 'ह्वेञ्' धातोः "निसमुपविभ्यो ह्वः" इत्यनेनात्मनेपदे 'निह्वयते' इति सिद्धयति ।

उद्युङ्क्ते—उदुपसर्गपूर्वकात् 'युज्' धातोः "स्वराद्यन्तोपसर्गादिति वक्तव्यम्" इति वार्तिकेनात्मनेपदे 'उद्युङ्क्ते' इति सिद्धयति ।

प्रावयति—'प्रु' गतावित्यस्माण्णिचि अनुबन्धलोपे णित्वाद्वृद्धौ आवादेशे णिजन्तात् "प्रावि" इत्यस्मात् 'णिचश्च' इत्यनेनात्मनेपदे प्राप्ते तम्प्रबाध्य "बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः" इत्यनेन परस्मैपदे "प्रावयति"

इति सिद्ध्यति ।

अलम्भि—१०७ पृष्ठे द्रष्टव्यम् ।

## २—प्रश्नोत्तराणि ।

**भावो भावनेति "सार्वधातुके यक्"** इत्यनेन भावकर्मवाचिनि सार्वधातुके परे धातोर्यक् प्रत्ययो विधीयते । तत्र-प्रकृतिजन्यबोधे प्रकारो भावपदार्थः । यथा घटस्य-भावः घटत्वमिति । **"लः कर्मणि च भावे चाकर्मकेभ्यः"** इति सूत्रे तु भावशब्दो भावनायां यौगिकः-तदाह-भावो भावनेति । **"लः कर्मणिः"** इत्यत्र भावशब्देन भावना विवक्षितेति भावः । भावनाशब्दस्य चिन्तायामपि प्रसिद्धत्वादाह—उत्पादनेति । उत्पादना चेयं धात्वर्थान्नातिरिच्यते इति दर्शयितुमाह—क्रियेति । धात्वर्थात्मकक्रियैव उत्पादनेत्यर्थः । तथाहि-'फलव्यापारयोर्धातुः" इति सिद्धान्तात् फलोत्पत्त्यनुकूलव्यापारात्मिका क्रिया धात्वर्थ इति सिद्धम् । तदुक्तम् 'व्यापारो' भावना सैवोत्पादना सैव च क्रिया । इति ।

नतु 'उत्पत्त्यनुकूलव्यापारस्यैव सर्वत्र धातुवाच्यत्वे सर्वेषां धातूनामेकार्थत्यापत्तिः । विक्लित्यादितत्फलोत्पत्त्यनुकूलव्यापारार्थकत्वं तु न सम्भवति । एकैकस्य धातोर्विक्लित्त्यादितत्तत्फलांशे तदनुकूलव्यापारात्मकव्यापारसामान्ये च वाचकत्वानुपपत्तेरित्यत आह-सा च धातुत्वेन सकलधातुवाच्येति । अयम्भावः-पच्यादयो धातुत्वेन रूपेण उत्पत्त्यनुकूलव्यापारात्मिकां क्रियामाहुरिति शम् ।

**प्रकृते मितां ह्रस्व एवेति—'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्'** इत्यस्य सूत्रस्य चिण्परे णमुल्परे च णौ मितामुपधायाः दीर्घो वा स्यादिति सूत्रार्थः । तत्र शंकते—**'चिण्णमुलोरन्यतरस्याम्'** इति न्यासेनापि **"मितां ह्रस्वः"** इति पूर्वसूत्रादनुवृत्तस्य ह्रस्वस्य विकल्पे दीर्घविकल्पस्य सिद्धेरिह दीर्घग्रहणं व्यर्थमित्याशंक्याह—प्रकृते 'मितां ह्रस्वः' एव तु न विकल्पितः । कुत इत्यत आह—ण्यन्ताण्णाविति अयम्भावः शम्धातोर्ण्यन्ताण्णौ पूर्वणेर्लोपे लुटि तासि ण्यन्तस्याजन्तत्वाच्चिण्वदिटि तस्याभीयत्वेनासिद्धतया 'अनिटीति निषेधाभावाण्णिलोपे दीर्घविकल्पे सति **'शमिता' 'शामिता'** रूपद्वयमिष्यते । ह्रस्वविकल्पस्य विधौ तु ह्रस्वविकल्पो न स्यात् । प्रथमणिलोपस्य **"अचः परस्मिन् पूर्वविधौ"** इति स्थानिवत्त्वेन व्यवहिततया चिण्परकणिपरकत्वाभावादित्यर्थः । दीर्घविधौ हि प्रथमस्य णिचो लोपो न स्थानिवत्, दीर्घविधौ स्थानिवत्त्वनिषेधात् । अतोऽत्र

दीर्घविकल्पः सिद्ध्यति । ह्रस्वविधौ तु प्रथमणिलोपस्य स्थानिवत्त्वं दुर्वारम्, तत्र स्थानिवत्त्वनिषेधाभावादिति । भाष्ये तु—'पूर्वत्रासिद्धे न स्थानिवत्' इत्यनेनैव सिद्धत्वात् 'न पदान्तेति सूत्रे द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः प्रत्याख्याताः ।

ननु ण्यन्ताराणौ 'चिण्णमुलोः' इति दीर्घे कर्तव्ये प्रथमणिलोपस्य स्थानिवत्त्वं दुर्वारम्, 'चिण्णमुलोः' इति दीर्घस्य पूर्वत्रासिद्धीयत्वात् । ततश्च—प्रथमणिचा व्यवहृतत्वात् दीर्घानापत्तिः । एवञ्च दीर्घे कर्तव्ये स्थानिवत्त्वनिवारणाय दीर्घग्रहणस्यावश्यकत्वात्कथं दीर्घग्रहणप्रत्याख्यानमित्यत आह—णाविति जातिपरो निर्देशः । दीर्घग्रहणं चेदं मास्त्विति तदाशय इति दिक् ।

## ३—प्रश्नोत्तराणि ।

**चिकीर्षते कटः**—इत्यत्र 'देवदत्तः कटं चिकीर्षति' इति किं देवदत्तः कटं चिकीर्षति, स्वयमेव 'चिकीर्षते कटः' इति कर्मकर्तरि विवक्षायां कर्मणि '**सार्वधातुके यक्**' इत्यनेन प्राप्तस्य यगादेशस्य "**भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्**" इति वार्तिकेन निषेधे "**चिकीर्षते कटः**" इति सिद्ध्यति ।

**रज्यति वस्त्रम्**—इत्यत्र '**कुषि रञ्जोः प्राचां श्यन् परस्मैपदञ्च**" इत्यनेन यकं प्रतिषिध्य तत्स्थाने श्यनि परस्मैपदे च कृते "**रज्यति वस्त्रम्**" इति सिद्ध्यति । रञ्जयतीति तदर्थः । मुख्ये कर्तरि लः । कर्मणः कर्तृत्वविवक्षायां तु '**रज्यति** रज्यते वा वस्त्रम्' इति, भवतीति तदर्थः । यकं प्रतिषिध्य तत्स्थाने श्यनो विधानसामर्थ्यात् यग्विषये तु नास्य प्रवृत्तिरिति शम् ।

**येयममास्याऽऽगामिनी तस्यामग्नीनाधास्यते**—इत्यत्र 'नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः' इत्यनेन क्रियायाः सामीप्ये लङ्लुटोर्निषेधे तत्सिद्ध्यति ।

**आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति**—इत्यत्र "**शेषे लृडयदौ**" इत्यनेन अयदावित्यस्मिन्नर्थे दृश्धातोर्लृटि "**आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति**" इति सिद्ध्यति ।

"इचेति ह्रस्वः" ५२ पृष्ठे द्रष्टव्यम् ।

## ४—प्रश्नोत्तराणि ।

**संभृत्याः—संभार्याः**—इत्यत्र समुपसर्गपूर्वकात् ऋकारेत्संज्ञक 'भृ' इत्यस्माद्धातोः "**समश्च बहुलम्**" इति वार्तिकेन '**असंज्ञायामेव**' क्यप् प्रत्य-

येऽनुबन्धलोपे तुकि च कृते कृदन्तत्वात्प्रातिपदिकसंज्ञायां जसि अनुबन्धलोपे दीर्घे रुत्वविसर्गे च विहिते '**संभृत्याः—संभार्याः**" इति सिद्ध्यति ।

**मृषोद्यम्**—इत्यत्र मृषोपपदाद्वदेः कर्मणि "**राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः**" इत्यनेन निपातनान्नित्यं क्यपि अनुबन्धलोपे "**वचिस्वपियजादीनां किति**" इति सम्प्रसारणे प्रातिपदिकत्वात्सौ सोरमादेशे "**मृषोद्यम्**" इति सिद्ध्यति ।

**हायनः**—जहात्युदकमिति विग्रहे हाधातोः "**हश्च व्रीहिकालयोः**" इति सूत्रेण णयुट्प्रत्यये थकन् प्रत्यये च कृतेऽनुबन्धलोपे णित्वादादिवृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते "**हायनः**" इति सिद्ध्यति ।

**यत्करा**—यत्करोति या सेति विग्रहे "**कियद्ग्रहणु कृञोऽज्विधानम्**" इति वार्तिकेनाज्प्रत्ययेऽनुबन्धलोपेदन्तत्वाट्टापि च कृते सोर्लोपे च विहिते "**यत्करा**" इति सिद्ध्यति ।

**श्रिमन्यं कुलम्**—श्रियमात्मानं मन्यते यत्कुलमिति विग्रहे "**आत्ममाने खश्च**" इत्यनेन मनेः खश्प्रत्ययेऽनुबन्धलोपे शित्वात्सार्वधातुकसंज्ञायां श्यनि सुपो लुकि च कृते प्रातिपदिकत्वात्सौ सोरमादेशे च कृते, मननक्रियां प्रति च कुलत्वेनरूपेण कुलं कर्तृ तस्यैव कुलस्य अध्यारोपितश्रीत्वेन रूपेण कर्मत्वं च विहिते श्रीशब्दस्य नित्यस्त्रीलिङ्गस्यापि कुले लक्षणया वृत्तेर्नपुंसकत्वातिदेशे "**श्रिमन्यं कुलम्**" इति सिद्ध्यति ।

**अमितः**—गत्यर्थकात् 'अम' इत्यस्माद्धातोः निष्ठाक्तप्रत्ययेऽनुबन्धलोपे वलादित्वादिडागमे प्राप्ते "**रुष्यमत्वरसंघुषास्वनाम्**" इति सूत्रेण विकल्पेनेडागमे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च '**अमितः**' इति सिद्ध्यति । इडभावपक्षे च मस्यानुस्वारे "**अनुनासिकस्य क्विझलोः क्ङिति**' इत्यनेन दीर्घे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च '**आन्तः**' इति च सिद्ध्यति ।

**आरिवान्**—"ऋ" गतावित्यस्माद्धातोः क्वसुप्रत्ययेऽनुबन्धलोपे "**ऋच्छत्यृताम्**" इति गुणे च विहिते ततो द्वित्वे एकाच्त्वात् "**वस्वेकाजाद्घसाम्**" इत्यनेन इडागमेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ उगित्वान्नुमि दीर्घे च कृते सुलोपे सलोपे च "**आरिवान्**" इति सिद्ध्यति ।

**अरयपगारम्**—इत्यत्र "**द्वितीयायाञ्च**" इत्यनेन णमुल्प्रत्ययेऽनुबन्धलोपे

"अपगुरो णमुलि" इत्यनेन च विकल्पेनात्वे कृदन्तत्वात्प्रातिपदिकसंज्ञायां सौ सोर्लोपे च विहिते "अस्यपगारम्" इति सिद्ध्यति ।

## ८—प्रश्नोत्तराणि ।

दन्तच्छदः—दन्ताश्छाद्यन्तेऽनेनेति विग्रहे "पुंसि संज्ञायां घः प्रायेण" इत्यनेन घप्रत्ययेऽनुबन्धलोपे "छादेर्घेऽद्व्युपसर्गस्य" इत्यनेन ह्रस्वे तुकि च कृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'दन्तच्छदः' इति सिद्ध्यति ।

चक्रबन्धं बध्नाति—चक्रे बध्नातीति विग्रहे "अधिकरणे बन्धः" इत्यनेन बन्धधातोर्णमुलि अनुबन्धलोपे प्रातिपदिकत्वात्सौ सोर्लोपे "चक्रबन्धं बध्नाति" इति सिद्ध्यति ।

मुखतो भावम्—इत्यत्र तसूप्रत्ययान्ते स्वाङ्गे उपपदे कृञो भुवश्च क्त्वा-णमुलावित्यर्थकेन "स्वाङ्गे तस्प्रत्यये कृभ्वोः" इति सूत्रेण भूधातोर्णमुलि अनुबन्धलोपे णित्वाद्वृद्धौ आवादेशे च विहिते प्रातिपदिकत्वात्सौ सोर्लोपे "मुखतो भावम्" इति सिद्ध्यति ।

शय्या—शीयतेऽस्यामिति विग्रहे "संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः" इत्यनेन क्यप्प्रत्ययेऽनुबन्धलोपे गुणेऽयादेशे च विहिते टापि च प्रातिपदिकत्वात्सौ सोर्लोपे "शय्या" इति सिद्ध्यति ।

पयः पानं सुखम्—इत्यत्र "कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम्" इत्यनेन पाधातोर्ल्युटि अनुबन्धलोपे "युवोरनाकौ" इत्यनेनादेशे प्रातिपदिकत्वात्सौ सोरमादेसे "पयः पानं सुखम्" इति सिद्ध्यति ।

ननु—"चन्दनानुलेपनं सुखमितिवत् पानादेव सुखम्, नतु संस्पर्शनेनेति । तथा च—पयसा ओदनेन च स्वरूपतस्तावद्देवदत्तसुखाभावात् कथमिदमुदाहरणमिति वाच्यम् । समाधत्ते—सत्यमिति । अयम्भावः—यत्र विषये संस्पर्शं विना स्वरूपसतैव सुखं नोत्पद्यते तादृशविषयोपलक्षणं संस्पर्शग्रहणमिति । यत्र च साक्षात्परम्परया वा सुखं तत्र सर्वत्रास्य प्रवृत्तिरिति शम् ।

---

१९३५

४ वर्षे १ पत्रम् ।

१—पिपूर्यात्, जहीहि, धत्थ, पतान् विशेषसूत्रार्थप्रदर्शनमुखेन

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



संस्कृत्य आहाकूओहाङोरनुबन्धफलं प्रदर्श्यताम् ।

२—दिदीये, उद्विजिता, एतयोः साधुत्वं ससूत्रनिर्देशं प्रदर्श्य भञ्ज्, तन्, ऋण्धातूनां लुङि मिपि रूपाणि साध्यन्ताम् ।

३—अग्रहीष्टाम्, अचिकीर्त्तत्, अध्यापिपत्, एतेषां संस्कारप्रकारं प्रदर्श्य असिस्रवदिति रूपं साधयता भवता स्रवतीति सूत्रे धात्वक्षरे परे इत्यंशे किं प्रमाणन्तदुच्यताम् ।

४—पेषिष्यत्, जुघुक्षति, विभ्रज्जिषति, चञ्चूर्य्यते, एतेषां साधुत्वं प्रदर्श्य, अव्यवहितसन अभावे मुनित्रयान्यतमवचनं प्रमाणी क्रियताम् ।

५—अजङ्घनीत्, अचर्करीत्, सुमनायते, एतान् प्रसाध्य उपसर्ग-समानाकारस्य पृथक्कारे किं प्रमाणम् ।

६—मामोति, औडिढत्, धारयति, अदद्रायत्, कनयति, एते साध्यन्ताम् ।

## १—प्रश्नोत्तराणि ।

**पिपूर्यात्**—"पॄ" इत्यस्माद्धातोर्विधिलिङि तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि "जुहोत्यादिभ्यः श्लुः" इत्यनेन श्लौ "श्लौ" इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् "उरत्" इत्यत्वे रपरे च कृते "हलादिः शेषः" इत्यनेन लोपे "अर्तिपिपर्त्योश्च" इतीत्वे "यासुट् परस्मैपदेषूदात्तो ङिच्च" इत्यनेन यासुडागमेऽनुबन्धलोपे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे च विहिते "उदोष्ठ्यपूर्वस्य" इत्युत्वे रपरे च कृते "हलि च" इत्यनेन दीर्घे "पिपूर्यात्" इति सिद्ध्यति ।

**जहीहि**—२६ पृष्ठे द्रष्टव्यम् ।

**धत्थ**—"धा" इत्यस्माद्धातोर्लटि थप्रत्यये सार्वधातुकसंज्ञायां शपि "जुहोत्यादिभ्यः श्लुः" इति श्लौ 'श्लौ' इत्यनेन द्वित्वे च कृतेऽभ्याससंज्ञायाम् "ह्रस्वः" इति ह्रस्वे "श्नाभ्यस्तयोरातः" इत्याल्लोपे च कृते "दधस्तथोश्च" इत्यनेन भष्भावे 'धत्थ' इति सिद्ध्यति ।

ननु "श्नाभ्यस्तयोरातः" इत्याल्लोपस्य "अचः परस्मिन् पूर्वविधौ" इति सूत्रेण स्थानिवद्भावेन झषन्तत्वाभावात्कथमत्र भष्भाव इत्याशङ्क्य समाधत्ते—

वचनसामर्थ्यादेवाल्लोपो न स्थानिवदिति । वस्तुतस्तु 'पूर्वत्रासिद्धे न स्थानिवत्' इति परिभाषया तन्निषेधादिति शम् ।

ओहाक्—ओहाङोरनुबन्धफलमिति—"ओहाङ् गतौ" इत्यस्मिन् धातौ ङकारानुबन्धसत्वे "अनुदात्तङित आत्मनेपदम्" इति सूत्रेण ङित्वादात्मनेपदं सिद्धयति । "ओहाक् त्यागे" इत्यस्मिन् धातौ ककारानुबन्धसत्वे "अनुदात्तङित आत्मनेपदम्" इत्यस्याप्रवृत्तौ परस्मैपदं सिद्धयतीति शम् ।

## २—प्रश्नोत्तराणि ।

दिदीये—७९ पृष्ठे द्रष्टव्यम् ।

उद्विजिता—उदुपसर्गपूर्वकात् ओकार—ईकारेत्संज्ञकश्च 'विज्' इत्यस्माद्धातोर्लुटि तिपि "स्यतासी लृलुटोः" इति तास्प्रत्यये तिपो डादेशे टिलोपे वलादित्वादिडागमे च विहिते "पुगन्तलघूपधस्य च" इत्यनेन गुणे प्राप्ते "विज इट्" इत्यनेन ङिद्वद्भावे "क्ङिति च" इति तन्निषेधे "उद्विजिता" इति सिद्धयति ।

ओकारेत्संज्ञक "भञ्ज्" धातोर्लुङि मिपि 'अभाङ्क्षम्' इति रूपम् । तथा च—भञ्ज्धातोर्लुङि मिपि अडागमे च विहिते अनुबन्धलोपे "च्लि लुङि" इति च्लौ च्लेः सिजादेशे इचावितौ "वदव्रजहलन्तस्याचः" इत्यनेन वृद्धौ जस्य कुत्वेन गकारे तस्य चर्त्वेन ककारे सस्य षत्वे च विहिते नस्यानुस्वारे परसवर्णे च कृते मिपोऽमादेशे 'अभाङ्क्षम्' इति सिद्धयति ।

उकारेत्संज्ञक 'तन्' इत्यस्माद्धातोर्लुङि मिपि 'अतानिषम्' 'अतनिषम्' इति च रूपद्वयम् । तथाहि—तन् धातोर्लुङि मिपि अडागमे च कृतेऽनुबन्धलोपे "च्लि लुङि" इति च्लौ च्लेः सिजादेशे इचावितौ "आर्द्धधातुकस्येड्वलादेः" इतीडागमे "अतो हलादेर्लघोः" विकल्पेन वृद्धौ मिपोऽमादेशे सस्य षत्वे च विहिते 'अतानिषम्' इति । वृद्ध्यभावे 'अतनिषम्' इति च सिद्धयति । उकारेत्संज्ञक् गत्यर्थकात् 'ऋण्' धातोर्लुङि मिपि 'आर्णिषम्' इति रूपम् ।

तथाहि—'ऋण्धातोर्लुङि मिपि "च्लि लुङि" इति च्लौ च्लेः सिजादेशे इचावितौ इडागमे च कृते मिपोऽमादेशे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे

प्राप्ते "आडजादीनाम्" इत्याडागमे "आटश्च" इत्यनेन वृद्धौ सस्य षत्वे च कृते 'आणिषम्' इति सिद्ध्यति ।

## ३—प्रश्नोत्तराणि ।

**अग्रहीष्टाम्**—उपादानार्थकात् "ग्रह" इत्यस्माद्धातोर्लङि तसि तसस्तामादेशे अडागमे च कृतेऽनुबन्धलोपे "च्लि लुङि" इति च्लौ च्लेः सिजादेशे इचावितौ "आर्द्धधातुकस्येड्वलादेः" इतोडागमे "ग्रहोऽलिटि दीर्घः" इति सूत्रेणेटो दीर्घादेशे सस्य षत्वे ष्टुत्वे च विहिते "वदव्रजहलन्तस्याचः" इति प्राप्तायाश्च हलन्तलक्षणायाः वृद्धेः "ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्" इत्यनेन निषेधे 'अग्रहीष्टाम्' इति सिद्ध्यति ।

**अचिकीर्त्तत्**—५८ पृष्ठे द्रष्टव्यम् ।

**अध्यापिपत्**—अधि इत्युपसर्गपूर्वकात् 'इङ्' इत्यस्माद्धातोर्णिचि णौ इङो गाङादेशे पुकि च कृते लुङि तिपि 'अध्यजीगपत्' इति भवति । गाङादेशस्य च वैकल्पिकत्वात् तदभावे "क्रीङ्जीनां णौ" इत्यनेन णिचि आत्वे "अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ" इत्यनेन पुगागमे च कृते "सनाद्यन्ता धातवः" इति सूत्रेण च 'अध्यापि' इत्यस्य धातुसञ्ज्ञायां लुङि तिपि अनुबन्धलोपे अडागमे प्राप्ते आडागमे च कृते "च्लि लुङि" इति च्लौ "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इत्यनेन च्लेश्चङादेशेऽनुबन्धलोपे "चङि" इत्यनेन 'पि' इत्यस्य द्वित्वे "णेरनिटि" इत्यनेन णिलोपे च कृते 'अध्यापिपत्' इति सिद्ध्यति ।

**असिस्रवत्**—'स्रु' इत्यस्माद्धातोः "तत्प्रयोजको हेतुश्च" इत्यनेन हेतुसञ्ज्ञायां "हेतुमति च" इत्यनेन णिच्यनुबन्धलोपे धातुसञ्ज्ञायां लुङि तिपि अडागमे च कृते "च्लि लुङि" इति च्लौ च्लेश्चङादेशेऽनुबन्धलोपे "चङि" इत्यनेन द्वित्वे "णेरनिटि" इत्यनेन णिलोपे "स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा" इत्यनेनाभ्यासोकारस्येत्वे च कृते गुणे अवादेशे च कृते 'असिस्रवत्' इति सिद्ध्यति ।

"स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा" इत्यस्मिन् सूत्रे च "धात्वक्षरे परे इत्यंशे किं मानमिति । तथाहि अत्र सूत्रे "सम्भवव्यभिचाराभ्यां स्या-

द्विशेषणमर्थवत्" इत्याश्रित्य "ओः पुयणज्यपरे" इत्यस्माद् 'अपरे' इत्यनुवर्तते, न तु 'पुयण्जि' इति पकारजकारयोरसम्भवात् स्रवत्यादौ यणः सत्वेऽप्यव्यभिचारात्। तदाह—"अवर्णपरे धात्वक्षरे परे" इति। अक्षरशब्दोऽत्र वर्णपर इति शम्।

## ४—प्रश्नोत्तराणि।

**ऐर्षिष्यत्**—रायन्तादीर्ष्यधातोर्लुङितिपि च्लौ चङादेशेऽजादित्वादाडागमे आ + इर्ष्य + इ + अ + ति इति जाते इकारलोपे "ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्" इति वार्तिकस्य तृतीयैकाच इति द्वितीयव्याख्यास्वीकारे चङि परे तृतीयैकाचः काप्यभावात् अत्र प्रकृतवार्तिकाऽप्रवृत्तेः "नन्द्राः संयोगादयः" इति निषेधात् रेफं वर्जयित्वा अजादेर्द्वितीयस्य इति ष्यि इत्यस्य द्वित्वे "हलादिः शेषे" णिलोपे च 'ऐर्षिष्यत्' इति जातम्।

**जुघुक्षति**—'गुहू' इत्यस्माद्धातोः सनि अनुबन्धलोपे "सन्यङोः" इति द्वित्वेऽभ्याससञ्ज्ञायां हलादिःशेषे "कुहोश्चुः" इति चुत्वे हस्य ढत्वे भष्भावेन गकारस्य घकारे "षढोः कः सि" इति कत्वे सस्य षत्वे च विहिते "हलन्ताच्च" इति सनः कित्वाद्गुणाऽभावे "सनाद्यन्ता धातवः" इति धातुत्वाल्लटि तिपि 'जुघुक्षति' इति सिद्ध्यति।

**बिभ्रज्जिषति**—'भ्रस्ज' इत्यस्माद्धातोः "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इत्यनेन सनि "सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्" इति विकल्पेनेडागमे च कृते "भ्रस्जोरोपधयोरमन्यतरस्याम्" इति रमागमाभावे "सन्यङोः" इति द्वित्वेऽभ्याससञ्ज्ञायां हलादिःशेषे च कृते "अभ्यासे चर्च" इति जश्त्वेन भस्य बकारे "सन्यतः" इतीत्वे सस्य श्चुत्वेन शकारे तस्य जश्त्वेन जकारे च कृते सस्य षत्वे धातुसञ्ज्ञायां लटि तिपि अनुबन्धलोपे "बिभ्रज्जिषति" इति सिद्ध्यति। इटि रमागमपक्षे च भ्रस्ज इ + स इति स्थिते अकारादुपरि सकारात्प्राक् रेफागमे भकाराद्रेफस्य सकारस्य च निवृत्तौ भर्ज् + इ + स इति स्थिते 'भर्ज्' इत्यस्य द्वित्वे हलादिःशेषे च कृते अभ्यासस्य इत्वे जश्त्वे सनः सस्य षत्वे च 'बिभर्जिषति' इति रूपम्। इडभावे रमागमाऽभावे च "बिभ्रक्षति" इति। इडभावे रमागमे च 'बिभर्क्षति' इति च सिद्धति।

**चञ्चूर्यते**—३१ पृष्ठे द्रष्टव्यम्।

## ८—प्रश्नोत्तराणि ।

"अजङ्घनीत्—'हन्' इत्यस्माद्धातोर्यङि यङ्लुकि च कृते प्रत्ययलोपे प्रत्ययलक्षणतया "सन्यङोः" इति द्वित्वेऽभ्याससञ्ज्ञायां "हलादिःशेषे" च कृते "कुहोश्चुः" इति चुत्वे ततो जश्त्वे च विहिते "नुगतोऽनुनासिकान्तस्य" इति नुगागमेऽनुबन्धलोपे नस्यानुस्वारे परसवर्णे च कृते हस्य कुत्वेन घकारे "सनाद्यन्ता धातवः" इति धातुत्वाल्लङि तिपि अडागमे च विहितेऽनुबन्धलोपे "यङो वा" इति विकल्पेनेडागमे 'अजङ्घनीत्' इति सिद्धयति । ईडभावपक्षे च 'अजङ्घन त' इति स्थिते तकारस्य "हल्ङ्याब्भ्योदीर्घात्सुतिस्यपृक्तं हल्" इति लोपे "अजङ्घन" इति च सिद्धयति ।

अचर्करीत्—'कृ' इत्यस्माद्धातोर्यङि यङ्लुकि च कृते प्रत्ययलोपे प्रत्ययलक्षणमाश्रित्य "सन्यङोः" इति द्वित्वेऽभ्याससञ्ज्ञायाम् "उरत्" इत्यत्वे रपरे च कृते "हलादिःशेषे" "कुहोश्चुः" इति चुत्वे "ऋतश्च" इति सूत्रेण रुगागमेऽनुबन्धलोपे धातुसञ्ज्ञायां लुङि तिपि अडागमे च विहिते "च्लि लुङि" इति च्लौ च्लेः सिजादेशे इचावितौ वलादित्वादिडागमे "अस्तिसिचोऽपृक्ते" इतीडागमे च कृते "इट ईटि" इत्यनेन सलोपे "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धौ "इतश्च" इति सूत्रेणेकारस्य लोपे "अचर्करीत्" इति सिद्धयति ।

सुमनायते—३१ पृष्ठे द्रष्टव्यम् ।

यत्र "उपसर्गसमानाकारं पृथक्क्रियते" इति ५८ पृष्ठे द्रष्टव्यम् ।

## ९—प्रश्नोत्तराणि ।

मामोति—९ पृष्ठे द्रष्टव्यम् ।

औडिढत्—ऊढिमाख्यदिति विग्रहे 'वह धातोः क्तिन्प्रत्ययेऽनुबन्धलोपे ढत्वधत्वष्टुत्वढलोपेषु निष्पन्नात् 'ऊढि' इत्यस्माद् णौ टिलोपे 'ऊढि' इत्यस्य धातुसंज्ञायां लुङि तिपि च्लौ च्लेश्चङादेशे च कृते अजादित्वादाडागमे वृद्धौ 'औढि+अ+त्' इति स्थिते तत्र "पूर्वत्रासिद्धम्" इत्यनेन ढत्वादीनामसिद्धत्वात् "अजादेर्द्वितीयस्य" इत्यनेन हतिशब्दस्य द्वित्वेऽभ्याससंज्ञायां "हलादिः शेषे" "कुहोश्चुः" इति हस्य चुत्वे जश्त्वे च 'औजिढत्' इति सिद्धयति । "पूर्वत्रासिद्धीयमद्वित्वे" इत्यस्य क्वचिदनित्यत्वेऽप्यत्र तदप्रवृत्तौ मानाभावात्

'ढि' शब्दस्य च द्वित्वं वदतां मते तु—"औडिढत्" इति च सिद्ध्यति ।

वारयति—उरुमाचष्ट इति विग्रहे "तत्करोति तदाचष्टे" इति णिचि अनुबन्धलोपे "प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः" इत्यनेन उरोर्वरादेशे संज्ञापूर्वकविधेरनित्यत्वादुपधावृद्धिविकल्पे धातुसञ्ज्ञायां लटि तिपि गुणे अयादेशे च कृते 'वारयति' इति सिद्ध्यति ।

अदद्रायत्—८४ पृष्ठे द्रष्टव्यम् ।

कनयति—युवानमाचष्ट इति विग्रहे णिचि अनुबन्धलोपे "युवाल्पयोः कनन्यतरस्याम्" इति कनादेशे धातुसञ्ज्ञायां लटि तिपि गुणेऽयादेशे च कृते "कनयति" इति सिद्ध्यति । तदभावे "यवयति" इति च सिद्ध्यति ।

---

१९३५

४ वर्षे २ पत्रम् ।

१—(क) अरर, द्रवसूधात्वोरर्थप्रदर्शनपूर्वकम् "इन्दिद्रीयिषति" इत्यत्र दकारस्य द्वित्वं नकारस्य नेत्यत्र प्रमाणं प्रदर्श्य प्रियमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छतीति विग्रहयोः कार्यभेदो वर्णनीयः ।

(ख) शब्दं नित्यमातिष्ठते, हरिमुपकुरुते, भृत्यानुपवदते वस्त्रमायच्छते, विप्रवदन्ते वैद्याः । एषु कस्मिन्नर्थे केन सूत्रेणात्मनेपदम् ।

२—'भावयामासे, इत्यत्र 'ह एति' इत्यनेन हत्वाभावम् , 'आहिता' इत्यत्र दीर्घत्वाभावञ्चोपपाद्य 'युज्यते ब्रह्मचारी योगम् , 'कृष्णश्केद्भुङ्क्ते त्वं गाश्चारय, इत्यनयोर्विशेषकार्योल्लेखपूर्वकम् "पुरुषैकवचनसञ्ज्ञे तु नानयोरतिदिश्येते" इत्यस्याशयं सप्रमाणमभिधत्त ।

३—उपलम्भ्यः, साधुः, साभाव्यम् , घनाघनः, अरिन्दमः, तादृक्षः, सिनः आपीनोऽन्धुः, ईयिवान् , जघ्निः, पवित्रम् , एषु प्रकृतिप्रदर्शनपुरस्सरंससूत्रं कार्यं लेख्यम् ।

अथवा

समूह्यम् , आमात् , समक्नः, अनूचानः, दिद्युत् , अत्र ससूत्रं कार्यविशेषानुक्त्वा, घिनुणि उकारानुबन्धत्वे गुणं दोषपरिहारं च वर्णयत ।

४—'काण्डलावो व्रजति' नीशारः, निकेचायः, निघः, प्रह्वन्निः, अपमित्य याचते, प्रापय्य, पाणिग्राहम् , मूषिकाबिलप्रम् , अन्वग्भावम् , एतेषु ग्रन्थानुसारेण कार्याणि दर्शनीयानि ।

५—चक्रम् , इत्या, परिसर्या, दुष्प्रमयः, यदयं भुङ्क्ते ततः पठति, अत्र कार्यविशेषमभिधाय 'अदो जग्धिर्ल्यप्ति किति, इत्यत्र ल्यब्ग्रहणस्य 'ल्युट् च' इति ल्युटि सिद्धे "कर्मणि च येन संस्पर्शात्, इति सूत्रस्य च प्रयोजनं ब्रूत ।

अथवा ।

'कालविभागे चानहोरात्राणाम् , 'धातुसम्बन्धे च प्रत्ययाः, 'वृतिसर्गतायनेषु क्रमः, 'प्रकाशनस्थेयाख्ययोश्च' परावनुपात्ययइणः, एषामर्था लेख्याः ।

## १—प्रश्नोत्तराणि ।

'अरर' इत्ययं धातुः 'आराकर्मणि' इत्यर्थे वर्त्तते । आरा=प्रतोदः तत्करणं कर्म 'आराकर्म' इत्युच्यते । 'द्रवस्' इत्ययञ्च धातुः 'परितापपरिचरणयोः" अर्थयोः वर्त्तते । इन्दिद्रीयिषति—इत्यत्र 'इन्द्रीयितुमिच्छतीति विग्रहे 'इन्द्रीयतेः सनि 'नन्द्राः संयोगादयः" इत्यनेन नदराणां संयुक्तानामचः परस्यैव द्वित्वनिषेधात् 'द्रीशब्दयिशब्दयोरन्यतरस्य द्वित्वमिति शम् ।

पिप्रापयिषति—प्रियमाख्यातुमिच्छतीत्यर्थे "तत्करोति तदाचष्टे' इति ण्यन्तात्सनि इटि णाविष्टवत्वात् प्रियशब्दस्य "प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवबंहिगर्वर्षित्रब्द्राघिवृन्दाः" इत्यनेन प्रादेशे वृद्धौ पुकि णिचो गुणायादेशयोः षत्वे 'प्रापयिषा' इत्येव सन्नन्तम् । प्रियमाचक्षाणं प्रेरयितुमिच्छतीत्यर्थे तु प्रापि इति ण्यन्तादुक्ताद्धेतुमण्णौ तदन्तात् सनि इटि द्वितीयं णिचमाश्रित्य प्रथमणिचो लोपे द्वितीयणिचो गुणायादेशयोः 'प्रापयिषा' इत्येव सन्नन्तम् । तत्र "यथेष्टं नामधातुषु" इत्यनेन

आद्यानां त्रयाणामेकाचामेकैकस्य द्वित्वे 'पिप्रापयिषति' 'प्रापिपयिषति' 'प्रापयियिषति' इति रूपत्रयं सिद्ध्यति ।

शब्दं नित्यमातिष्ठते—इत्यत्र शब्दं नित्यत्वेन प्रतिजानीते इत्यस्मिन्नर्थे "आङः प्रतिज्ञायामुपसंख्यानम्" इति वार्तिकेनात्मनेपदे 'शब्दं नित्यमातिष्ठते' इति सिद्ध्यति ।

हरिमुपकुरुते—इत्यत्र हरिं सेवते इत्यस्मिन्नर्थे "गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः" इत्यनेन आत्मनेपदे 'हरिमुपकुरुते' इति सिद्ध्यति ।

भृत्यानुपवदते—इत्यत्र 'भृत्यान् सान्त्वयति' इत्यस्मिन्नर्थे "भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः" इत्यनेनात्मनेपदे 'भृत्यानुपवदते' इति सिद्ध्यति ।

वस्त्रमायच्छते—इत्यत्र "समुदाङ्भ्यो यमोऽग्रन्थे" इत्यनेन आत्मनेपदे 'वस्त्रमायच्छते' इति सिद्ध्यति ।

विप्रवदन्ते वैद्याः—इत्यत्र "विभाषा विप्रलापे" इति सूत्रेण विकल्पेनात्मनेपदे 'विप्रवदन्ते–विप्रवदन्ति वा वैद्या' इति सिद्ध्यति ।

## २—प्रश्नोत्तराणि ।

भावयामासे—प्रथमपुरुषैकवचने उत्तमपुरुषैकवचने चेदं रूपम् । तथा च-'भावयामासे' इत्यत्र प्रथमैकवचनतशब्दस्य "लिटस्तझयोरेशिरेच्" इत्यनेन एशादेशे उत्तमपुरुषैकवचनस्य इटश्च "टित आत्मनेपदानां टेरे" इत्येत्वे च कृते 'भावयामास ए' इति स्थिते 'ह एति' इत्यनेन सकारस्य प्राप्तोऽपि हकारादेशः न भवतीत्यर्थः । कुत इत्यत आह—तत्र 'एधिताहे' इत्यादौ सार्वधातुक एव एति परे तासेः सस्य हकारविधानात् तथाविधतासिसाहचर्यादस्तेरपि सकारस्य 'व्यतिहे' इत्यादौ सार्वधातुके एव परे प्रवृत्तिस्वीकारात् 'भावयामासे' इत्यत्र चैकारस्यार्धधातुकत्वान्नास्तेः सकारस्य हकार इति शम् ।

ग्राहिता—चिण्वदिटि कृते रूपमिदं सिद्ध्यति । प्रकृतस्य वलादिलक्षणस्यैवेटो "ग्रहोऽलिटि दीर्घः" इत्यनेन दीर्घविधानात् चिण्वदिटो न दीर्घत्वमिति । 'ग्रहीता' इत्यत्र तु–चिण्वदिडभावपक्षे वलादिलक्षणस्येटो दीर्घस्स्यादेवेति दिक् ।

युज्यते ब्रह्मचारी योगम्—इत्यत्र कर्मकर्त्तरि 'यगपवादः श्यन्' इति भाष्यात् "सृजियुज्योः श्यंस्तु" इति वार्तिकेन श्यन्प्रत्यये तत्सिद्ध्यति ।

कृष्णश्चेद्भुङ्क्ते त्वं गाश्चारय—९९ पृष्ठे द्रष्टव्यम् ।

"पुरुषैकवचनसंज्ञे तु नानयोरतिदिश्येते" इति "क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः" इति सूत्रेण तध्वमोर्विषये लोटो हिस्वौ पक्षे तध्वमाविति फलितोऽर्थः । अत्र मध्यमपुरुषबहुवचनमेव तशब्दो गृह्यते । व्याख्यानात् ध्वंसाहचर्याच्च ।

ननु हिस्वयोरनयोर्मध्यमपुरुषैकवचनत्वस्याप्यतिदेशाद्युष्मत्सामानाधिकरण्ये एकत्वे च सत्येव हिस्वौ स्याताम् । तथा च—'इमौ हिस्वौ सर्वेषां पुरुषाणां सर्वेषां च वचनानामिष्येते' इति भाष्यमनुपपन्नमित्यत आह—पुरुषैकवचनसंज्ञे तु नानयोरतिदिश्येते । कुत इत्यत आह—हिस्वविधानसामर्थ्यादिति ।

अयम्भावः—यदि हिस्वयोर्मध्यमपुरुषैकवचनसंज्ञे स्याताम् । तर्हि युष्मत्सामानाधिकरण्ये एकत्वे च सत्येव लोटो हिस्वौ स्याताम् । अन्यत्र तु यथायथं तिबाद्यादेशाः स्युः । तथा सति लोटो हिस्वविधानमनर्थकं स्यात् । अतो न पुरुषवचनातिदेश इत्यर्थः । तेन सकलपुरुषवचनविषये परस्मैपदिभ्यो हिः कर्त्तरि । आत्मनेपदिभ्यश्च स्वो भावकर्मकर्तृष्विति दिक् ।

## ३—प्रश्नोत्तराणि ।

उपलम्भ्यः साधुः—इत्यत्र "उपात्प्रशंसायाम्" इत्यनेन उपात्परस्य लभेर्नुमि अनुस्वारे परसवर्णे च कृते कृदन्तत्वात्प्रातिपदिकसंज्ञायां सौ रुत्वे विसर्गे च "उपलम्भ्यः साधुः" इति सिद्ध्यति ।

सानाय्यम्—इत्यत्र सम्यङ् नीयते होमार्थमग्निं प्रतीति विग्रहे "पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु' इति सूत्रेण निपातनात् ण्यदायादेशे समो दीर्घे च कृते प्रातिपदिकत्वात्सौ सोरमादेशे 'सानाय्यं हविर्विशेषः' इति सिद्ध्यति ।

घनाघनः—१०८ पृष्ठे द्रष्टव्यम् ।

अरिन्दमः—इत्यत्र 'दमिः शमनायाम् । तेन सकर्मक इत्युक्तम् । मतान्तरे तु अन्तर्भावितण्यर्थोऽत्र दमिः । तथा च—अरिं दमयतीति विग्रहे "संज्ञायां

भृतॄवृजिधारिसहितपिदमः" इत्यनेन खच्प्रत्ययेऽनुबन्धलोपे "अरुर्द्विषदजन्तस्य मुम्" इत्यनेन मुमागमेऽनुस्वारे परसवर्णे च कृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे 'अरिन्दमः' इति सिद्धयति।

तादृक्षः—इत्यत्र तत् पश्यतीति विग्रहे 'त्यदादिषु दृशे क्सोऽपि वाच्य' इत्यर्थकेन "क्सोऽपि वाच्यः" इति वार्तिकेन क्सप्रत्यये अनुबन्धलोपे "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति शस्य षत्वे षस्य कत्वे च विहिते सस्य षत्वे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च 'तादृक्षः' इति सिद्धयति।

स्निनः—षिञ्—इत्यस्माद्धातोः निष्ठाक्तप्रत्ययेऽनुबन्धलोपे "धात्वादेः षः सः" इत्यनेन सकारे "स्निनोतेर्ग्रासकर्मकर्तृकस्य" इत्यनेन तकारस्य नकारे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च 'स्निनः' इति सिद्धयति।

आपीनोऽन्धुः—इत्यत्र 'आङ्' पूर्वकात् 'प्याय्' इत्यस्माद्धातोः क्तप्रत्ययेऽनुबन्धलोपे "प्यायः पी" इत्यनेन 'पी' इत्यादेशे प्राप्ते "सोपसर्गस्य न" इति वार्तिकेन निषेधे ततः "आङ्पूर्वस्यान्धूधसोः स्यादेव" इति वार्तिकेन 'पी' इत्यादेशे निष्ठातकारस्य नत्वे च विहिते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे 'आपीनोऽन्धुः' इति सिद्धयति।

ईयिवान्—इत्यत्र "उपेयिवाननाश्वाननूचानश्च" इति सूत्रे 'उपेत्यविवक्षितम्। ततश्च–'इण्' इत्यस्माद्धातोः निपातनात् विकल्पेन लिटि क्वसुप्रत्यये, द्वित्वे च कृते वलादित्वादिटि प्राप्ते "नेड्वशिकृति" इत्यनेन निषेधे पुनश्च क्रादिनियमाच्चेटि प्राप्ते तस्यापि "वस्वेकाजाद्घसाम्" इति सूत्रप्राप्तनियमेन निषेधे ततश्चानेन निपातनादिटि कृते उत्तरखण्डस्य इकारस्य चेयङादेशे सवर्णदीर्घे उगित्वान्नुमि दीर्घे प्रातिपदिकत्वात्सौ सुलोपे सलोपे च कृते 'ईयिवान्' इति सिद्धयति।

जज्ञिः—इत्यत्र 'जनी' इत्यस्माद्धातोः "भाषायां धाञ्कृसृगमिजनिनमिभ्यः" इति वार्तिकेन किप्रत्ययेऽनुबन्धलोपे द्वित्वादिकार्ये प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते "जज्ञिः" इति सिद्धयति।

पवित्रम्—पूयते अनेनाज्यमिति विग्रहे "पुवः संज्ञायाम्" इत्यनेन इत्रप्रत्यये गुणे अवादेशे च विहिते प्रातिपदिकत्वात्सौ सोरमादेशे 'पवित्रम्' इति सिद्धयति।

अथवा—

**समूह्यम्**—इत्यत्र "अग्नौ परिचाय्योपचाय्यसमूह्याः" इत्यनेन निपातनात् सम्पूर्वस्य वहेः कर्मणि ण्यतिप्रत्ययेऽनुबन्धलोपे सम्प्रसारणे दीर्घे च कृते प्रातिपदिकत्वात्सौ सोरमादेशे '**समूह्यम्**' इति सिद्ध्यति ।

**आमात्**—१०० पृष्ठे द्रष्टव्यम् ।

**समक्नः**—१३ ,, ,,

**अनूचानः**—वेदस्यानुवचनं कृतवानिति विग्रहे "उपेयिवाननाश्वाननूचानश्च" इत्यनेन निपातनादनुपूर्वाद् वचेः कर्तरि कानच्प्रत्ययेऽनुबन्धलोपे यजादित्वात्सम्प्रसारणे पूर्वरूपे सवर्णदीर्घे च कृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च "**अनूचानः**" इति सिद्ध्यति ।

**दिद्युत्**—इत्यत्र "द्युतिगमिजुहोत्यादीनां द्वित्वं क्विप् च" इति वार्तिकेन क्विप्प्रत्यये द्वित्वे च कृते सम्प्रसारणे प्रातिपदिकत्वात्सौ सोर्लोपे '**दिद्युत्**' इति सिद्ध्यति ।

**घिनुणि उकारानुबन्धफलमिति**–१०० पृष्ठे "शमित्यष्टाभ्यो घिनुण्" इति सूत्रव्याख्यावसरे द्रष्टव्यम् ।

## ४—प्रश्नोत्तराणि ।

**काण्डलावो व्रजति**—काण्डं लुनातीति विग्रहे ण्वुलि प्राप्ते तच्चापवादत्वात्प्रबाध्य "अण्कर्मणि च" इत्यनेन अण्प्रत्ययेऽनुबन्धलोपे णित्वाद्वृद्धौ आवादेशे च विहिते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च '**काण्डलावो व्रजति**' इति सिद्ध्यति ।

**नीशारः**—'नि' इत्युपसर्गपूर्वकात् 'शॄ' इत्यस्माद्धातोः "शॄ वायुवर्णनिवृत्तेषु" इति वार्तिकेन घञ्प्रत्ययेऽनुबन्धलोपे वृद्धौ च कृतायां "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इत्यनेनोपसर्गस्य दीर्घे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च ते '**नीशारः**' इति सिद्ध्यति ।

**निकेचायः**—पुनः पुनः राशीकरणमित्यर्थे "निवासचितिशरीरोपसमाधानेष्वादेश्च कः" इति सूत्रेण चिनोतेर्घञ्प्रत्यये आदेश्च ककारादेशे अनुबन्धलोपे वृद्धौ आयादेशे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च '**निकेचायः**' इति सिद्ध्यति ।

निघः—निर्विशेषं हन्यन्ते ज्ञायन्त इति विग्रहे "निघो निमितम्" इति सूत्रेण 'नि' इत्युपसर्गपूर्वकात् हन्धातोर्निपातनादपप्रत्यये टिलोपे घत्वे च कृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'निघः' इति सिद्ध्यति ।

प्रह्लनिः—प्रोपसर्गपूर्वकात् 'ह्लाद' इत्यस्माद्धातोः क्तिन्प्रत्यये अनुबन्धलोपे "ह्लादो निष्ठायाम्" इति सूत्रे "ह्लादः" इति योगविभागात् अनिष्ठायामपि क्वचिद्ध्रस्व इति ज्ञापनाद्ध्रस्वे तकारस्य नकारे च कृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'प्रह्लनिः' इति सिद्ध्यति ।

अपमित्ययाचते—'त्वया गौर्दत्ता चेत् मया महिषीदीयते इत्येवं विनिमयं कर्त्तुं गां याचते' इत्यर्थे 'अप' इत्युपसर्गपूर्वकात् ङकारेत्संज्ञक 'मे' इत्यस्माद्धातोः क्त्वाप्रत्यये तस्य ल्यबादेशे "मयतेरिदन्यतरस्याम्" इति सूत्रेण विकल्पेन इकारान्तादेशे तुकि च कृते उकावितौ प्रातिपदिकत्वात्सौ सोर्लोपे 'अपमित्य-य ाचते' इति सिद्ध्यति । इत्वाभावे-"ईद्यति" इत्यनेन प्राप्तमपीत्वं "नल्यपि" इति निषेधात् "आदेच उपदेशेऽशिति" इत्यात्वे 'अपमाय' इति च सिद्ध्यति ।

प्रापय्य—प्रोपसर्गपूर्वकात् लृकारेत्संज्ञक 'आप्' इत्यस्माद्धातोर्णिचि तस्मात् क्त्वाप्रत्यये तस्य ल्यबादेशेऽनुबन्धलोपे "विभाषाऽऽपः" इत्यनेन णेरयादेशे प्रातिपदिकत्वात्सौ सोर्लोपे 'प्रापय्य' इति सिद्ध्यति ।

पाणिग्राहम्—'पाणि' इत्युपपदात् 'ग्रह' धातोः "हस्ते वर्तिग्रहोः" इत्यनेन णमुलि अनुबन्धलोपे णित्वादुपधावृद्धौ प्रातिपदिकत्वात्सौ सोर्लोपे 'पाणिग्राहम्' इति सिद्ध्यति ।

मूषिकाबिलप्रम्—"वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्" इति सूत्रे 'अस्य' इत्यनुक्तौ उपपदेऽपि ऊकारस्य लोपापत्तिस्स्यात्तदर्थं तद्ग्रहणमिति शम् ।

अन्वग्भावम्—इत्यत्र "अन्वक्छब्दे उपपदे 'भू' इत्यस्माद्धातोः "अन्वच्यानुलोम्ये" इत्यनेन णमुलि अनुबन्धलोपे वृद्धौ आवादेशे च कृते प्रातिपदिकत्वात्सौ सोर्लोपे 'अन्वग्भावम्' इति सिद्ध्यति ।

## ८—प्रश्नोत्तराणि ।

चक्रम्—इत्यत्र "द्वित्वप्रकरणे के कृञादीनामिति वाच्यम्" इति वार्तिकेन कप्रत्यये द्वित्वादिकार्ये च कृते प्रातिपदिकत्वात्सौ सोरमादेशे 'चक्रम्' इति सिद्ध्यति ।

**इत्या**—ईयतेऽनयेति विग्रहे 'इण्' इत्यस्माद्धातोः **"संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः"** इत्यनेन क्यप्प्रत्यये तुकि च कृते टापि प्रातिपदिकत्वात्सौ सोर्लोपे **'इत्या'** इति सिद्ध्यति ।

**परिसर्या**—इत्यत्र परिपूर्वात् 'सृ' इत्यस्माद्धातोः **"परिचर्यापरिसर्यामृगयाटाट्यानामुपसङ्ख्यानम्"** इति वार्तिकेन निपातनात् शप्रत्यये यकि च कृते शप्रत्ययस्य शित्वेन सार्वधातुकतया ङित्वात् गुणनिषेधे प्राप्ते निपातनाद्गुणे च कृते टापि प्रातिपदिकत्वात्सौ सोर्लोपे **'परिसर्या'** इति सिद्ध्यति ।

**दुष्प्रमयः**—इत्यत्र **"मीनातिमिनोतिदीङां ल्यपि च"** इत्यनेन आत्वे प्राप्ते **"निमिमीलियां खलचोरात्वं नेति वाच्यम्"** इति वार्तिकेन खल्प्रत्ययेऽनुबन्धलोपे गुणेऽयादेशे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते **'दुष्प्रमयः'** इति सिद्ध्यति ।

**यदयं भुङ्क्ते ततः पठति**—इत्यत्र क्त्वा णमुलि च प्राप्ते **"न यद्यनाकाङ्क्षे"** इत्यनेन निषिद्धे तत्सिद्धति ।

**"अदो जग्धिर्ल्यप्ति किति"**—नन्वत्र सूत्रे "अदो जग्धिस्ति किति" इत्येतावतैव 'प्रजग्ध्य' इत्यत्रापि ल्यपः प्रागेवान्तरङ्गत्वात् जग्ध्यादेशे सिद्धे ल्यब्ग्रहणं व्यर्थमिति चेन्न । नच तद्ग्रहणाभावे 'तादौ किति' विहितमित्वं 'प्रदाय' इत्यत्र ल्यपः प्रागेवान्तरङ्गत्वात् प्राप्नोति । तथा 'प्रखन्य' इत्यत्र **"जनसनखनां सञ्झलोः"** इति झलादिलक्षणमात्वं ल्यपः प्रागेव स्यादिति तेनैव ल्यब्ग्रहणेन **"अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब्बाधते"** इति ज्ञापनात् 'ह्रस्वदत्वात्वेत्वदीर्घत्वशूठिटो ल्यपि न' प्रकृते च अन्तरङ्गजग्ध्यादेशापेक्षया प्राबल्याल्ल्यपि कृते सति तकारादित्वलक्षणजग्धिभावस्याप्रसक्तेः जग्धिविधौ ल्यब्ग्रहणं सार्थकमिति शम् ।

**कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम्"** नन्वत्र **'ल्युट् च'** इति पूर्वसूत्रेणैव सिद्धे सूत्रमिदं व्यर्थमिति चेन्न । उपपदसमासस्य नित्यत्वात् तदर्थमस्य सूत्रस्यावश्यकत्वादिति दिक् ।

**अथवा—**

## ६—प्रश्नोत्तराणि ।

**"कालविभागे चानहोरात्राणाम्"**—भविष्यति काले मर्यादोक्त-

चरस्मिन्प्रविभागे अहोरात्रसम्बन्धिनि कालविभागे चानद्यतनवन्न भवतीति सूत्रार्थः।

धातुसम्बन्धे च प्रत्ययाः,—धात्वर्थानां सम्बन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युरिति सूत्रार्थः।

"वृत्तिसर्गतायनेषु क्रमः"—वृत्तिसर्गतायनेषु क्रमधातोरात्मनेपदं भवतीति सूत्रार्थः।

"प्रकाशनस्थेयाख्ययोश्च"—अस्य सूत्रार्थः ११० पृष्ठे द्रष्टव्यम्।

"परावनुपात्यय इणः"—'परौ उपपदे इण्धातो घञ् स्यादनुपात्यये गम्ये इति सूत्रार्थः।

---

१९३६

४ वर्षे १ पत्रम्।

१—अबिभरुः, इयर्ति, जज्ञते, बभ्रुः, एतान् विशेषसूत्रार्थप्रदर्शनपुरस्सरं संस्कृत्य 'भृञामित्' इति सूत्रस्थबहुवचनफलमभिधीयताम्।

२—दिध्ये, प्रनंष्टा, एतयोः साधुत्वं ससूत्रार्थनिर्देशमपदर्श्य, भ्रस्ज, गॄ, षू, धातूनां लुङि मध्यमपुरुषैकवचनद्विवचनयोः रूपे ससाधने प्रत्येकमुच्येताम्।

३—इन्धे, परिष्करोति, विष्टभ्नाति, अपीपिडत्, चायते, अलुलोचत्, एषां साधुत्वमभिधाय, गणानां क्रमिकत्वे प्रमाणं फलञ्च प्रतिपादयति।

४—दूषयति, वापयति, जिगीषति, तितंसति, अराटिता, अवञ्चानीत, अरियतः। एते कथं साधवः।

५—गव्याञ्चकार, विष्णूयति, इदामति, भ्रशयति, एतेषां संस्कारं प्रदर्श्य, घटमाख्यदिति विग्रहे रूपं वदत।

६—दधिस्यति, अजघर्ट्, चेकीयते, पिपविषते, एतेषां साधनप्रक्रियां तत्तत्सूत्रार्थप्रदर्शनपूर्वकं प्रदर्श्य ह्रीधातोर्णिचि सनि रूपमेकं साध्यताम्।

सूचना—एषु पञ्चैव प्रश्नाः समाधेयाः।

## १—प्रश्नोत्तराणि ।

**अबिभरुः**—१५ पृष्ठे द्रष्टव्यम् ।

**इयर्ति**—इत्यत्र "बहुलं छन्दसि" इत्येव ऋधातोरित्वसिद्धेः "अर्तिपिपर्त्योश्च" इत्यतिग्रहणात् लोकेऽपि ऋधातोः श्लुविकरणस्य प्रयोगो विज्ञायत इति । तथा च—'ऋ' इत्यस्माद्धातोर्लटि तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते "जुहोत्यादिभ्यः श्लुः" इति श्लुप्रत्यये "श्लौ" इति द्वित्वेऽभ्याससंज्ञायाम् "उरत्" इत्यत्वं बाधित्वा "अर्तिपिपर्त्योश्च" इत्यभ्यासऋकारस्य इत्वे रपरत्वे "हलादिः शेषः" इत्यभ्यासलोपे उत्तरखण्डस्य ऋकारस्य गुणे रपरत्वे 'इ+अर्+ति' इति स्थिते "अभ्यासस्यासवर्णे" इतीयङादेशे "इयर्ति" इति सिद्ध्यति ।

**जज्ञति**—जननार्थकात् जन्—इत्यस्माद्धातोर्लटि झिप्रत्यये सार्वधातुकसंज्ञायां शपि "जुहोत्यादिभ्यः श्लुः" इति श्लौ "श्लौ" इति द्वित्वेऽभ्याससंज्ञायां "हलादिः शेषः" इत्यभ्यासलोपे "श्नाभ्यस्तयोरातः" इत्यनेन झेरदादेशे 'जजन अति' इति स्थिते अतेर्ङित्वेऽपि झलादित्वाभावादात्वाभावे "गमहनजनखनघसां लोपः क्ङित्यनङि" इत्युपधालोपे सस्य श्चुत्वेन ञकारे संयोगे च "जज्ञति" इति सिद्ध्यति ।

**बभ्रुः**—६८ पृष्ठे द्रष्टव्यम् ।

**भृञामित्**—अत्र सूत्रे बहुवचनग्रहणात् तत्सामर्थ्यात् "भृञादीनाम्" इति लभ्यते । तस्मात् 'भृञ्' 'माङ्' 'ओहाङ्' एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ इति सूत्रार्थः सम्पद्यत इति ।

## २—प्रश्नोत्तराणि ।

**दिध्ये**—आधारार्थकात् ञकारेत्संज्ञक 'धी' इत्यस्माद्धातोर्लिटि आत्मनेपदे तप्रत्यये "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्याससंज्ञायां "ह्रस्वः" इत्यनेन ह्रस्वे "अभ्यासे चर्च" इति जश्त्वे "लिटस्तझयोरेशिरेच्" इत्यनेन तकारस्य एशादेशेऽनुबन्धलोपे यणि च कृते 'दिध्ये' इति रूपं सिद्ध्यति ।

**प्रनंष्टा**—प्रोपसर्गपूर्वकात् 'णश्' इत्यस्माद्धातोर्लुटि तिपि "णो नः" इति नत्वे "स्यतासी लृलुटोः" इत्यनेन तास्प्रत्यये तिपो डादेशे डित्वाट्टिलोपे

"मस्जिनशोर्झलि" इति नुमागमे उमावितौ नस्यानुस्वारे "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति षत्वे ष्टुत्वे च विहिते "उपसर्गादसमासेऽपि णोप देशस्य" इति णत्वे च प्राप्ते "नशेः षान्तस्य" इति निषेधे 'प्रनंष्टा' इति सिद्ध्यति ।

'भ्रस्ज' धातोर्लृङि मध्यमपुरुषैकवचने परस्मैपदे—एकवचने सिपि । 'अभर्क्ष्यः' "अभ्रक्ष्यः" इति रूपे । आत्मनेपदे चैकवचने थास्प्रत्यये 'अभर्क्ष्यथाः' 'अभ्रक्ष्यथाः' इति च रूपे भवत इति । एवं-परस्मैपदे द्विवचने-थस्प्रत्यये च 'अभर्क्ष्यतम्' 'अभ्रक्ष्यतम्' इति रूपे । आत्मनेपदे द्विवचने आथामि 'अभर्क्ष्येथाम्' 'अभ्रक्ष्येथाम्' इति च रूपे भवत इति । तथा च—'अभर्क्ष्यः' इत्यत्र 'भ्रस्ज' धातोर्लृङि सिपि अनुबन्धलोपे च कृते "स्यतासी लृलुटोः" इत्यनेन स्यप्रत्यये "भ्रस्जो रोपधयो रमन्यतरस्याम्" इत्यनेन रोपधयोः रमागमे जस्य "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति षत्वे "षढोः कः सि" इत्यनेन कत्वे सस्य षत्वे च विहिते सस्य रुत्वे विसर्गे "अभर्क्ष्यः" इति सिद्धयति। रमागमाऽभावे—'अभ्रक्ष्यः' इति च सिद्धयति । एवमेव—आत्मनेपदे च—थास्प्रत्यये रमागमे 'अभर्क्ष्यथाः' इति । रमागमाभावे—'अभ्रक्ष्यथाः' इति च सिद्धयति । तथा-परस्मैपदे द्विवचने थस्प्रत्यये च—"तस्थस्थमिपांतान्तन्तामः" इत्यनेन तामादेशे रमागमे च 'अभर्क्ष्यतम्' इति, रमागमाऽभावे च—'अभ्रक्ष्यतम्' इति सिद्धयति । आत्मनेपदे द्विवचने आथामि तु—"आतो ङितः" इत्यनेन आकारस्य इयादेशे यलोपे गुणे रमागमे च विहिते–"अभर्क्ष्येथाम्' इति । रमागमाऽभावे च—'अभ्रक्ष्येथाम्' इति च सिद्धयति ।

'गॄ' निगरणे इति धातोर्लृङि मध्यमपुरुषैकवचने सिपि "अगरिष्यः" 'अगरीष्यः इति च रूपे । लत्वपक्षे च—'अगलिष्यः' 'अगलीष्यः' इति च भवत इति । तथैव—द्विवचने—थस्प्रत्यये—'अगरिष्यतम्' "अगरीष्यतम्' इति, लत्वपक्षे च—'अगलिष्यतम्' 'अगलीष्यतम्' इति च रूपे भवत इति । तथा च—'अगरिष्यः' इत्यत्र 'गॄ' धातोर्लृङि सिपि अनुबन्धलोपे अडागमे च विहिते "स्यतासी लृलुटोः" इत्यनेन स्यप्रत्यये इडागमे "ॠच्छत्यॄताम्" इति गुणे "वॄतो वा" इति विकल्पेन दीर्घे सस्य रुत्वे विसर्गे 'अगरीष्यः' इति । दीर्घाभावपक्षे च—"अगरिष्यः' इति च सिद्धयति ।

"अचि विभाषा" इत्यनेन विकल्पेन लत्वे 'अगलिष्यः' 'अगलीष्यः' इति च सिद्धयतः। तथैव—द्विवचने थसि तमादेशे दीर्घे—'अगरीष्यतम्' तदभावपक्षे—'अगरिष्यतम्' इति। लत्वे च—'अगलीष्यतम्' 'अगलिष्यतम्' इति च सिद्धयत इति।

ऊकारेत्संज्ञक 'षू' इत्यस्माद्धातोर्लृङि मध्यमपुरुषैकवचने आत्मनेपदे—थास्-प्रत्यये च–'असविष्यथाः' 'असोष्यथाः' इति च रूपे । तथा द्विवचने—आथामि—'असविष्येथाम्' 'असोष्येथाम्' इति रूपे च भवतः। तथा हि–'षू' इत्यस्माद्धातोर्लृङि थास्प्रत्ययेऽडागमे कृते "स्यतासी लृलुटोः" इति स्यप्रत्यये "स्वरतिसूतिसूयतिधूञूदितो वा।" इति विकल्पेनेडागमे गुणे अवादेशे षत्वे च विहिते सस्य रुत्वे विसर्गे 'असविष्यथाः' इडभावे 'असोष्यथाः' इति च सिद्धयतः। तथैव—द्विवचने–आथामि "आतो ङितः" इतीयादेशे यलोपे गुणे इत्यादि च कृते 'असविष्येथाम्' इडभावे 'असोष्येथाम्' इति च सिद्धयतः।

## ३—प्रश्नोत्तराणि।

इन्धे—'इन्ध' इत्यस्माद्धातोर्लटि आत्मनेपदे तप्रत्यये सार्वधातुकसंज्ञायां "कर्त्तरि शप्" इत्यनेन शपि प्राप्ते तम्प्रबाध्य "रुधादिभ्यः श्नम्" इत्यनेन श्नम्प्रत्ययेऽनुबन्धलोपे मित्वादन्त्यादचः परे "टित आत्मनेपदानां टेरे" इत्यनेन टेरेत्वे 'इनन्धते' इति स्थिते "श्नान्नलोपः" इत्यनेन नलोपे "श्नसोरल्लोपः" इत्यल्लोपे 'इन्धते' इति स्थिते तकारस्य "झषस्तथोर्धोऽधः" इत्यनेन धकारे "झरो झरि सवर्णे" इत्यनेन विकल्पेन धलोपे "इन्धे" इति लोपाभावे च धस्य जश्त्वेन दकारे 'इन्द्धे' इति च सिद्धयति।

परिष्करोति—'परि' इत्युपसर्गपूर्वकात् 'कृ' इत्यस्माद्धातोः लटि तिपि सार्वधातुकसंज्ञायां शपि च प्राप्ते तदपवादभूतेन "तनादिकृञ्भ्यः उः" इतिसूत्रेण उप्रत्यये, उप्रत्ययमाश्रित्य 'ऋकारस्य गुणे रपरे च कृते तिपमाश्रित्य उकारस्य च गुणे विहिते "सम्परिभ्यां करोतौ भूषणे" इत्यनेन सुडागमे उटावितौ "परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्" इत्यनेन षत्वे 'परिष्करोति' इति सिद्धयति।

**विष्टभ्नाति**—'वि' इत्युपसर्गपूर्वकात् उकारेत्संज्ञक 'स्तन्भू' इत्यस्यस्माद्धातोर्लटि तिपि पस्येत्संज्ञायां लोपे च कृते सार्वधातुकसंज्ञायां शपि प्राप्ते **"क्रादिभ्यः श्ना"** इति श्नाप्रत्यये **"लशक्वतद्धिते"** इति शस्येत्संज्ञायां लोपे च विहिते **"अनिदितां हल उपधायाः क्ङिति"** इत्यनेन नलोपे **"स्तन्भेः"** इत्यनेन षत्वे ष्टुत्वे च विहिते । **'विष्टभ्नाति'** इति सिद्धयति ।

**अपीपिडत्**—अवगाहनार्थकात् 'पीड्' इत्यस्माद्धातोः **"सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्"** इत्यनेन णिचि अनुबन्धलोपे **"सनाद्यन्ता धातवः"** इत्यनेन धातुसंज्ञायां लुङि तिपि अडागमे च विहिते **"च्लि लुङि"** इत्यनेन च्लौ **"णिश्रिद्रुस्रुभ्यः कर्तरि चङ्"** इत्यनेन चङादेशेऽनुबन्धलोपे **"चङि"** इत्यनेन द्वित्वेऽभ्याससंज्ञायां ह्रस्वे हलादिः शेषे च कृते **"णौ चङ्युपधायाः ह्रस्वः"** इत्यनेन नित्य एव ह्रस्वे प्राप्ते **"भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्"** इति विकल्पेन ह्रस्वे सन्वद्भावे **"दीर्घो लघोः"** इत्यभ्यासस्य दीर्घे **"णेरनिटि"** इति णिलोपे **'अपीपिडत्'** इति । ह्रस्वाभावपक्षे तु सन्वद्भावाभावेन दीर्घाभावात्—**'अपीपिडत्'** इति च सिद्धयति ।

**चपयति**—७० पृष्ठे द्रष्टव्यम् ।

**अलुलोचत्**—ऋकारेत्संज्ञक 'लोचृ' इत्यस्माद्धातोर्णिचि अनुबन्धलोपे **"सनाद्यन्ता धातवः"** इति धातुसंज्ञायां लुङि तिपि अडागमे च विहिते च्लौ च्लेश्चङादेशे **"चङि"** इत्यनेन द्वित्वेऽभ्याससंज्ञायां **"ह्रस्वः"** इत्यनेन ह्रस्वे हलादिः शेषे च कृते उपधाह्रस्वे प्राप्ते **"नाग्लोपिशास्वृदिताम्"** इत्यनेन तन्निषेधे **"णेरनिटि"** इति णिलोपे **'अलुलोचत्'** इति सिद्धयति ।

**गणानां क्रमिकत्वे प्रमाणमिति—"बहुलमेतन्निदर्शनम्"** इति गणसूत्रात् अदन्तानां कथादीनां धातूनां पाठः बहुलं भवतीति बोधनात् **'अपपर्णात्'** इत्यादौ अग्लोपित्वान्न सन्वत्वमिति । 'एवं **'क्षिपयति'** इत्यादौ चाग्लोपस्य स्थानिवत्वान्न गुणः । **'वसयति'** इत्यत्र चादन्तत्वान्नोपधावृद्धिरिति । **'आन्दोलयति'** इत्यादौ चादन्तत्वेनाग्लोपित्वान्नोपधावृद्धिरिति । तत्र मतान्तरमाह—अन्येतु भ्वादिः, अदादिः, जुहोत्यादिः, दिवादिः, स्वादिः, तुदादिः, रुधादिः, तनादिः, क्र्यादिः, चुरादिरिति दशगणीपाठो बहुलमित्याहुः । तेनापठिता

अपि सौत्रलौकिकवैदिका बोध्याः । मतान्तरमाह—अपरे तु—चुरादिभिन्ना उदाहृताः ये नवगणाः तेभ्योऽपि कचित् स्वार्थे णिच् अस्माद्बहुलग्रहणादेव लभ्यत इति । यथा—'रामो राज्यमचीकरत्' इत्याहुः । मतान्तरमाह—चुरादिभ्य एव बहुलं णिजित्यर्थ इत्यन्ये । इत्येते सर्वे पक्षाः प्राचां ग्रन्थे स्थिता इति । वस्तुतस्तु—"भूवादयो धातवः" इति सूत्रे पाठेन धातुसंज्ञेति भाष्यप्रतीकमुपादाय स पाठो नोपलक्षणार्थ इति । किन्तु—इयत्ताप्रतिपादनार्थ इति । कैयट आह । एवञ्च—"बहुलमेतन्निदर्शनम्" इति गणसूत्रमनार्षमिति दिक् ।

## ४—प्रश्नोत्तराणि ।

दूषयति—'दुष्' इत्यस्माद्धातोर्णिचि अनुबन्धलोपे "दोषो णौ" इत्यनेन ऊकारादेशे धातुत्वाल्लटि तिपि अनुबन्धलोपे गुणेऽयादेशे च 'दूषयति' इति सिद्धयति ।

वापयति—'वी' इत्यस्माद्धातोर्णिचि अनुबन्धलोपे णित्वाद्वृद्धौ "प्रजने वीयतेः" इत्यनेन विकल्पेनात्वे "अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग् णौ" इत्यनेन पुगागमे उकावितौ गुणेऽयादेशे च कृते 'वापयति' इति सिद्धयति । आत्वाभावे आयादेशे 'वाययति' इति सिद्धयति ।

जिगीषति—जेतुमिच्छतीति विग्रहे "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इत्यनेन सनि अनुबन्धलोपे इडागमे "सन्यङोः" द्वित्वेऽभ्यास-संज्ञायां "अज्झनगमां सनि" इत्यनेन दीर्घे "सन्लिटोर्जेः" इत्यनेनाभ्यासात्परस्य जकारस्य कुत्वेन गकारे धातुसंज्ञायां लटि तिपि अनुबन्धलोपे सस्य षत्वे च विहिते 'जिगीषति' इति सिद्ध्यति ।

तितंसति—११४ पृष्ठे द्रष्टव्यम् ।

अरारिता—'ऋ' इत्यस्माद्धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इत्यनेन यङि "यङि च" इत्यनेन गुणे 'अरार्यते' इति भाष्योदाहरणाच्च "सन्यङोः" इत्यनेन यकारपररेफस्यापि द्वित्वेऽभ्यास-संज्ञायां हलादिः शेषे "यस्य हलः" इत्यनेन यकारलोपे च विहिते धातु-संज्ञायां लुटि तिपि तासि तिपो डादेशे डित्वाट्टिलोपे च कृते इडागमे 'अरारिता' इति सिद्ध्यति ।

अचङ्खानीत्—उकारेत्संज्ञक 'खनु' इत्यस्माद्धातोः "धातोरेकाचो

हलादेः क्रियासमभिहारे यङ्" इत्यनेन यङि "यङोऽचि च" इत्यनेन लुकि च कृते प्रत्ययलोपे प्रत्ययलक्षणतया "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायां हलादिः शेषे च कृते "नुगतोऽनुनासिकान्तस्य" इत्यनेन नुगागमे उकावितौ नस्यानुस्वारे परसवर्णे च कृते "कुहोश्चुः" इति चुत्वे चर्त्वे च विहिते धातुत्वाल्लुङि तिपि अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे च्लौ च्लेः सिजादेशे इचावितौ इडागमे "अस्तिसिचोऽपृक्ते" इतीडागमे च कृते "इट ईटि" इत्यनेन सलोपे "अतो हलादेर्लघोः" इति विकल्पेन वृद्धौ 'अचङ्खानीत्' इति । वृद्ध्यभावे । 'अचङ्खनीत्' इति च सिद्धयति ।

अरियृतः—'ऋ' इत्यस्माद्धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इत्यनेन यङि "यङोऽचि च" इत्यनेन लुकि च कृते प्रत्ययलोपे प्रत्ययलक्षणेन यङन्तत्वमाश्रित्य "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायाम् 'उरत्' इत्यत्वे रपरे च कृते हलादिः शेषे "रुग्रिकौ च लुकि" इत्यनेन रीगागमे "अभ्यासस्याऽसवर्णे" इतीयङादेशे धातुत्वाल्लटि तसि ङित्वाद्गुणाभावे सस्य रुत्वे विसर्गे 'अरियृतः' इति सिद्धयति ।

## ९—प्रश्नोत्तराणि ।

गव्याञ्चकार—गामात्मन इच्छाञ्चकारेति विग्रहे "सुप आत्मनः क्यच्" इत्यनेन क्यचि अनुबन्धलोपे धात्ववयवत्वात्सुपो लुकि धातुसंज्ञायां लिटि आमि "आमः" इत्यनेन लिटो लुकि च कृते "कृञ्चानुप्रयुज्यते लिटि" इत्यनेन आमन्तलिट्परक 'कृ' इत्यनुप्रयोगे लिटस्तिपि णलि च कृतेऽनुबन्धलोपे द्वित्वेऽभ्याससंज्ञायाम् "उरत्" इत्यत्वे रपरे हलादिः शेषे च कृते "कुहोश्चुः" इति चुत्वे वृद्धौ च कृतायां 'गव्याञ्चकार' इति सिद्धयति ।

ननु 'गव्याञ्चकार'इत्यत्र आम आर्धधातुकत्वात्तस्मिन् परे "यस्य हलः" इत्यनेन यलोपापत्तिस्तन्न । सन्निपातपरिभाषया क्यचो यस्य लोपो नेति शम् ।

विष्णूयति—विष्णुमिवाचरतीति विग्रहे "उपमानादाचारे" इत्यनेन क्यचि अनुबन्धलोपे धातुत्वाल्लटि तिपि सार्वधातुकसंज्ञायां शपि अनुबन्धलोपे "अकृत्सार्वधातुकयोर्दीर्घः" इत्यनेन दीर्घे 'विष्णूयति द्विजम्' इति सिद्धयति।

इदामति—इदमिवाचरतीति विग्रहे इदम् शब्दात् "सर्वप्रातिपदिकेभ्यः

क्विब्वा वक्तव्यः" इत्यनेन विकल्पेन क्विपि अनुबन्धलोपे "अनुनासिकस्य क्विझलोः क्ङिति" इत्यनेन दीर्घे धातुसंज्ञायां लट्लकारे तिप्प्रत्ययेऽनुबन्धलोपे सार्वधातुकसंज्ञायां शपि शपावितौ पररूपे च कृते 'इदामति' इति सिद्ध्यति ।

भ्रशयति—भृशमिवाचष्ट इति विग्रहे "तत्करोति तदाचष्टे" इति सूत्रेण णिचि अनुबन्धलोपे प्रातिपदिकावयवत्वात्सुपो लुकि च कृते धातुत्वाल्लटि तिपि अनुबन्धलोपे [सा]र्वधातुकसंज्ञायां शपि शपावितौ गुणे अयादेशे 'भ्रशयति' इति सिद्ध्यति ।

घटमाख्यदिति विग्रहे—अग्लोपित्वात् सन्वद्भावाऽभावेन "सन्यतः" इतीत्वस्याप्रवृत्तौ "अजघटत्" इति रूपं भविष्यतीति शम् ।

## ६—प्रश्नोत्तराणि ।

दधिस्यति—दधि इच्छतीति विग्रहे द्वितीयान्तदधिशब्दात् क्यचि सुपो लुकि "सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ" इति वार्तिकेन सुगागमे कृतेऽनुबन्धलोपे धातुसंज्ञायां लटि तिपि पकारस्येत्संज्ञायां लोपे च विहिते "दधिस्यति" इति । असुगागमे तु यणि कृते 'दध्यस्यति' इति च सिद्ध्यति ।

अजर्घर्ट—ऊकारेत्संज्ञकात् 'गृहू' इत्यस्माद्धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इत्यनेन यङि "यङोऽचि च" इत्यनेन यङ्लुकि च कृते प्रत्ययलोपे प्रत्ययलक्षणतया "सन्यङोः" इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् "उरत्" इत्यत्वे रपरे च कृते हलादिः शेषे "कुहोश्चुः" इत्यनेन चुत्वे रुगागमे धातुसंज्ञायां लङि तिपि अडागमे च विहिते अनुबन्धलोपे "यङो वा" इत्यनेन विकल्पेन ईटि च कृते 'अजर्गृहीत्' इति । ईडभावे तु—'अजर्गर्ह् त्' इति स्थिते "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इत्यनेन तलोपे "हो ढः" इति हस्य ढत्वे जश्त्वे चर्त्वे च विहिते गस्य भ[ष्]भावेन घकारे 'अजर्घर्ट' इति, रिगागमे तु—'अजरिघर्ट' इति, रीगागमे च 'अजरीघर्ट' इति सिद्ध्यति ।

चेकीयते—ऋकारेत्संज्ञक "चायृ" इत्यस्माद्धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इत्यनेन यङि अनुबन्धलोपे "चायः की" इत्यनेन कीभावे "सन्यङोः" इत्यनेन द्वित्वेऽभ्याससंज्ञायां 'कुहोश्चुः' इति चुत्वे धातुत्वाल्लटि आत्मनेपदे तप्रत्यये गुणे टेरेत्वे च विहिते 'चेकीयते' इति सिद्ध्यति ।

पिपविषते—ङकारेत्संज्ञक 'पूङ्' इत्यस्माद्धातोः "धातोः कर्मणः समानक-

तृंकादिच्छायां वा" इत्यनेन सनि अनुबन्धलोपे "सन्यङोः" इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् "ओः पुयण्ज्यपरे" इत्यनेन इत्वे "स्मिपूङ्रञ्ज्वशां सनि" इत्यनेन इडागमे गुणेऽवादेशे च विहिते सस्य षत्वे धातुत्वाल्लटि आत्मनेपदे तप्रत्यये टेरेत्वे 'पिपविषते' इति सिद्ध्यति ।

ह्रीधातोर्णिचि—'ह्री' इत्यस्माद्धातोर्णिचि अनुबन्धलोपे "अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ" इति पुगागमे उकावितौ गुणे च विहिते 'ह्रेपि' इत्यस्य "सनाद्यन्ता धातवः" इति धातुसंज्ञायां तस्मात्सनि च कृते अनुबन्धलोपे "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायां हलादिःशेषे च कृते "कुहोश्चुः" इति चुत्वे जश्त्वे च विहिते सनो वलादित्वादिडागमे "णेरनिटि" इति णिलोपे धातुत्वाल्लटि तिपि अनुबन्धलोपे गुणेऽयादेशे सस्य षत्वे च विहिते 'जिह्रेपयिषति' इति रूपं सिद्ध्यति ।

---

१९३६

४ वष २ पत्रम् ।

१—लोट्-चुरण-धातोरर्थम्, माणवकमनुक्रीडति, गजोऽपक्किरति, आहृध्वं मा रघूत्तमम्, एषु विशेषकार्यञ्च प्रदर्श्य, दशयते भवः, आरोहयते हस्ती, इत्यत्र तृतीयकक्षायामेव तद्प्रकारो लेखनीयः ।

२—"अनुपराभ्यां कृञः" इत्यस्य कर्मकर्त्तरि प्रवृत्त्यभावप्रकारम्, "चिण्णमुलोर्दीर्घोऽन्यतरस्याम्" इत्यत्र दीर्घग्रहणस्य फलञ्चाभिधाय, घानिषीष्ट, आदयत्यन्नं वटुना, इत्यनयोर्विशेषकार्यं ब्रूत ।

अथवा—

'वोभूयिषयिषति', भिक्षुकः प्रभुमुपतिष्ठते, समार्त, शिशत्सति, दमयन्तीकमनीयतामदम्, एतानि प्रधानकार्यमात्रेण संसाध्य "तपस्तपः कर्मकस्यैव, इति सूत्रं नियमार्थं विध्यर्थं वेति निर्णयत ।

३—कर्मणेति किम् । करणाधिकरणाभ्यां तुल्यक्रिये माभूदिति, फक्किका व्याख्याय, गौः पयो दुग्धे, रज्यति रज्यते वा वस्त्रम्, अपि गिरिं शिरसा भिन्द्यात्, एषु कार्यविशेषमुक्त्वा, क्रियास-

मभिहारे हिस्वयोः कथं परस्मैपदात्मनेपदसंज्ञे इति विशदरूपेण वर्णनीयम् ।

४—जन्यम्, निकाय्यः, प्रक्रन्ता, पूर्वसरः, तनुच्छत्, प्रस्तोमः, अनाश्वान्, चोपनः, एतेषु ससूत्रं विशेषकार्याणि निर्दिश्य "न कादेः" इति सूत्रप्रत्याख्यानरीतिर्दर्शनीया ।

५—कम्बलादायो व्रजति, समजः, मृगया, निहवः, गेहानुप्रपादम्, इमानि संसाध्य क्त्वाणमुलौ कस्मिन्नर्थे भवत इति, पूर्वकालिकक्रियार्थकधातुभिन्नात् क्त्वाप्रत्ययविधायकानि यानि शास्त्राणि तानि च प्रदर्शयत ।

अथवा—

स्फुर्स्पन्दधातोर्घञि, परिपूर्वक व्येञः क्विप, कनसधातोः के इषेः शे च प्रत्यये रूपाणि ससूत्रं संलिख्य, मूलग्रन्थोपदंशम्, इत्यत्र ग्रन्थोक्तशङ्कासमाधाने स्वसंस्कृतेन सुस्पष्टं लेखनीये ।

## १—प्रश्नोत्तराणि ।

लोट—धातुः-धौर्त्ये, पूर्वभावे, स्वप्ने चार्थे वतते । तत्र 'दीप्तौ' इत्येके ।

चुरण—धातुः चौर्येऽर्थे च वर्तते ।

माणवकमनुक्रीडति—२१ पृष्ठे द्रष्टव्यम् ।

गजोऽपकिरति "किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम" इति वार्तिकेन "अपाच्चतुष्पाच्छकुनिष्वालेखने" इति सूत्रेण च हर्षादिष्वेवात्मनेपदसुटोश्च विधानात् "गजोऽपस्किरति" इत्यत्र च तदभावात्तङ्सुटौ न । यद्यपि—हर्षादिमात्रविवक्षायामिह तङ्प्राप्तस्तथापि सुडभावे नेष्यते इत्याहुरिति ।

आहध्वं मा रघूत्तमम्—"आङो यमहनः" इति सूत्रेण "अकर्मकात्स्वाङ्गकर्मकादेवात्मनेपदविधानात्—तदभावादेव 'परस्य शिर आहन्ति' इत्यत्र नात्मनेपदम् ।

ननु तर्हि "आजघ्ने विषमविलोचनस्य वक्षः" इति भारविप्रयोगस्य "आहध्वं मा रघूत्तमम्" इति भट्टिप्रयोगस्य च का गतिरिति तत्रोच्यते—'प्रमाद एवायमिति भागवृत्तिः । प्राप्येत्यध्याहारो वा । ननु 'प्राप्य' इत्यध्याहारे

'प्रासादात्प्रेक्षते' इत्यादिवत्पञ्चमीस्यात्तन्न । 'ल्यब्लोपे पञ्चमी तु ल्यबन्तं विनैव तदर्थावगतिर्यत्र तद्विषयम् । भेत्तुमित्यादितुमुन्नन्ताध्याहारो वास्तु । 'मा ज्ञासते विषमविलोचनस्य वक्षः' इत्यत्र परिहारान्तरमाह–समीपमेत्येति वेति दिक् ।

दर्शयते भवः—'णेरणौ यत्कर्म णौ चेत्स कर्त्ताऽनाध्याने' इति सूत्रस्य ण्यन्तादात्मनेपदं स्यादणौ या क्रिया सैव चेण्ण्यन्तेनोच्येते, अणौ यत्कर्मकारकं स चेण्णौ कर्त्ता स्यान्नत्वाध्याने, सूत्रार्थः । तत्र 'णिचश्चेत्येव सिद्धेऽकर्त्रभिप्रायार्थमिदम् । कर्त्रभिप्राये तु—"विभाषोपपदेन प्रतीयमाने" इति विकल्पे "अणावकर्मकाच्चित्तवत्कर्तृकात्" इति परस्मैपदे च परत्वात्प्राप्ते पूर्वविप्रतिषेधेनेदमेवेष्यते । तत्र कर्तृस्थभावकमुदाहरति—'दर्शयते भवः' इति अयम्भावः—'भवः पश्यति', भक्ताः प्रेरयन्तीत्यर्थे 'पश्यन्ति भवं भक्ताः' इति, चाक्षुषज्ञानविषयं कुर्वन्तीति तदर्थः । तत्र किं 'भक्ताः भवं पश्यन्ति' इति प्रेरणांशत्यागे स्वयमेव 'पश्यति भवः' इति, विषयो भवतीति तदर्थः । ततः 'भवः पश्यति, भक्ताः प्रेरयन्तीति हेतुमण्णिचि कृते 'दर्शयन्ति भवं भक्ताः' इति, पश्यन्तीति तदर्थः । पुनः 'किं भक्ताः भवं दर्शयन्तीति ण्यर्थस्याविवक्षायां स्वयमेव 'दर्शयते भवः' इति रूपं सिद्ध्यति । इह प्रथमतृतीययोरवस्थयोर्द्वितीयचतुर्थयोश्चेति तुल्योऽर्थः । तत्र तृतीयकक्षायां न तङ् । क्रियासाम्येऽप्यणौ कर्मकारकस्य णौ कर्तृत्वाभावात् । चतुर्थ्यां तु तङ् । द्वितीयामादाय क्रियासाम्यात् । प्रथमायां कर्मणो भवस्येह कर्तृत्वाच्चेति । एवमेव 'आरोहयते हस्ती' इत्यप्युदाहरणम् । तथाच—'हस्ती आरोहति', हस्तिपकाः प्रेरयन्ति' इत्यर्थे 'हस्तिपकाः हस्तिनमारोहन्ति' इति । न्यग्भावयन्तीति तदर्थः । तत्र किं हस्तिपकाः हस्तिनमारोहन्ति, इति प्रेरणांशत्यागे स्वयमेव 'आरोहति हस्ती' इति । न्यग्भवतीति तदर्थः । ततः 'आरोहति हस्ती', हस्तिपकाः प्रेरयन्तीति हेतुमण्णिचि कृते 'आरोहयन्ति हस्तिनं हस्तिपकाः' इति । आरोहन्तीति तदर्थः । ततः—पुनः किं हस्तिपकाः हस्तिनमारोहन्ति, इति ण्यर्थस्याविवक्षायाम् 'आरोहयते हस्ती' इति च सिद्ध्यति ।

यद्वा—'पश्यन्त्यारोहन्तीति प्रथमकक्षया प्राग्वत् । ततः कर्मण एव हेतुत्वारोपाण्णिच् । दर्शयति भवः । आरोहयति हस्ती । पश्यत आरोहतश्च प्रेरयतीत्यर्थः । ततो णिजभ्यां तत्प्रकृतिभ्यां च उपात्तयोर्द्वयोरपि प्रेषणयोस्त्यागे—

दर्शयते, आरोहयते, इत्युदाहरणम्। अर्थश्च प्राग्वत्। अस्मिन् पक्षे च द्वितीयकक्षायां न तङ्। समानक्रियात्वाभावाण्णिजर्थस्याधिक्यादिति शम्।

## २—प्रश्नोत्तराणि।

'अनुपराभ्यां कृञः' इति—'अनुपराभ्यां कृञः परस्मैपदं भवतीति' सूत्रार्थः। ननु "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इत्यनेनात्मनेपदस्य कर्तृगामिन्येव फले विधानादकर्तृगामिनि फले "शेषात्कर्त्तरि परस्मैपदम्" इत्यनेन परस्मैपदस्य सिद्धत्वात्किमर्थमिदमित्यत आह—'कर्तृगेऽपि फले गन्धनादौ च परस्मैपदार्थमिदं सूत्रम्। तदुदाहरणम्—'अनुकरोति' 'पराकरोति' इति च। तत्र 'कर्त्तरि' एव परस्मैपदमिति। भावकर्मणोर्माभूदिति। ननु 'कर्त्तरि' इत्यस्यानुवृत्तावपि 'अनुक्रियते शब्दः स्वयमेव' इत्यत्र कर्मकर्त्तरि परस्मैपदं दुर्वारमित्याशङ्क्य परिहरति—नचैवमपि कर्मकर्त्तरि प्रसङ्गस्स्यात्। कार्यातिदेशपक्षस्य मुख्यतया तत्र "कर्मवत्कर्मणा तुल्यक्रियः" इत्यात्मनेपदेन परेणास्य बाधात्। ननु शब्दशास्त्रे शब्दस्यैव प्राधान्यात् शास्त्रातिदेशपक्षे दोषस्तदवस्थमेवेति चेन्न। शास्त्रातिदेशपक्षे "कर्त्तरि कर्मव्यतिहारे" इत्यतः "शेषात्कर्त्तरिपरस्मैपदम्" इत्यतश्च कर्तृग्रहणद्वयमनुवर्त्य 'कर्त्रैव यः कर्ता न तु कर्मकर्ता तत्रेति व्याख्यानेनादोषादिति दिक्।

"चिण्णमुलोर्दीर्घोऽन्यतरस्याम्" इति सूत्रे दीर्घग्रहणस्य फलन्तु एतत्सूत्रव्याख्यावसरे १२ पृष्ठे द्रष्टव्यम्।

घानिषीष्ट—'हन्' इत्यस्माद्धातोराशीर्लिङि तिपि अनुबन्धलोपे "लिङः सीयुट्" इत्यनेन सीयुडागमे "सुट् तिथोः" इत्यनेन सुडागमे च कृते अनुबन्धलोपे षत्वे ष्टुत्वे च विहिते "स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च" इत्यनेन चिण्वद्भावे इडागमे च कृते चिण्वद्भावाद्वृद्धौ सत्य षत्वे "हो हन्तेर्ञ्णिन्नेषु" इत्यनेन हस्य कुत्वेन घकारे 'घानिषीष्ट' इति सिद्ध्यति। चिण्वत्त्वाभावपक्षे—"हनो वध लिङि" इत्यनेन वधादेशे वलादित्वादिडागमे "अतो लोपः" इत्यकारस्य लोपे 'वधिषीष्ट' इति च सिद्ध्यति। नन्वाशीर्लिङि 'घानिषीष्ट' इत्यत्र हन्+सीष्ट इति स्थिते परमपि चिण्त्वं बाधित्वा वधादेशः प्राप्नोति, आर्धधातुके विवक्षिते विहितत्वेन वधादेशस्यान्तरङ्गत्वादित्यत आह—आशीर्लिङि वधादेशस्यापवाद-

श्चिण्वद्भावः । ननु "घानिता" इत्यादौ अप्राप्तेऽपि वधादेशे आरम्भात्कथं वधादेशस्य चिण्वद्भावो अपवादः स्यादित्यत आह—'आर्धधातुके सीयुट्' इति विशेषविहितत्वात् । वधादेशस्तु न चिण्वदिटोऽपवादः । तस्य 'वध्यात्' इत्यत्र कर्त्तरि लिङि चरितार्थत्वादिति शम् ।

आदयत्यन्नं वटुना—ननु "निगरणचलनार्थेभ्यश्च" इत्यनेन एतदर्थकेभ्यो परस्मैपदविधानात् तस्य च "आदिखाद्योर्न" इति वार्तिकेन निषेधात् 'आदयत्यन्नं वटुना' इत्यत्रापि निगरणार्थकतया अदेः प्राप्तस्य परस्मैपदस्य प्रतिषेधादिह परस्मैपदं कथमिति चेदत्रोच्यते—"अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति न्यायेन "निगरणचलनार्थेभ्यश्च" इति सूत्रेण प्राप्तस्यैवायं निषेधः। "शेषात्कर्त्तरि परस्मैपदम्" इत्यनेनाकर्त्रभिप्राये परस्मैपदं स्यादेवेति ।

अथवा—

'बोभूयिषयिषति'—'भू'इत्यस्माद्धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इत्यनेन यङि अनुबन्धलोपे "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायां गुणे "अभ्यासे चर्च" इति जश्त्वे 'बोभूय' इति स्थिते तस्मात् "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इत्यनेन सनि इटि अतो लोपे षत्वे च विहिते 'बोभूयिषा' इति स्थिते तस्मात् हेतुमण्णिचि अतो लोपे 'बोभूयिषि' इति स्थिते तस्माच्च सनि इटि णिचो गुणायादेशयोः षत्वे 'बोभूयिषयिषा' इत्यस्य धातुसंज्ञायां लटि तिपि सार्वधातुकसंज्ञायां शपि पररूपे 'बोभूयिषयिषति' इति सिद्ध्यति ।

भिक्षुकः प्रभुमुपतिष्ठते—इत्यत्र "उपान्मन्त्रकरणे" इत्यनेन नित्ये आत्मनेपदे प्राप्ते "वा लिप्सायामिति वक्तव्यम्" इति वार्तिकेन विकल्पे आत्मनेपदे "भिक्षुकः प्रभुमुपतिष्ठते—उपतिष्ठति' वेति च सिद्ध्यति ।

समार्त्त–'माङ्योगे आडागमाभावात् "मा समृत' इत्युदाहरणं प्रदर्शितम् । साम्प्रतं माङ्योगाभावे आडागमे उदाहरति—तथाहि 'सम्' इत्युपसर्गपूर्वकात् भौवादिकस्य 'ऋ' इत्यस्माद्धातोर्लुङि आत्मनेपदे तप्रत्यये अडागमे प्राप्ते "आडजादीनाम्" इत्यनेनाडागमे, च्लौ, च्लेः सिचि च कृते इचावितौ 'सम्+आ+ऋ+स्+त' इति स्थिते "उश्च" इति कित्वाद्गुणनिषेधे "आटश्च" इति वृद्धिं बाधित्वा परत्वात् "ह्रस्वादङ्गात्" इति सिचो लोपे "आटश्च" इत्यनेन ऋकार-

स्य वृद्धौ रपरत्वे 'समार्त' इति सिद्ध्यति ।

नच 'सिज्लोपस्यासिद्धत्वात् "आटश्च" इति वृद्धौ कृतायां "ह्रस्वादङ्गात्" सिज्लोपस्याप्रवृत्त्या 'समार्ष्ट' इत्येवोचितमिति वाच्यम् । "सिज्लोप एकादेशे सिद्धो वाच्यः" इति वचनेन पूर्वं सिज्लोपे पश्चात् "आटश्च" इति वृद्धेः प्रवृत्तिसम्भवादिति शम् ।

शिशत्सति—ननु "शदेः शितः" "म्रियतेर्लुङ्लिङोश्च" इत्यात्मनेपद-विधानात् 'शिशत्सति' 'मुमूर्षति' इत्यत्रापि सन्नन्तादात्मनेपदं स्यादित्यत आह—"शदेः शितः" इत्यादि पूर्वोक्तसूत्रद्वये च "पूर्ववत्सनः" "नानोर्ज्ञः" इत्यस्माच्च 'सनो' नेति, चानुवर्त्य वाक्यभेदेन व्याख्यानात् 'शदेः म्रियतेश्च सन्नन्तानात्मनेपदमित्यर्थे 'शिशत्सति' 'मुमूर्षति' इत्यादौ च नात्मनेपदमिति दिक् ।

दमयन्ती कमनीयतामदम्—ननु "न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः" इत्यनेन ण्यतन्तेभ्यो एभ्योपरस्मैपदस्य निषेधात् 'वत्सान् पाययति पयः' 'दमयन्ती कमनीयतामदम्' 'भिक्षां वासयति' इत्यादयः प्रयोगाः कथमिति चेदत्रोच्यते—'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति न्यायेन "निगरणचलनार्थेभ्यश्च" "अणावकर्मकाच्चित्तवत्कर्तृकात्" इति सूत्रद्वयप्राप्तस्यैव परस्मैपदस्य "न पादम्याङि"ति पूर्वोक्तसूत्रेण निषेधः । अकर्त्रभिप्राये "शेषात्कर्त्तरि परस्मैपदम्" तु स्यादेवेति शम् ।

"तपस्तपः कर्मकस्यैव"—अत्र सूत्रे "कर्मवत्कर्मणा तुल्यक्रियः" इत्यनेन कर्मवदित्यनुवर्त्य—कर्त्ता कर्मवत्स्यादिति सूत्रार्थः । तस्मात् विध्यर्थमिदं सूत्रमिति ननु विध्यर्थत्वे एवकारो व्यर्थ इत्यत आह—एवस्तु व्यर्थ एवेति वृत्त्यनुसारिण इति । उदाहरति—'तप्यते तपस्तापसः' इति । अत्र तपिरर्जनार्थक इत्याह—'अर्जयतीति' तदर्थ इति दिक् ।

## ३—प्रश्नोत्तराणि ।

| | |
|---|---|
| कर्मणेति किम्— | ११० पृष्ठे द्रष्टव्यम् । |
| गौः पयो दुग्धे— | १०७ ,, ,, । |
| रज्यति रज्यते वा वस्त्रम्— | ११९ ,, ,, । |
| अपि गिरिं शिरसा भिन्द्यात्— | ७५ ,, ,, । |
| क्रियासमभिहारे हिस्वयोरिति— | ५१ ,, ,, । |

## ४—प्रश्नोत्तराणि ।

**जन्यम्**—५२ पृष्ठे द्रष्टव्यम् ।

**निकाय्यः**—निचीयते धान्यादिकमस्मिन्निति विग्रहे 'नि' इत्युपसर्गपूर्वकात् 'चि' इत्यस्माद्धातोः **"पाय्यसानाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु"** इति सूत्रेण निपातनात् अधिकरणे 'ण्यत्-आय्-धात्वादेः कुत्वे च विहिते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च **"निकाय्यः"** इति सिद्धयति ।

**प्रक्रन्ता**—प्रोपसर्गपूर्वकात् 'क्रम्' धातोः **"प्रोपाभ्यां समर्थाभ्याम्"** इत्यात्मनेपदे लुटि तप्रत्यये तासि डादेशे डित्वाट्टिलोपे च विहिते वलाद्यार्धधातुकत्वादिडागमे प्राप्ते **"क्रमेः कर्तर्यात्मनेपदविषयात्कृत इण्निषेधो वाच्यः"** इति तन्निषेधे मस्यानुस्वारे परसवर्णे **'प्रक्रन्ता'** इति सिद्धयति ।

**पूर्वसरः**—पूर्वः सरतीति विग्रहे **"पूर्वे कर्त्तरि"** इत्यनेन पूर्वे उपपदे सृधातोष्टप्रत्ययेऽनुबन्धलोपे गुणे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च विहिते **'पूर्वसरः'** इति सिद्धयति ।

**तनुच्छत्**—इत्यत्र तनुं छादयतीति विग्रहे **"क्विप् च"** इत्यनेन क्विप्प्रत्यये अनुबन्धलोपे **"ह्रस्वमन्त्रन्क्विषु च"** इत्यनेन ह्रस्वे तुकि च कृते **"छे च"** इत्यनेन छकारे परे तुगागमे अनुबन्धलोपे श्चुत्वे च विहिते प्रातिपदिकत्वात्सौ सोर्लोपे **'तनुच्छत्'** इति सिद्धयति ।

**प्रस्तीमः**—प्रपूर्वात् 'स्त्यै' इत्यस्माद्धातोः आत्वे कृते निष्ठाक्तप्रत्यये अनुबन्धलोपे **"स्त्यः प्रपूर्वस्य"** इति सम्प्रसारणे पूर्वरूपे **"हलः"** इति दीर्घे च विहिते **"प्रस्त्योऽन्यतरस्याम्"** इत्यनेन विकल्पेन निष्ठातकारस्य मकारादेशे प्रातिपदिकत्वात्सौ **'प्रस्तीमः'** इति मकारादेशाभावे **'प्रस्तीतः'** इति च सिद्धयति ।

**अनाश्वान्**—इत्यत्र **"उपेयिवाननाश्वाननूचानश्च"** इति सूत्रेण निपातनात् नञ्पूर्वादश्नोतेः क्वसुप्रत्यये इडभावे च कृते उगित्वान्नुमि प्रातिपदिकत्वात्सौ सोर्लोपे संयोगान्तलोपे च कृते **'अनाश्वान्'** इति सिद्धयति ।

**चोपनः**—इत्यत्र **"चलनशब्दार्थादकर्मकाद्युच्"** इत्यनेन युच्प्रत्ययेऽनुबन्धलोपे **"युवोरनाकौ"** इत्यनेनादेशे लघूपधगुणे च विहिते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च **'चोपनः'** इति सिद्धयति ।

**न क्वादेरिति**—**'गर्ज्यम्'** इत्यत्र **'चजोः कु घिण्ण्यतोः'** इत्यनेन

प्राप्तस्य कुत्वस्य "न क्वादेः" इत्यनेन निषेधात् तत्सिद्धति। तत्र वार्तिककारस्तु—'चजोः कु घिण्ण्यतोः' इति सूत्रे 'निष्ठायामनिट्' इति पूरयित्वा 'निष्ठायां यः अनिट् तद्धात्ववयवयोः चजोः कु स्यात् घिति ण्यति चेत्यर्थं विधाय पूर्वोक्तप्रयोगांश्च संसाध्यं "न क्वादेः" इत्यादि सूत्रत्रयं प्रत्याचख्यौ। तेन 'अर्जितर्जिप्रभृतीनां न कुत्वम्, निष्ठायां से त्वात्। ग्रुचुग्लुचुप्रभृतीनां तु क्वादित्वेऽपि कुत्वं स्यादेव। यतो—वार्तिकमते—"न क्वादेः" इति निषेधस्य प्रत्याख्याततत्वात्। सूत्रमते तु—उभयत्र यद्यपि तद्विपरीतं प्राप्तम्। तथापि 'यथोत्तरं मुनीनां प्रामाण्यम्' इति वचनात् वार्तिकं विपरीतफलमपि सम्मतत्वात् ग्राह्यमेवेति शम्।

## ५—प्रश्नोत्तराणि।

**कम्बलदायो व्रजति**—कम्बलं ददातीति विग्रहे ण्वुलि प्राप्ते तदपवादभूतेन "अण्कर्मणि च" इत्यनेन अण्प्रत्ययेऽनुबन्धलोपे युगागमे च कृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च 'कम्बलदायो व्रजति' इति सिद्ध्यति। ननु "कम्बलदायो व्रजति' इत्यत्र कर्मण्यणपवादं "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" इति ण्वुलं बाधित्वा कप्रत्ययः स्यादित्यत आह—परत्वादयं कादीन् बाधते इति दिक्।

**समजः**—'सम्' इत्युपसर्गपूर्वकात् 'अज्' इत्यस्माद्धातोः "समुदोरजः पशुषु" इत्यनेन अप्प्रत्ययेऽनुबन्धलोपे "अजेर्व्यघञपोः" इति सूत्रे 'अघञपोः' इत्युक्तेर्वीभावाभावेन प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च विहिते 'समजः' इति सिद्ध्यन्ति।

**मृगया**—६७ पृष्ठे द्रष्टव्यम्।

**निहवः**—'नि' इत्युपसर्गपूर्वकात् ह्वयतेः "ह्वः सम्प्रसारणञ्च" इत्यनेन अप्प्रत्यये सम्प्रसारणे वेरूपे च कृते गुणेऽवादेशे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च विहिते "निहवः" इति सिद्धयति।

**गेहानुप्रपादम्**—इत्यत्र "विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः" इत्यनेन णमुल्प्रत्ययेऽनुबन्धलोपे णित्वादादिवृद्धौ प्रातिपदिकत्वात्सोरमादेशे "गेहानुप्रपादम्" इति सिद्धयति।

**क्त्वाणमुलाविति**—"अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ भवत" इति। एवमेव—"तिर्यच्यपवर्गे" "स्वाङ्गे तस्प्रत्यये कृभ्वोः"

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



"नाधार्थप्रत्यये च्व्यर्थे" "तूष्णीमि भुवः" "अन्वच्यानुलोम्ये" इत्यादिष्वर्थेष्वपि क्त्वाणमुलौ भवत इति शम् ।

क्त्वाप्रत्ययविधायकानीति "अलं खल्वोः प्रतिषेधयोः प्राचांक्त्वा" "उदीचां माङो व्यतीहारे" "परावरयोगे च" इत्येतैः सूत्रैः पूर्वकालिकक्रियार्थकधातुभिन्नात् क्त्वाप्रत्ययो विधीयते ।

अथवा—

स्फारः—स्फुरधातोः "भावे" इत्यनेन घञि अनुबन्धलोपे ञित्वादादिवृद्धौ "स्फुरतिस्फुलत्योर्घञि" इत्यनेनात्वे प्रातिपदिकत्वात्सौ "स्फारः" इति सिद्ध्यति ।

स्पन्दः—'स्पन्द' धातोः "भावे" इत्यनेन घञि अनुबन्धलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च विहिते "स्पन्दः" इति सिद्ध्यति ।

परिवीय—'परि' इत्युपसर्गपूर्वकात् "व्येञ्" धातोः क्त्वाप्रत्यये "समासेनञ्पूर्वे-क्त्वो ल्यप्" इत्यनेन ल्यबादेशेऽनुबन्धलोपे "वचिस्वपियजादीनाङ्किति" इत्यनेन नित्य एव सम्प्रसारणे प्राप्ते "विभाषा परेः" इत्यनेन विकल्पेन सम्प्रसारणे पूर्वरूपे च कृते 'परि+वि+य' इति स्थिते तुकं बाधित्वा परत्वात् "हलः" इत्यनेन दीर्घे च विहिते प्रातिपदिकत्वात्सौ सोर्लोपे "परिवीय" इति सम्प्रसारणाभावे—'परिव्याय' इति च सिद्ध्यति । ननु 'स्वापकाल एव मुखव्यादानस्य हासकाल एव नेत्रनिमीलनस्य च सम्भवात् व्यादाननेत्रनिमीलनयोः स्वापहासपूर्वकालत्वाभावात् क्त्वाप्रत्ययस्य प्रवृत्तेरभावेन "कथं मुखं व्यादाय स्वपिति" इति 'नेत्र निमील्यहसति' इति च प्रयोग इति चेदत्रोच्यते—व्यादाननिमीलनोत्तरकालेऽपि स्वापहासयोरनुवृत्तेस्तदंशविवक्षया भविष्यतीति शम् ।

कनसः—'कनस' धातो कप्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'कनसः' इति सिद्ध्यति ।

इषा—इष-धातोः शप्रत्ययेऽनुबन्धलोपे टापि च कृते प्रातिपदिकत्वात्सौ सोर्लोपे 'इषा' इति सिद्ध्यति ।

मूलकेनोपदंशं भुङ्क्ते—८५ पृष्ठे द्रष्टव्यम् ।

---

१९३७

४ वर्षे १ पत्रम् ।

१—हु-पृ-निज-ऋधातुनां लटि, दीङो लुटि, अस्यतेर्लुङि च प्रथमपुरुषैकवचनरूपाणि ससूत्रं प्रदर्श्य, 'रराधतुः' इत्यत्रैत्वाभ्यासलोपाभावौ सप्रमाणमुपपादनीयौ ।

२—वृणोतेराशीर्लिङि, दम्भेर्ऋच्छेश्च लिटि प्रथमपुरुषैकवचनरूपाणि संसाध्य 'अतर्पीत्' इत्यत्र 'स्पृश—मृश' इत्यस्याप्रवृत्तिं समर्थयत ।

३—कुर्व्यात्, विच्छायति, अरुणः, आनक्, एतेषु असाधारणकार्यमुल्लिख्य षदो भौवादिकत्वेऽपि तुदादिपाठफलम्, 'संस्क्रियात्' इत्यत्र गुणेटोरभावप्रकारञ्च वर्णयत ।

४—व्यष्टभत्, श्वेतयते, एतयोः कार्यविशेषमभिधाय, णिच्यच आदेशो न स्यात्, इति फक्किका सिद्धान्तप्रदर्शनमुखेन स्वशब्दैर्व्याख्येया ।

५—सपत्नीव द्यौरिव चाचरति, कलिं गृह्णाति, श्वानमाचष्टे, अमुमुयञ्चमाख्यत्, इति विग्रहे तिपि रूपाणि प्रतिपाद्य 'स्वमनायत' 'ओढायित्वा' इत्यनयोर्ग्रन्थोक्तपूर्वोत्तरपक्षौ सुस्पष्टं स्वगिरा प्रदर्शनीयौ ।

अथवा—'उचिच्छिषति', इत्यत्र मूलोक्तशङ्कासमाधाने, यङ्लुगन्तादात्मनेपदाभावञ्च प्रतिपाद्य, धनवन्तम्, धातरञ्चाचष्टे, इति विग्रहे णिचि तिपि रूपे लेखनीये ।

## १—प्रश्नोत्तराणि ।

'हु' धातोर्लटि तिपि 'जुहोति' इति रूपम् । तथाहि—हुधातोर्लटि प्रथमपुरुषैकवचने तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि "जुहोत्यादिभ्यः श्लुः" इति श्लौ "श्लौ" इति द्वित्वेऽभ्याससंज्ञायां "कुहोश्चुः" इति चुत्वे जश्त्वे च विहिते गुणे 'जुहोति' इति सिद्ध्यति ।

'पृ' धातोर्लटि तिपि 'पिपर्ति' इति रूपम् । तथाहि—'पृ' इत्यस्माद्धा-

तोर्लटि प्रथमपुरुषैकवचने तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते "जुहोत्यादिभ्यः श्लुः" इति श्लौ 'श्लौ' इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् "अर्तिपिपर्त्योश्च" इत्यभ्यासस्येकारान्तादेशे रपरत्वे हलादिःशेषे च कृते उत्तरखण्डे च ऋकारस्य "उदोष्ठ्यपूर्वस्य" इत्यनेन उत्वे प्राप्ते किन्तु 'गुणवृद्धी परत्वादिमं बाधेते' इति वचनात् ऋकारस्य गुणे रपरत्वे "पिपर्ति" इति सिद्ध्यति ।

'निज्' धातोर्लटि तिपि 'नेनेक्ति' इति रूपम् । तथाच—'निज्' इत्यस्माद्धातोर्लटि तिपि सार्वधातुकसंज्ञायां शपि "जुहोत्यादिभ्यः श्लुः" इति श्लौ "श्लौ" इत्यनेन द्वित्वेऽभ्याससंज्ञायां हलादिः शेषे च विहिते उत्तरखण्डस्य "पुगन्तलघूपधस्य च" इत्यनेन गुणे पूर्वखण्डस्य च "णिजां त्रयाणां गुणः श्लौ" इत्यनेन गुणे "चोः कुः" इत्यनेन कुत्वे चर्त्वे च कृते "नेनेक्ति" इति रूपं सिद्ध्यति ।

'ॠ' धातोर्लटि तिपि 'इयर्ति' इति रूपम् ।

तथाहि—'ॠ' इत्यस्माद्धातोर्लटि तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते "जुहोत्यादिभ्यः श्लुः" इति श्लौ "श्लौ" इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् "उरत्" इत्यत्वं बाधित्वा "अर्तिपिपर्त्योश्च" इत्यभ्यासऋकारस्य इत्वे रपरत्वे हलादिः शेषे च कृते उत्तरखण्डस्य ऋकारस्य गुणे रपरत्वे इ × अर् + ति इति स्थिते "अभ्यासस्यासवर्णे" इतीयङादेशे "इयर्ति" इति रूपं सिद्ध्यति ।

दीङो लुटि प्रथमपुरुषैकवचने तिपि "दाता" इति रूपम् । तथाहि—ङकारेत्संज्ञक'दी' इत्यस्माद्धातोर्लुटि तिपि तासि तिपो डादेशे च विहिते डित्वाट्टिलोपे "मीनातिमिनोतिदीङां ल्यपि च" इत्यनेन आत्वे 'दाता' इति सिद्ध्यति ।

'असु' धातोर्लुङि प्रथमपुरुषैकवचने तिपि 'आस्थत्' इति रूपम् तथा च उकारेत्संज्ञक 'असु' इत्यस्माद्धातोर्लुङि तिपि अनुबन्धलोपे "च्लि लुङि" इति च्लौ "अस्यतिवक्तिख्यातिभ्योऽङ्" इत्यनेन च्लेरङादेशे "अस्यतेस्थुक्" इत्यनेन थुगागमे उकावितो "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे प्राप्ते "आडजादीनाम्" इत्याडागमे "आटश्च" इति वृद्धौ 'आस्थत्' इति रूपं सिद्ध्यति ।

नन्वस्य "पुषादिद्युताद्युलृदितः परस्मैपदेषु" इति सूत्रे पुषादित्वादेवाङि सिद्धे "अस्यतिवक्तिख्यातिभ्योऽङ्" इति वचनं तदर्थम् । तद्

तु "उपसर्गादस्यत्यूह्योः" इति वक्ष्यते । तेन 'पर्यास्थत' इत्यत्रात्मनेपदं सिद्ध्यति ।

रराधतुः—संसिद्ध्यर्थकात् 'राध' इत्यस्माद्धातोर्लिटि तसि अतुसि च कृते "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्याससंज्ञायां ह्रस्वे हलादिःशेषे च विहिते "राधो हिंसायाम्" इत्यनेन हिंसायामेव एत्वाभ्यासलोपविधानादिह तदर्थत्वाभावेन तदभावे सस्य रुत्वे विसर्गे च 'रराधतुः' इति सिद्ध्यति 'अपरेधतुः' इत्यत्र चोपसर्गवशाद्धिंसायां वृत्तित्वादेत्वाभ्यासलोपे तत्सिद्ध्यति ।

## २—प्रश्नोत्तराणि ।

वृणोतेराशीर्लिङि 'वरिषीष्ट' इति रूपम्, २६ पृष्ठे द्रष्टव्यम् ।

उकारेत्संज्ञक 'दम्भ' इत्यस्माद्धातोर्लिटि प्रथमपुरुषैकवचने तिपि 'ददम्भ' इति रूपम् । तथाहि—'दम्भ' इत्यस्माद्धातोर्लिटि तिपि अनुबन्धलोपे तिपो णलि च कृते "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्याससंज्ञायां हलादिः शेषे च कृते 'ददम्भ' इति सिद्ध्यति ।

'ऋच्छ' धातोर्लिटि प्रथमपुरुषैकवचने तिपि 'आनर्च्छ' इति रूपम् । साधनप्रकारश्च ६९ पृष्ठे द्रष्टव्यम् ।

अतर्पीत्—६० पृष्ठे द्रष्टव्यम् ।

## ३—प्रश्नोत्तराणि—

कुर्य्यात्—'कृ' इत्यस्माद्धातोर्विधिलिङि तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते "तनादिकृञ्भ्य उः" इत्युप्रत्यये "यासुट्परस्मैपदेषूदात्तो ङिच्च" इत्यनेन यासुडागमेऽनुबन्धलोपे उप्रत्ययमाश्रित्य धातोर्गुणे रपरत्वे "अत उत्सार्वधातुके" इत्युत्वे 'कुरु+या+त्' इति स्थिते "ये च" इति सूत्रेण उप्रत्ययस्य लोपे च विहिते "अचो रहाभ्यां द्वे" इति विकल्पेन द्वित्वे 'कुर्य्यात' इति । द्वित्वाभावे—'कुर्यात्' इति च सिद्ध्यति ।

विच्छायति—गत्यर्थकात् 'विच्छ' इत्यस्माद्धातोः "गुपूधूपविच्छिपणिपनिभ्य आयः" इत्यनेन आयप्रत्यये "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लटि तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते "तुदादिभ्यः शः" इत्यनेन शप्रत्ययेऽनुबन्धलोपे 'विच्छायति' इति सिद्ध्यति ।

**अरुणः**—इरेत्संज्ञक 'रुध्' इत्यस्माद्धातोर्लङ्लकारे सिपि अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे सार्वधातुकसंज्ञायां शपि प्राप्ते "रुधादिभ्यः श्नम्" इत्यनेन श्नमि अनुबन्धलोपे 'अ + रुन् + ध् + स्' इति जाते "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इत्यनेन सलोपे धस्य जश्त्वेन दकारे "दश्च" इति विकल्पेन रुत्वे विसर्गे च कृते नस्य णत्वे 'अरुणः' इति रुत्वाभावपक्षे धकारस्य जश्त्वे चर्त्वे च कृते 'अरुणत्' इति सिद्ध्यति ।

**आनक्**—ऊकारेत्संज्ञक 'अञ्जू' इत्यस्माद्धातोर्लङि तिपि अनुबन्धलोपे अडागमे प्राप्ते "आडजादीनाम्" इत्यनेनाडागमे "आटश्च" इत्यनेन वृद्धौ "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इत्यनेन तलोपे जस्य कुत्वेन गकारे चर्त्वे च विहिते आटः पित्वात् "अल्लोपोऽनः" इत्यल्लोपाभावे 'आनक्' इति सिद्ध्यति ।

'षद्' इत्यस्माद्धातोः तुदादिपाठफलमिति—'षद्लृ' इति धातोर्भ्वादौ पठितादेव 'सीदति' इत्यादिसिद्धेः, तुदादावस्य पाठो व्यर्थ इत्यत आह—'सीदन्ति' इति शविकरणात् शत्रन्तात् ङीपि "आच्छीनद्योर्नुम्" इति नुम्विकल्पार्थं इह पाठ इति तदभिप्रायः । भ्वादावेवपाठे तु "शप्श्यनोर्नित्यम्" इति नित्यो नुम् स्यादिति भावः । न च तर्हि भ्वाद्यन्तर्गणे ज्वलादावस्य पाठो व्यर्थ इत्यत आह—ज्वलादौ पाठस्तु "ज्वलितिकसन्तेभ्यो णः" इति कर्त्तरि णप्रत्ययार्थं इति। तदुदाहृत्य दर्शयति—"सादः" इति । उभयत्र पाठस्य फलान्तरमाह स्वरार्थं च्चेति । तदेव विशदयति—"अनुदात्तौ सुप्पितौ" इति पित्स्वरेण शबनुदात्तः । "प्रत्ययः" "आद्युदात्तश्च" इत्यनेन शस्तूदात्त इति शम् ।

**संस्क्रियात्**—इत्यत्र गुणेटोरभावप्रकारश्च–२७ पृष्ठे द्रष्टव्यम् ।

## ४—प्रश्नोत्तराणि ।

**व्यष्टभत्**—उकारेत्संज्ञक 'वि' इत्युपसर्गपूर्वकात् 'स्तन्भ्' इत्यस्माद्धातोर्लङि तिपि अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे यणि "प्राक्सितादड्व्यवायेऽपि" इत्यनेन षत्वे ष्टुत्वे च विहिते "अनिदितां हल उपधायाः क्ङिति" इत्यनेन नलोपे 'व्यष्टभत्' इति सिद्ध्यति ।

**श्वेतयते**—श्वेताश्वमाचष्टे इति विग्रहे "श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च" इत्यनेन अश्व शब्दस्य लोपे धात्वर्थे 'णिङि'

च विहिते अनुबन्धलोपे धातुसंज्ञायां ङित्वादात्मनेपदे लटि तप्रत्यये गुणे अयादेशे टेरेत्वे च कृते 'श्वेतयते' इति सिद्धयति ।

'णिच्यच आदेशो न स्यादिति—१६ पृष्ठे द्रष्टव्यम् ।

## ८—प्रश्नोत्तराणि ।

'सपत्नीवाचरति' इति विग्रहे—'सपत्नायते' 'सपतीयते' 'सपत्नीयते' इति त्रीणि रूपाणि भवन्ति । साधनप्रकाश्च ९६ पृष्ठे द्रष्टव्यम् ।

'द्यौरिवाचरतीति विग्रहे—'देवति' इति माधवः । अत्र ऊठि 'द्यवति' इत्युचितमिति ।

'कलिं गृह्णाति' इति विग्रहे 'कलयति' इति रूपम् ।

"श्वानमाचष्टे" इति विग्रहे 'शावयति' इति रूपम् ।

"अमुमुयञ्चमाख्यत" इति विग्रहे "आमुमुमुआयत्" इति रूपम् ।

स्मनायत—९६ पृष्ठे द्रष्टव्यम् ।

ओढायित्वा—'आ उढः ओढः' स इवाचर्य इति विग्रहे 'ओढाय' इति क्यङन्तात् क्त्वाप्रत्ययेऽनुबन्धलोपे अतो लोपे 'ओढायित्वा' इत्येवेष्यते । अत्र क्यङि चिकीर्षिते उक्तरीत्या पृथक्करणे पृथक्कृतस्य आङः "कुगतिप्रादयः" इति क्त्वाप्रत्ययान्तेन समासे सति "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति ल्यप् स्यादित्यत आह—ज्ञापकं च सजातीयविषयमिति । तदेवोपपादयति—तेन यत्रोपसर्गस्वरूपं सकलं श्रूयते नत्वादेशेनापहृतं तत्रैव पृथक्कृतिरिति । ततः किमित्यत आह—एवञ्च 'ओढायित्वा' इत्येवरूपं समीचीनमिति ।

उचिच्छिषति—उच्छितुमिच्छतीति विग्रहे ईकारेत्संज्ञक 'उछ्' इत्यस्माद्धातोः "छे च" इत्यनेन तुगागमे उकावितौ तकारस्य श्चुत्वे च विहिते निष्पन्नात् 'उच्छ्' इत्यस्मात् "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इति सनि "आर्द्धधातुकस्येड् वलादेः" इतीडागमे अनुबन्धलोपे 'उच्छ्+इस्' इति स्थिते श्चुत्वस्य "पूर्वत्राऽसिद्धम्" इत्यनेनासिद्धत्वात् तकारसहितस्य द्वित्वे अभ्यासे तकारः श्रूयेत इत्यत आह—"पूर्वत्रासिद्धीयमद्वित्वे' इति निषेधात् चछाभ्यां सहितस्येटो 'च्छिस्' इत्यस्य द्वित्वे ऽभ्याससंज्ञायां "हलादिःशेषः" इत्यनेनाभ्यासे छकारसकारयोर्निवृत्तौ 'उचिच्छिषति' इति सिद्धयति । ननु 'च्छि ्' इत्यस्य द्वित्वे हलादिःशेषात्पूर्वखण्डे छकारसकारयोर्निवृत्तौ "निमित्ता-

पायेनैमित्तिकस्याप्यपायः" इति न्यायेन तुकोऽपि निवृत्तेस्तदादेशचकारस्य कथमभ्यासे श्रवणमित्यत आह—"छ्वोः शूडनुनासिके च" इति सतुक्ग्रहणात् "आख्यानात्कृतस्तदाचष्टे कृल्लुकि प्रकृतिप्रत्ययापत्तिः प्रकृतिवच्च कारकम्" इति प्रकृतिप्रत्ययापत्तिवचनाद्वा पूर्वोक्तपरिभाषाया अनित्यत्वज्ञापनाद्वेति शम् ।

यङ्लुगन्तादात्मनेपदाभावश्चेति—ननु 'बोभवीति' इत्यादौ यङ्लुकि प्रत्ययलक्षणेन यङन्तत्वाद् द्वित्वेऽभ्यासकार्ये च विहिते धातुत्वाल्लडादीनामुत्पत्तौ यङो ङित्वात्तदन्तादात्मनेपदं स्यादित्यत आह—"शेषात्कर्त्तरि परस्मैपदम्" इत्यनेन परस्मैपदमिति । "अनुदात्तङित आत्मनेपदम्" इति तु न भवति । ङित्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन प्रत्ययलक्षणाप्रवृत्तेः । यत्र हि प्रत्ययस्यासाधारणं रूपमाश्रीयते तत्रैव तत् । अत एव 'सुदृषत्प्रासादः' इत्यत्र "अत्वसन्तस्य चाधातोः" इत्यनेन दीर्घो न । येऽपि स्पर्धशीङादयोऽनुदात्तङितस्तेभ्योऽपि न । "अनुदात्तङितआत्मनेपदम्" इत्यनुबन्धनिर्देशात् । तत्र च—

"श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणञ्चैव पञ्चैतानि न यङ्लुकि" ॥

इति निषेधात् ।

अत एव—'श्यन्नादयो न' । 'गणेन निर्देशात्' । किं तु शबेव । 'चर्करीतं च' इत्यादौ पाठाच्छपो लुगिति शम् ।

'धनवन्तमाचष्टे' इति विग्रहे णिचि इष्टे यथा प्रातिपदिकस्येत्यादिना मतुपो लुकि धातुसंज्ञायां लटि तिपि "धनयति" इति रूपं भविष्यतीति ।

'धातारमाचष्टे' इति विग्रहे णिचि टिलोपे धातुसंज्ञायां लटि तिपि 'धातयति' इति रूपं भविष्यतीति शम् ।

---

१९३७

४ वर्षे २ पत्रम् ।

१—मेधायति, प्रापयियिषति, अनुक्रीडते, उत्तपत्ते, संविद्रते गाथाः नीते, आभक्षिपति, एतेषां विशेषकार्य्यप्रदर्शनपूर्वकं साधुत्वमभिधाय कण्ड्वादेर्धातुत्वप्रातिपदिकत्वयोः फलप्रमाणे निरूपणीये ।

२—अभाजि, मासमास्यते देवदत्तेन, पच्यते तण्डुलः, सृज्यते स्रजं भक्तः, ननु करोमि भोः, पुरा भुङ्क्ते, एतानि प्रधानकार्य्यप्रदर्शकसार्थतत्तच्छास्त्रनिर्देशपुरस्सरं साधयित्वा, कर्म्मकर्त्तरि कृत्यक्तखलर्थानामभावे प्रमाणं प्रदर्श्यताम् ।

३—एवं स्म अध्यापय, वसन् ददर्श, वास्तव्यः, शध्यम्, वह्यम्, प्रतिगृह्यम्, समवसर्ग्या, लाप्यम्, एतानि विशेषशास्त्रोल्लेखपुरस्सरं संसाध्य 'वोताप्योः' इति सूत्रसत्त्वाऽसत्त्वयोः फलदोषौ साधु निरुपयत ।

अथवा—

पापचकः, मधुसूदनः, बहुक्षमा, गोसङ्ख्यः, भास्करः, द्वातहरिः, वटिन्धमः, कुमारघाती, एतानि सविग्रहं विशेषसूत्रोपन्यासमुखेन संस्कृत्य 'ई च खनः' इति सूत्रस्थदीर्घेकारफलस्ति नवेति सशङ्कासमाधि प्रतिपादयत ।

४—सुगः, शत्रुन्तपः, ब्रह्मवादी, राजघः, पारदृश्वा, वृकणः, पूर्त्तः, रोचिष्णुः, वेशः, भावः, एतेऽर्थप्रदर्शनपुरस्सरं साध्याः ।

५—उद्ग्राहः, उच्छ्रायः, उपहवः, गीर्णिः, शायिका, विमार्गः, पीत्वा खलु, चूर्णपेषम् । एषु प्रधानकार्य्यं प्रदर्श्य तत्तत्सूत्रार्थो लेख्यः ।

## १—प्रश्नोत्तराणि ।

आशुग्रहणार्थक 'मेधा' इत्यस्माद्धातोः "कण्ड्वादिभ्यो यक्" इत्यनेन यक्प्रत्ययेऽनुबन्धलोपे धातुसंज्ञायां लटि परस्मैपदे तिपि अकारस्येत्संज्ञायां लोपे च 'मेधायति' इति सिद्धयति ।

प्रापयियिषति—१२८ पृष्ठे द्रष्टव्यम् ।

अनुक्रीडते—इत्यत्र "क्रीडोऽनुसम्परिभ्यश्च" इत्यनेनात्मनेपदे "अनुक्रीडते" इति सिद्धयति ।

उत्तपते—इत्यत्र "उद्विभ्यां तपः" इत्यनेनात्मनेपदे 'उत्तपते' इति सिद्धयति ।

संविद्रते—इत्यत्र "विदिप्रच्छिस्वरतीनामुपसङ्ख्यानम्" इति वार्ति-

केनात्मनेपदे लट्लकारे झप्रत्यये "आत्मनेपदेष्वनतः" इत्यनेन झस्यादादेशे टेरेत्वे "वेत्तेर्विभाषा" इत्यनेन विकल्पेन रुडागमेऽनुबन्धलोपे "संविद्रते" इति सिद्ध्यति ।

गाञ्जा नीते—इत्यत्र "अनुपसर्गाज्ज्ञः" इत्यनेनात्मनेपदे 'गाञ्जानीते' इति सिद्ध्यति ।

अभिक्षिपति—इत्यत्र "अभिप्रतिभ्यः क्षिपः" इत्यनेन परस्मैपदे "अभिक्षिपति" इति सिद्ध्यति ।

कण्ड्वादीनां धातुत्वं प्रातिपदिकत्वञ्चेति—८४ पृष्ठे द्रष्टव्यम् ।

## २—प्रश्नोत्तराणि ।

अभाजि—'भञ्ज' इत्यस्माद्धातोर्णिचि अनुबन्धलोपे धातुसंज्ञायां लुङि आत्मनेपदे तप्रत्यये "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमेऽनुबन्धलोपे "च्लि लुङि" इति च्लौ च्लेश्चिणि कृतेऽनुबन्धलोपे "भञ्जेश्च चिणि" इत्यनेनोपधालोपे णित्वादुपधावृद्धौ "चिणो लुक्" इत्यनेन तशब्दस्य लोपे च कृते । "अभाजि" इति सिद्ध्यति । नलोपाऽभावे वृद्ध्यभावात् 'अभञ्जि' इति च सिद्ध्यति ।

मासमास्यते देवदत्तेन—ननु "अकर्मकाणां ण्यन्तानां प्रयोज्यकर्मण्येव लादयः" इति व्यवस्था व्यर्था । तत्र प्रयोज्यं विना अन्यस्य कर्मणोऽभावादित्याशङ्क्य "अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्" इति वार्तिकेन अकर्मकधातूनामपि देशकालादि कर्मत्वेन ण्यन्तानां तेषां द्विकर्मतया प्रयोज्यकर्मण्येव तत्र लादय इति व्यवस्था प्रयोजनवतीत्यभिप्रेत्य 'मासमास्यते माणवकः' इति ण्यन्ते प्रयोज्यकर्मणि माणवके एव लः, नतु मासे कर्मणीति । एवं तर्हि अण्यन्तेष्वकर्मकेषु 'मासमास्यते देवदत्तेन' इति भावे लकारो न स्यात्, सकर्मकेभ्यः कर्मणि कर्तरि च ल इति नियमात् । मास मास्यते देवदत्तेन' इत्येव कर्मणि मासे लकारः स्यादित्याशङ्क्य आह—अकर्मकाणां निजेच्छयेति । अयम्भावः ये अकर्मकाः "कर्तुरीप्सिततमं कर्म" "तथायुक्तं चानीप्सितम्" इति सूत्रसिद्धकर्मरहिताः 'आस उपवेशने' वृतु वर्तने' इत्येवमादयस्तेषाम् 'अकर्मकधातुभियोगे' इति वार्तिकसिद्धकर्मकाणां कर्मणि भावे च लकार इष्यते इत्यर्थः । तदाह—

'मासो मासं वा आस्यते देवदत्तेन' इति। अत्र मासस्य कर्मत्वपक्षे कर्मलकारः। मासस्याभिहितत्वात्प्रथमा। मासस्य कर्मत्वाभावपक्षे तु—भावे लकारः। मास इति सप्तमीति। पच्यते तण्डुलः—इत्यत्र 'देवदत्तः तण्डुलं पचति' इति किं देवदत्तः तण्डुलं पचति' स्वयमेव पच्यते तण्डुल इति कर्मकर्तृविवक्षायां "कर्मवत्कर्मणा तुल्यक्रियः" इत्यनेन कर्मवद्भावे कार्यातिदेशेन यक् आत्मनेपदादिकार्ये—कर्तुरभिहितत्वाच्च प्रथमा विधानेन "पच्यते तण्डुलः" इति सिद्ध्यति।

सृज्यते स्रजं भक्तः—इत्यत्र 'सृजेः श्रद्धोपपन्ने कर्तर्येवेति वाच्यम्' इति वार्तिकेन मुख्यकर्त्तरि लकारे कर्मवद्भावादात्मनेपदं कर्मवत्वे सति यकि प्राप्ते तदपवादे श्यनि 'सृज्यते स्रजं भक्तः' इति सिद्ध्यति। धातूनामनेकार्थत्वाच्च 'श्रद्धया निष्पादयति' इति तदर्थ इति शम्।

ननु करोमि भोः—इत्यत्र "अकार्षीः किमिति प्रश्ने "ननु करोमि भोः" इत्युत्तरवाक्ये पृष्टप्रतिवचने ननुशब्दयोगे भूते लट् स्यादित्यर्थकेन 'ननौ पृष्टप्रतिवचने' इति सूत्रेण लट्लकारे 'ननु करोमि भोः' इति सिद्ध्यति।

पुरा भुङ्क्ते—इत्यत्र निपातार्थक यावत्पुराशब्दयोर्प्रयुज्यमानयोर्लट् स्यादित्यर्थकेन "यावत्पुरानिपातयोर्लट्" इत्यनेन लट्लकारे 'पुरा भुङ्क्ते' इति सिद्ध्यति।

'कर्मकर्त्तरि कृत्यक्तखलर्थानामभाव' इति—"कर्मवत्कर्मणा तुल्यक्रियः" इत्यनेन कर्मवत्वातिदेशबोधनात् 'पच्यते ओदनेन' 'भिद्यते काष्ठेन' इत्यादौ च द्वितीयावारणाय लकार वाच्य एव हि कर्त्ता कर्मवद्भवतीत्यर्थो आवश्यकः। तत्र प्रमाणन्तु—"व्यत्ययो बहुलम्" 'लिङ्याशिष्यङ्' इति संहिता पाठे लकारात्पूर्वं लकारान्तरं "हलो यमां यमि लोपः" इत्यनेन लुप्तं प्रश्लिष्यते। ततश्च—'ल्लल्' इति द्विलकारात् सूत्रात् ल इति षष्ठ्यन्तं "कर्मवत्कर्मणा तुल्यक्रियः" इत्यत्रानुवर्तते। तथा च लः कर्त्ता कर्मवदिति लभ्यते। वाच्यत्वं षष्ठ्यर्थः। तथाच—लकारवाच्यः कर्त्ता कर्मवदिति सूत्रार्थः पर्यवस्यति। नन्वस्त्वेवम्—प्रकृते किमायातमित्यत आह—भावे प्रत्यये च कर्तुर्लकारेणानुपस्थितेः। अत एव लकारवाच्यस्यैव कर्मकर्तुः कर्मवत्त्वविधानादेव—'कृत्यक्तखलर्थाः प्रत्ययाः कर्मणि विहिताः कर्मकर्त्तरि न भवन्ति। तस्य लकारवाच्यत्वाभावेन कर्मवत्त्वस्य तत्राप्रवृत्तेरिति शम्।

# ३—प्रश्नोत्तराणि ।

'त्वं स्म अध्यापय'-इत्यत्र "अधीष्टे च" इत्यनेन लोट्लकारे 'त्वं स्म अध्यापय' इति सिद्धयति ।

'वसन्ददर्श'-इत्यत्र "वर्त्तमानसामीप्ये वर्तमानवद्वा"इत्यादिसूत्रे यत्र काले ये प्रत्यया उक्तास्ते धात्वर्थयोः सम्बन्धे गम्ये ततोऽन्यस्मिन्नपि काले स्युरित्यर्थकेन "धातुसम्बन्धे प्रत्ययाः" इति सूत्रेण लडादेशः शतृप्रत्ययोः भूतकालेऽपि सिद्धं भवतीति । ननु 'वसन् ददर्श' इत्यत्र भूते लडिव वर्त्तमाने लिडित्यपि स्यादित्यत आह—तिङन्तवाच्यक्रियायाः प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्यया इति । भूते लडिति विधानात् 'उषित्वा ददर्श' इति तदर्थः । तदाह—अतीतवासकर्तृकं दर्शनमर्थ इति दिक् ।

वास्तव्यः—८८ पृष्ठे द्रष्टव्यम् ।

शप्यम्—इत्यत्र "ऋहलोर्ण्यत्" इत्यनेन ण्यति प्राप्ते तदपवादभूतेन "पोरदुपधात्" इत्यनेन यत्प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे 'शप्यम्' इति सिद्धयति ।

वह्यम्—इत्यत्र वहन्त्यनेनेति विग्रहे "वह्यं करणम्" इति सूत्रेण निपातनात् करणे यत्प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे 'वह्यम्' इति सिद्धयति ।

प्रतिगृह्यम्—इत्यत्र "छन्दसीति वक्तव्यम्" इति वार्तिकसहकारेण "प्रत्यपिभ्यां ग्रहेः" इत्यनेन क्यप्प्रत्ययेऽनुबन्धलोपे सम्प्रसारणे च कृते प्रातिपदिकत्वात्सौ सोरमादेशे 'प्रतिगृह्यम्' इति सिद्धयति ।

समवसर्ग्या—इत्यत्र समवपूर्वात्सृजेः "समवपूर्वाच्च" इति वार्तिकेन ण्यत्प्रत्ययेऽनुबन्धलोपे कुत्वे टापि च विहिते प्रातिपदिकत्वात्सौ सोर्लोपे "समवसर्ग्या" इति सिद्धयति ।

लाप्यम्—इत्यत्र "पोरदुपधात्" इति प्राप्तस्य ण्यदपवादस्य यतोऽपवादभूतेन "ण्यत्प्रकरणे लपिदभिभ्यां चेति वक्तव्यम्" इति वार्तिकेन ण्यत्प्रत्ययेऽनुबन्धलोपे णित्वादुपधावृद्धौ प्रातिपदिकत्वात्सौ सोरमादेशे 'लाप्यम्' इति सिद्धयति ।

"वोताप्योः" इति–'अयमप्यधिकारः' वा आ उताप्योरिति छेदः। अत्र सूत्रे–भूते इति लिङ्निमित्ते लृङिति चानुवर्तते। तदाह—"उताप्योः समर्थयोर्लिङ्" इत्यतः प्राग्भूते लिङ्निमित्ते लृङ् वेत्यधिक्रियते। नन्वनेन "उताप्योः समर्थयोर्लिङ्" इत्यत प्राक्भूते लिङ्निमित्ते लृङ् वेत्यधिकाराक्रान्तत्वात् भूते चेति पूर्वमधिकारसूत्रं निर्विषयमित्यत आह—पूर्वसूत्रं तु "उताप्योः समर्थयोर्लिङ्" इत्यादौ प्रवर्त्तते इति विवेक इति शम्।

अथवा—

पापचकः—'पच्' इत्यस्माद्धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति यङि अनुबन्धलोपे द्वित्वादिकार्ये 'पापच्य' इत्यस्मात् "ण्वुल्तृचौ" इत्यनेन ण्वुलि अनुबन्धलोपे वोरकादेशे "यस्य हलः" इति यलोपे अतो लोपे च कृते 'पापच् अक्' इति स्थिते उपधावृद्धिमाशङ्क्य आह—अल्लोपस्य स्थानिवद्भावाद् वृद्ध्यभावेन "पापचकः" इति सिद्ध्यति।

मधुसूदनः—७६ पृष्ठे द्रष्टव्यम्।

गोसङ्ख्यः—इत्यत्र गां संचष्ट इति विग्रहे "समि ख्यः" इति सूत्रेण सम्पूर्वात् चक्षिङः ख्याञादेशेऽनुबन्धलोपे आकारलोपे च विहिते अनुस्वारपरसवर्णौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च "गोसङ्ख्यः" इति सिद्ध्यति।

भास्करः—भासः करोतीति विग्रहे "दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु" इत्यनेन कृञष्टप्रत्ययेऽनुबन्धलोपे कस्कादित्वाद्विसर्गस्य सत्वे गुणे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च "भास्करः" इति सिद्ध्यति।

दृतिहरिः—दृतिं हरतीति विग्रहे "हरतेर्दृतिनाथयोः पशौ" इत्यनेन हृधातोरिन्प्रत्ययेऽनुबन्धलोपे गुणे च विहिते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च "दृतिहरिः" इति सिद्ध्यति।

घटिन्धमः—इत्यत्र घटिन्ध्मातीति विग्रहे "घटीखारीखरीषूपसङ्ख्यानम्" इति वार्तिकेन खश्प्रत्ययेऽनुबन्धलोपे खित्वान्मुमागमे ह्रस्वे कृते अनुस्वारे परसवर्णे च विहिते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च "घटिन्धमः" इति सिद्ध्यति।

कुमारघाती—इत्यत्र कुमारं हन्तीति विग्रहे "कुमारशीर्षयोर्णिनिः" इत्यनेन हन्तेर्णिनिप्रत्ययेऽनुबन्धलोपे "हनस्तोऽचिण्णलोः" इत्यनेन तकार-

न्तादेशे णित्वादुपधावृद्धौ कुत्वे च विहिते प्रातिपदिकत्वात्सौ दीर्घे सुलोपे नलोपे च कृते 'कुमारघाती' इति सिद्ध्यति ।

"ई च खनः" अत्र सूत्रे दीर्घोच्चारणफलमिति ५२ पृष्ठे द्रष्टव्यम् ।

## ४—प्रश्नोत्तराणि ।

सुगः—८६ पृष्ठे द्रष्टव्यम् ।

शत्रुन्तपः—शत्रून् तपतीति विग्रहे "संज्ञायां भृतॄवृजिधारिसहितपिदमः" इत्यनेन खच्प्रत्ययेऽनुबन्धलोपे खित्वान्मुमागमे उमावितौ मस्यानुस्वारे परसवर्णे च विहिते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च 'शत्रुन्तपः' इति सिद्धयति ।

ब्रह्मवादी—'ब्रह्म वेदः' तस्मिन् वदतीति विग्रहे "ब्रह्मणि वदः" इत्यनेन णिनिप्रत्ययेऽनुबन्धलोपे णित्वादुपधावृद्धौ प्रातिपदिकत्वात्सौ दीर्घे सुलोपे नलोपे च विहिते 'ब्रह्मवादी' इति सिद्धयति ।

राजघः—राजानं हन्तीति विग्रहे "राजघ उपसङ्ख्यानम्" इति वार्तिकेन निपातनात् हन्तेष्टक्टिलोपे घत्वे च कृते प्रातिपदिकत्वात्सौ 'राजघः' इति सिद्धयति ।

पारदृश्वा—इत्यत्र 'पारं दृष्टवान्' इति विग्रहे "दृशेः क्वनिप्" इत्यनेन क्वनिप्प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ दीर्घे सुलोपे नलोपे च विहिते 'पारदृश्वा' इति सिद्धयति ।

वृकणः—१३ पृष्ठे द्रष्टव्यम् ।

पूर्त्तः—'पॄ' इत्यस्माद्धातोः "क्तक्तवतू निष्ठा" इत्यनेन निष्ठासंज्ञायां "निष्ठा" इत्यनेन क्तप्रत्ययेऽनुबन्धलोपे वलादित्वादिट्प्राप्ते "श्रयुकः किति" इत्यनेन निषेधे "उदोष्ठ्यपूर्वस्य" इत्युत्वे रपरत्वे "हलि च" इत्यनेन दीर्घे "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इत्यनेन निष्ठातकारस्य नत्वे प्राप्ते "न ध्याख्यापॄमूर्च्छिमदाम्" इत्यनेन निषेधे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च विहिते 'पूर्त्तः' इति सिद्धयति ।

रोचिष्णुः—रोचितुं शीलमस्येति विग्रहे रुच्धातोः "अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचरइष्णुच्" इत्यनेन इष्णुच्प्रत्ययेऽनुबन्धलोपे लघूपधगुणे च विहिते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे 'रोचिष्णुः' इति सिद्धयति ।

**वेशः**—विशतीति विग्रहे "पदरुजविशस्पृशो घञ्" इत्यनेन घञ्प्रत्ययेऽनुबन्धलोपे लघूपधगुणे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च विहिते "वेशः" इति सिद्ध्यति ।

**भावः**—भवतीति विग्रहे भू-धातोः "श्रिणीभुवोऽनुपसर्गे" इत्यनेन घञ्प्रत्ययेऽनुबन्धलोपे ञित्वादादिवृद्धौ आवादेशे च कृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च "भावः" इति सिद्ध्यति ।

## ५—प्रश्नोत्तराणि ।

**उद्ग्राहः**—इत्यत्र उदित्युपपदे 'ग्रह्' इत्यस्माद्धातोः "उदि ग्रहः" इत्यनेन घञ्प्रत्ययेऽनुबन्धलोपे ञित्वादादिवृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते "उद्ग्राहः" इति सिद्ध्यति ।

**उच्छ्रायः**—इत्यत्र 'उत्' इत्युपपदे श्रिधातोः "उदि श्रयतियौतिपूद्रुवः" इत्यनेन घञ्प्रत्ययेऽनुबन्धलोपे वृद्धौ आयादेशे च कृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे "उच्छ्रायः" इति सिद्ध्यति ।

**उपहवः**—इत्यत्र 'उप' इत्युपपदात् ह्वयतेः "ह्वः सम्प्रसारणं च न्यभ्युपविषु" इत्यनेन अप्प्रत्ययेऽनुबन्धलोपे सम्प्रसारणे च विहिते गुणे अवादेशे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे "उपहवः" इति सिद्ध्यति ।

**गीर्णिः**—इत्यत्र 'गॄ' इत्यस्माद्धातोः "ॠल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः' इत्यनेन क्तिन्प्रत्ययेऽनुबन्धलोपे ' "ॠत इद्धातोः" इतीत्वे रपरत्वे "हलि च" इत्यनेन दीर्घे तकारस्य नत्वे णत्वे च विहिते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे "गीर्णिः' इति सिद्ध्यति ।

**शायिका**—८६ पृष्ठे द्रष्टव्यम् ।

**विमार्गः**—विमृज्यतेऽनेनेति विग्रहे 'वि'इत्युपसर्गपूर्वकात् 'मृज्' धातोः "हलश्च' इत्यनेन घञ्प्रत्ययेऽनुबन्धलोपे ञित्वादादिवृद्धौ "चजोः कु घिण्ण्यतोः" इत्यनेन कुत्वे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च "विमार्गः" इति सिद्ध्यति ।

**पीत्वा खलु**—इत्यत्र पानेन साध्यं नास्तीत्यर्थे पाधातो "अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" इत्यनेन क्त्वाप्रत्ययेऽनुबन्धलोपे "घुमास्थागापाजहातिसां हलि" इत्यनेन ईत्वे प्रातिपदिकत्वात्सौ सुपो लुकि "पीत्वा खलु" इति सिद्ध्यति ।

चूर्णपेषम्—इत्यत्र चूर्णं पिनष्टीति विग्रहे चूर्णउपपदे पिष्धातोः "शुष्कचूर्णरूक्षेषु पिषः" इत्यनेन णमुलि अनुबन्धलोपे गुणे च विहिते प्रातिपदिकत्वात्सौ सोर्लोपे "चूर्णपेषम्" इति सिद्ध्यति ।

---

१९३८

४ वर्षे १ पत्रम् ।

१—बन्धः, अदास्त, अक्राक्षात्, आष्ट-एषु ससूत्रं साशङ्कम्, असाधारणं कार्य्यं प्रदर्श्य "स्थानषष्ठीनिर्देशाद् रोदधयोर्निवृत्तिः" इति पङ्क्तिर्व्याख्येया ।

२—अतृणेट्, पर्य्यस्कार्षीत्, अवान्धाम्, खौनीहि, एतेषु कार्य्यविशेषं सप्रमाणं विज्ञाप्य, धूधातोर्गणाभेदेन रूपाणि दर्शनीयानि ।

३—उब्जस्वप्योर्णिचि, मीदाप्योः सनि, शिवफल्योर्यङि, लुङि तिपि रूपाण्युल्लिख्य "जाग्रहिता" इत्यत्र दीर्घतदभावौ माधवादिमतभेदेन वर्णनीयौ ।

४—आरति, मामोति, उः, पटपटायते, कनयति, त्रापर्यति एषां साधुत्वं प्रदर्श्य "औजिढत्" इत्यत्र 'ढ्लोपे' इति दीर्घः कस्मान्नेति लेख्यम् ।

५—'कथं तर्हि 'विस्मापयन् विस्मितमात्मवृत्तौ इति' अवगल्भाञ्चक्रे इत्यत्र "भूतपूर्वादप्यनेकाच आम्" इति च पङ्क्तिं विशदं वर्णयत।

अथवा—

अदित, अस्यष्यत, जिघाय, आनर्फ, औनः-एते धातुप्रत्ययप्रदर्शनपुरस्सरं साधनीयाः ।

## १—प्रश्नोत्तराणि ।

बन्धः—६८ पृष्ठे द्रष्टव्यम् ।

अदास्त—६९,, ,, ।

अक्राक्षीत्—विलेखनार्थकात् 'कृष्' इत्यस्माद्धातोर्लुङि तिपि अडागमे अनुबन्धलोपे 'च्लि लुङि' इति च्लौ "च्लेः सिच्" इत्यनेन सिजादेशे निस्के

प्राप्ते "स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः" इत्यनेन विकल्पेन सिजादेशे इडभावे "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" इत्यनेन विकल्पेनामागमेऽनुबन्धलोपे मित्वादन्त्यादचः परे "अस्तिसिचोऽपृक्ते" इतीडागमेऽनुबन्धलोपे "षढोः कः सि" इत्यनेन कादेशे सस्य षत्वे च विहिते वृद्धौ "अक्राक्षीत्" इति सिद्ध्यति । सिचि अमभावपक्षे तु "वदव्रजहलन्तस्याचः" इत्यनेन वृद्धौ "अकार्क्षीत्" इति । सिजभावपक्षे च "शल इगुपधादनिटः क्सः" इत्यनेन क्सादेशेऽनुबन्धलोपे कित्वादमागमाभावे गुणाभावे च विहिते "अकृक्षत्" इति च सिद्ध्यति ।

आष्ट—४० पृष्ठे द्रष्टव्यम् ।

स्थानषष्ठीतिनिर्देशाद्रोपधयोनिवृत्तिरिति—अयम्भावः "बभर्ज" इत्यत्र 'भ्रस्ज' इत्यस्माद्धातोर्लिटि तिपि णलि च कृतेऽनुबन्धलोपे 'भ्रस्ज् अ' इति स्थिते "भ्रस्जो रोपधयो रमन्यतरस्याम्" इत्यनेन 'भ्रस्जो रेफस्योपधायाश्च स्थाने विकल्पेन रमागमे मकारइत् अकारश्चोच्चारणार्थकः, मित्वादन्त्यादचः परे रेफाकारादुपरि सकारात्प्राक् रेफ आगम इति फलितम् । तथा च 'भ्रर्स्ज् अ' इति स्थितम् । ननु रम आगमत्वे रोपधयोरिति कथं स्थानषष्ठीनिर्देश इत्यत आह—स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिरिति अयम्भावः—स्थानञ्च प्रसङ्गः । तथा-च–रेफस्य उपधायाश्च उच्चारणप्रसंगे सति अकारादुपरि रेफः प्रयोज्यः । भकारादुपरि रेफः जकारात्प्राक्सकारश्च न प्रयोज्याविति लब्धम् । एवञ्च तयोर्निवृत्तिः फलितेति । तथा सति 'भर्ज् अ' इति स्थिते द्वित्वादौ तत्सिद्ध्यतीति शम् ।

## २—प्रश्नोत्तराणि ।

अतृणेट्—६९ पृष्ठे द्रष्टव्यम् ।

पर्य्यस्कार्षीत्—'कृ' इत्यस्माद्धातोर्लुङि तिपि अडागमे च्लौ च्लेः सिचि च कृते इडभावे "अस्तिसिचोऽपृक्ते" इतीडागमे च वृद्धौ रपरत्वे 'अकार्षीत्' इति सिद्ध्यति । तेन 'परि' उपसर्गसमभिहारे "सम्परिभ्यां करोतौ भूषणे" इत्यनेन सुडागमे उटाविटौ "सिवादीनां वाऽड्व्यवायेऽपि" इत्यनेन विकल्पेन षत्वे "अचो रहाभ्यां द्वे" इति विकल्पेन यकारस्य द्वित्वे 'पर्य्यस्कार्षीत्' इति सिद्ध्यति । षत्वाभावे च 'पर्य्यस्कार्षीत्' इति च सिद्ध्यति ।

मबान्धाम्—४ पृष्ठे द्रष्टव्यम् ।

क्षौनीहि—५ पृष्ठे द्रष्टव्यम् ।

'धू' धातोर्गणभेदेन रूपाणीति—तथाहि स्वादौ 'धुञ् कम्पने' इत्यस्य पाठात्-लटि-धुनोति, धुनुते । इति रूपे । दीर्घान्तोऽप्ययमित्येके तन्मते—धूनोति, धूनुते इति रूपे । 'धू' विधूनने, इत्यस्य च तुदादौ पाठात्-लटि-'धुवति' इति रूपम् । 'धूञ्' कम्पने इत्यस्य च क्र्यादौ पाठात्-लटि-'धुनाति' धुनीते । इति रूपे । 'धूञ् कम्पने' इत्यस्यैव च चुरादौ पाठात् लटि-'धूञ्प्रीञोर्नुग्वक्तव्यः'' इत्यनेन नुगागमे—'धूनयति' 'धवति' 'धवते' इति च रूपाणि सिद्धयन्ति । केचित्तु--धूञ्प्रीणोः' इति पठित्वा प्रीणाति साहचर्यात् धुनोतेरेव नुकमाहुः । तन्मते 'धावयति' इति रूपम् । तदेव चोक्तम् । अयं स्वादौ, क्र्यादौ, तुदादौ च, स्वादौ ह्रस्वश्चेति । तथा च कविरहस्ये ।

धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् ।
वायुर्विधूनयति चम्पकपुष्परेणून् यत्कानने धवति चन्दनमञ्जरीश्च । इति ।

## ३—प्रश्नोत्तराणि ।

'उब्ज'—धातोर्णिचि लुङि तिपि 'औब्जिजत्' इति रूपम् ।

'स्वप्' धातोर्णिचि लुङि तिपि 'असूषुपत्' इति रूपम् ।

'डुमिञ्' 'मीञ्' आभ्यां च सनि लुङि तिपि 'अमित्सीत्' इति रूपं भविष्यति ।

'दा' धातोर्णिचि अनुबन्धलोपे पुगागमे णित्त्वाद्वृद्धौ 'दापि' इत्यस्मात् सनि लुङि तिपि "अदिदापयिषीत्" इति रूपं भविष्यति ।

'शिव' धातोर्यङि लुङि तिपि 'अशेशिवयिष्ट' 'अशोशूयिष्ट' इति रूपे भविष्यतः ।

'फल्' इत्यस्माद्धातोर्यङ्लुङि प्रथमपुरुषैकवचने तिपि "अपम्फुलिष्ट" इति रूपं भविष्यति ।

जाग्रहिता—'ग्रह उपादाने' इत्यस्माद्यङि यङ्लुकि च कृते प्रत्ययलोपे प्रत्ययलक्षणतया द्वित्वेऽभ्याससंज्ञायां हलादिशेषे 'कुहोश्चुः' इति चुत्वे अभ्यासस्य दीर्घे च विहिते धातुसंज्ञायां लुटि तिपि अनुबन्धलोपे तासप्रत्यये डादेशे

ङित्वाट्टिलोपे इडागमे च कृते "जाग्रहिता" इति सिद्ध्यति। अत्र "ग्रहो ऽलिटि दीर्घः" इत्यनेन दीर्घस्तु न भवति। तत्र 'एकाच्' इत्यनुवृत्तेरिति "एकाचो द्वे प्रथमस्य" इति सूत्रे हरदत्तेन उक्तत्वात्।

माधवस्तु—'एकाज्ग्रहणमत्र नानुवर्तते। तस्मात् दीर्घस्तु स्यादेवेति। एतत्सर्वं भाष्यविरुद्धमिति—"एकाचो द्वे प्रथमस्य" इति सूत्रभाष्ये 'ग्रह् उपादाने' इत्यस्माद्यङि सम्प्रसारणे अभ्यासस्य रीकि यङन्तात् 'जरीगृहिता' 'जरीगृहितम्' 'जरीगृहितव्यम्' इत्यत्र चेटो दीर्घाभावं सिद्धवत्कृत्य तत्र दीर्घमाशंक्य ग्रहोऽङ्गात्परस्य इटो दीर्घो विधीयते। 'जरीगृह' इत्यङ्गं तच्च न ग्रहधातुरिति निरूप्याङ्गविशेषणसामर्थ्यादेव 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्' इति नात्र प्रवर्तत इति समाहितम्। यङन्ते उक्तो न्यायो यङ्लुगन्तेऽपि 'जाग्रहिता' इत्यादौ समान एवेति। नच हरदत्तमत एकाज्ग्रहणानुवृत्त्यैवात्र दीर्घनिवारणे सति भाष्योक्तमिदं समाधानं नादरणीयमिति वाच्यम्। उपायस्योपायान्तरदूषकत्वादित्यलम्।

## ४—प्रश्नोत्तराणि।

**आरति**—'ऋ' इत्यस्माद्धातोः यङि यङ्लुकि च कृते प्रत्ययलोपे प्रत्ययलक्षणेन यङन्तत्वमाश्रित्य "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायां धातुत्वाल्लटि झिप्रत्यये "अदभ्यस्तात्" इत्यनेन झस्यादादेशे "रुग्रिकौ च लुकि" इत्यनेन रुगागमेऽनुबन्धलोपे 'अर्+ऋ+अति' इति स्थिते ऋकारस्य यणि च कृते 'अर्+र्+अति' इति स्थिते रुको "रो रि" इत्यनेन लोपे "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इत्यनेन दीर्घे 'आरति' इति सिद्ध्यति। ननु रुको "रो रि" इत्यनेन लोपे कर्तव्ये यणादेशसम्पन्नस्य रेफस्य "अचः परस्मिन् पूर्वविधौ" इति स्थानिवत्त्वात् ऋकारपरकत्वाद्रेफपरकत्वाभावात् कथं पूर्वरेफस्य लोप इत्यत आह—पूर्वत्रासिद्धे तन्निषेधात्। नापि यणः स्थानिवत्त्वं शङ्क्यम्, दीर्घविधौ तन्निषेधादिति शम्।

**मामोति**—९ पृष्ठे द्रष्टव्यम्।

**उः**—'अः विष्णुः स इवाचरुरिति विग्रहे "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" इत्यनेन क्विप्प्रत्ययेऽनुबन्धलोपे धातुसंज्ञायां लिटि झिप्रत्यये झेरुसा-

देशेऽनुबन्धलोपे 'अ+उस्' इति स्थिते "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्याससंज्ञायां पररूपे "अत आदेः" इत्यनेन दीर्घे आतो लोपे च विहिते सस्य रुत्वे विसर्गे "ऊः" इति सिद्ध्यति।

पटपटायते—९५ पृष्ठे द्रष्टव्यम्।

कनयति—१२७ " "

त्रापयति—तृप्रमाचष्ट इति विग्रहे णिचि कृतेऽनुबन्धलोपे "प्रियस्थिर-स्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्-द्राघिवृन्दाः" इत्यनेन त्रपादेशे "संज्ञापूर्वको विधिरनित्यः" इति परिभाषया वृद्ध्यभावे धातुसंज्ञायां लटि तिपि सार्वधातुकसंज्ञायां शपि अनुबन्धलोपे गुणेऽया-देशे च विहिते 'त्रपयति' इति सिद्ध्यति। 'त्रापयति' इति क्वचित्पाठः। तन्मते परिभाषामनाश्रित्य वृद्ध्यादेशे तत्सिद्ध्यति।

औजिढत्—३१ पृष्ठे द्रष्टव्यम्।

## ९—प्रश्नोत्तराणि।

"कथं तर्हि विस्मामयन् विस्मितमात्मवृत्तौ"—२९ पृष्ठे द्रष्टव्यम्।

अवगल्भाञ्चक्रे—'अव' इत्युपसर्गपूर्वकात् 'गल्भ्' इत्यस्मात् 'पचाद्यच्' कृते निष्पन्नात् 'अवगल्भ' इत्यस्मात् आचारेऽर्थे "आचारेऽवगल्भक्लीवहो-डेभ्यः क्विब्वा वक्तव्यः" इत्यनेन विकल्पेन क्विपि तत्सन्नियोगेन चानुदात्तत्व-मनुनासिकत्वं चाच्प्रत्ययस्य प्रतिज्ञायते। ततो धातुसंज्ञायां लिटि अनुदात्तत्वप्र-तिज्ञानादात्मनेपदे तप्रत्यये "कास्यनेकाच आम्वक्तव्यः" इत्यनेन आमि "आमः" इत्यनेन लिटो लुकि च कृते "कृञ्चानुप्रयुज्यते लिटि" इत्यनेन 'कृ' इत्यनुप्रयोगकलिट्प्रयोगे द्वित्वेऽभ्याससंज्ञायाम् "उरत्" इत्यत्वे रपरे हलादि-शेषे च विहिते "कुहोश्चुः" इत्यनेन चुत्वे "लिटस्तझयोरेशिरेच्" इत्यनेन एशादेशेऽनुबन्धलोपे यणि च कृते "अवगल्भाञ्चक्रे" इति सिद्ध्यति।

ननु "अवगल्भाञ्चक्रे" इत्यत्र आम्प्रत्ययः कथम्। अन्त्यस्य च इत्संज्ञा-लोपाभ्यामपहारेण धातूनामत्रैकाच्त्वेन "कास्यनेकाच आम्वक्तव्यः" इति वार्तिकस्याप्रवृत्तेः। नच 'अवगल्भ' इत्यस्य क्विबन्तस्य धातोरनेकाच्कत्वमस्तीति वाच्यम्। तन्न। यत्र 'उपसर्ग' समानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये

चिकीर्षिते पृथक् क्रियते” इति नियमस्य चोक्तत्वादित्यत आह—क्विप्सन्नियोगेनानुदात्तत्वमनुनासिकत्वञ्चाचप्रत्ययस्य प्रतिज्ञाय “आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः” इति वार्तिकारम्भसामर्थ्यात् भूतपूर्वादप्यनेकाच आम्” इति विज्ञायते । नन्वनुदात्तत्वनुनासिकत्वप्रतिज्ञानस्यात्मनेपदसिद्धौ चरितार्थस्य सत्त्वात् कथमुक्तज्ञापकता इत्याशंक्य निराकरोति—नचावगल्भते इत्यादिसिद्धि स्तत्फलमिति वाच्यम् । तन्न । केवलानामेवाचारेऽपि वृत्तिप्रम्भवात् धातूनाञ्चानेकार्थत्वादिति शम् ।

अथवा—

अदित—‘दा’ इत्यस्माद्धातोर्लुङि आत्मनेपदे तप्रत्यये “लुङ्लङ्लृङ्क्ष्वडुदात्तः” इत्यनेनाडागमेऽनुबन्धलोपे “च्लि लुङि” इति च्लौ च्लेः सिजादेशे च विहिते इचावितौ । ‘अ+दा+स्+त’ इति स्थिते “स्थाघ्वोरिच्च” इत्यनेनान्त्यस्याकारस्य इकारे सिचः कित्वे च कृते कित्वाद्गुणाऽभावे । “ह्रस्वादङ्गात्” इत्यनेन सिचो लोपे “अदित” इति सिद्ध्यति ।

अभ्यस्यत्—५ पृष्ठे द्रष्टव्यम् ।

जिघाय—६९ ,, ,, ।

आनर्फ—‘ऋफ्’ इत्यस्माद्धातोर्लिटि तिपि णलि च कृते अनुबन्धलोपे “लिटि धातोरनभ्यासस्य” इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् “उरत्” इत्यत्वे रपरत्वे हलादिः शेषे च कृते “अत आदेः” इत्यनेनाभ्यासस्य दीर्घे विहिते “तस्मान्नुड् द्विहलः” इत्यनेन नुडागमे उटावितौ गुणे च कृते ‘आनर्फ’ इति सिद्ध्यति ।

औनः—ईकारेत्संज्ञक ‘उन्द्’ इत्यस्माद्धातोर्लङि सिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते श्नमि कृते “श्नान्नलोपः” इत्यनेन नलोपे “लुङ्लङ्लृङ्क्ष्वडुदात्तः” इत्यनेनाडागमे प्राप्ते “आडजादीनाम्” इत्यनेनाडागमे “आटश्च” इति वृद्धौ “हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्” इत्यनेन सस्य लोपे “दश्च” इत्यनेन विकल्पेन रुत्वे अनुबन्धलोपे रस्य विसर्गे च विहिते “औनः” इति । रुत्वाभावे–दस्य चर्त्वे ‘औनत्’ इति सिद्ध्यति ।

---

१९३८

४ वर्षे २ पत्रम् ।

१—तुरणवरणयोर्यकि सनि लुङ्लुटोः प्रथमपुरुषैकवचने रूपे संसाध्य णेरणाविति सूत्रं सोदाहरणं निर्दोषं व्याख्यायताम् ।

२—निगारयति, गाङ्गानीते, स्मारिता, दापिता, एषु विशेषकार्याणि प्रदर्श्य "तपस्तपः कर्म्मकस्यैव" इति सूत्रस्य विध्यर्थत्वनियमार्थत्वे निरूप्य सिद्धान्तपक्षः स्थाप्यताम् ।

३—अन्योन्यं स्पृशतः, वसन्तीह पुरा, आशंसेऽधीयीय, सम्भावयामि भुञ्जीत, एषु विशेषकार्याणि प्रतिपाद्य, भविष्यति मर्यादेति, 'समुच्चये सामान्यवचनस्येति च सूत्रे सोदाहरणे व्याख्यायेताम् ।

४—प्रपवणीयः, उपसर्या, शिष्यः, विलिख्य, अरविन्दम् , सुखप्रतीक्षा एतान् सूत्रार्थोपन्यासपूर्वकं संसाध्य 'न कादेः' इत्यस्य प्रत्याख्यानप्रकारः प्रदर्श्यताम् ।

५—ग्रामगः, तमोऽपहः, आढ्यम्भावुकः, दूनवान् , नुन्नः, आखिवान् बिभ्राणः, एतेषु विशेषकार्य्याणि विलिख्य 'गत्यर्थाकर्मके' त्यस्य कस्मिन् कस्मिन्नर्थे प्रवृत्तिरित्यभिधीयताम् ।

६—अर्हन् , स्तवः, विशयः, प्रधिः, पूनिः, अजीवनिः, लवणङ्कारं भुङ्क्ते दण्डोपघातम् , एते विशेषसूत्रैः साधनीयाः ।

## १—प्रश्नोत्तराणि ।

'तुरण्' इत्यस्माद्धातोः यकि सनि लुङि तिपि "अतुतुरणिषीत्" इति रूपं भविष्यति । तथाहि—त्वरार्थकात् 'तुरण्' इत्यस्माद्धातोः "कण्ड्वादिभ्यो यक्" इत्यनेन यकि अनुबन्धलोपे 'तुरण्य' इत्यस्माच्च सनि कृते नकारस्येत्संज्ञायां लोपे च । विहिते "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लुङि तिपि अडागमे "अतो लोपः" इत्यल्लोपे "यस्य हलः" इत्यनेन यलोपे च कृते "सन्यङोः" इत्यनेन द्वित्वेऽभ्याससंज्ञायां हलादिःशेषे "च्लि लुङि" इत्यनेन च्लौ च्लेः सिचि इचावितौ "आर्द्धधातुकस्येड्वलादेः" इत्यनेन इडागमे "अस्तिसिचोऽपृक्ते" इत्यनेन ईडागमे च विहिते "इट ईटि" इत्यनेन सलोपे सस्य षत्वे "अतुतुरणिषीत्" इति रूपं सिद्धयति ।

'वर ' इत्यस्माद्धातोः यकि सनि लुटि प्रथमपुरुषैकवचने तिपि 'विवरणिषिता' इति रूपं भविष्यति तथाहि—

गत्यर्थकात् 'वरण्' इत्यस्माद्धातोः "कण्ड्वादिभ्यो यक्" इत्यनेन यकि 'वरण्य' इत्यस्माच्च सनि कृतेऽनुबन्धलोपे "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां धातुत्वाल्लुटि तिपि "अतो लोपः" इत्यल्लोपे "यस्य हलः" इत्यनेन यलोपे च विहिते "सन्यङोः" इत्यनेन द्वित्वेऽभ्याससंज्ञायां हलादिःशेषे "सन्यतः" इत्यभ्यासस्येत्वे सनो वलादित्वादिडागमे "स्यतासीलृलुटोः" इत्यनेन तास्प्रत्यये "लुटः प्रथमस्य डारौरसः" इत्यनेन तिपो डादेशे डित्वाट्टिलोपे "आर्द्धधातुकस्येड्वलादेः" इतीडागमे च विहितेऽनुबन्धलोपे सस्य षत्वे 'विवरणिषिता' इति रूपं सिद्धयति ।

णेरणाविति—सूत्रस्य व्याख्या ६४ पृष्ठे द्रष्टव्यम् ।

## २—प्रश्नोत्तराणि ।

निगारयति—'नि' इत्युपसर्गपूर्वकात् 'गॄ' इत्यस्माद्धातोर्ण्यन्तात् "निगरणचलनार्थेभ्यश्च" इत्यनेन परस्मैपदे 'निगारयति' इति सिद्धयति ।

गाज्ञानीते—१५९ पृष्ठे द्रष्टव्यम् ।

स्मारिता—७५ पृष्ठे द्रष्टव्यम् ।

दायिता—'दा' इत्यस्माद्धातोर्लुटि तिपि तास्प्रत्यये तिपो डादेशे डित्वाट्टिलोपे "स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च" इत्यनेन विकल्पेन चिण्वद्भावे इडागमे च विहितेऽनुबन्धलोपे चिण्वद्भावाद्वृद्धौ "आतो युक्चिण्कृतोः" इत्यनेन युगागमे उकावितौ "दायिता" इति सिद्धयति । चिण्वद्भावाभावे चिण्वदिट्सन्नियोगशिष्टैव युगागमस्य विहितत्वात् तदभावे "दाता" इति च रूपं सिद्धयति ।

'तपस्तपः कर्मकस्यैवेति'—१४८ पृष्ठे द्रष्टव्यम् ।

## ३—प्रश्नोत्तराणि ।

अन्योन्यं स्पृशतः—१०७ पृष्ठे द्रष्टव्यम् ।

वसन्तीह पुरा—इत्यत्र "पुरि लुङ् चास्मे" इत्यनेन विकल्पेन लुङि लटि च विहिते एतदुभयाभावपक्षे च—अनद्यतनपरोक्षभूते लिट्लकारे च कृते

"वसन्तीह पुरा छात्राः,अवात्सुः, अवसन्, ऊषुर्वा" इति च सिद्ध्यति ।

आशंसेऽधीयीय—इत्यत्र "आशंसावचने लिङ्" इत्यनेन लिङ्लकारे "आशंसेऽधीयीय" इति सिद्धयति ।

"सम्भावयामि भुञ्जीत, भोदयते वा भवान्"इति १०७ पृष्ठे द्रष्टव्यम् ।

"भविष्यति मर्यादावचनेऽवरस्मिन्" १४ पृष्ठे द्रष्टव्यम् ।

"समुच्चये सामान्यवचनस्य"—समुच्चये लोड्विधौ सामान्यार्थकस्य धातोरनुप्रयोगः स्यादिति सूत्रार्थः । अनुप्रयोगाद्यथायथं लडादयस्तिबादयश्च ततः संख्याकालयोः पुरुषविशेषार्थस्य चाभिव्यक्तिः । तत्र समुच्चये उदाहरणन्तु—"सक्तून् पिब' धाना खादेत्यभ्यवहरति । अन्नं भुङ्क्ष्व, दाधिकमास्वादयस्वेत्यभ्यवहरते । तध्वमोस्तु–पिबत खादतेत्यभ्यवहरत । भुङ्ध्वमास्वादयध्वमित्यभ्यवहरध्वम् । पक्षे—हिस्वौ । अत्र समुच्चीयमानविशेषाणामनुप्रयोगार्थेन सामान्येनाभेदान्वय इति । पक्षे–'सक्तून् पिबति, धानाः खादति । अन्नं भुङ्क्ते । दाधिकमास्वादयते । इति । एतेन—

"पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः ।
विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्दिवं दिवः ॥ इति ।

अवस्कन्दनलवनादिरूपा भूतानद्यतनपरोक्षा एककर्तृका अस्वास्थ्यक्रियेत्यर्थात्सर्वं व्याख्यातमिति शम् ।

## ४—प्रश्नोत्तराणि ।

प्रपवणीयः—प्रोपसर्गपूर्वकात्—ऊकारेत्संज्ञक 'पू' इत्यस्माद्धातोः "तव्यत्तव्यानीयरः" इत्यनेन अनीयर्प्रत्ययेऽनुबन्धलोपे गुणेऽवादेशे च विहिते "कृत्यचः" इत्यनेन णत्वे कृदन्तत्वात्प्रातिपदिकसंज्ञायां सौ रुत्वे विसर्गे 'प्रपवणीयः' इति सिद्धयति ।

नचात्र "न भाभूपूकमिगमिप्यायीवेपाम्" इत्यनेन णत्वनिषेधात् कथमत्र णत्वमिति वाच्यम् । तन्न । तत्र सूत्रे 'पूञ् एवेह ग्रहणमिष्यते' इति वार्तिकसहकारेण 'पूञ्' धातोरेवग्रहणात् । पूङस्तु णत्वं स्यादेवेति शम् ।

उपसर्या—इत्यत्र गर्भाधानार्थं वृषभेणोपगन्तु योग्येत्यर्थे "उपसर्या काल्या प्रजने" इति सूत्रेण 'उपसर्या' इति निपात्यते । तथा च—उपपूर्वात्

सृधातोः "ऋहलोर्ण्यत्" इत्यनेन ण्यत्प्रत्यये प्राप्ते निपातनादनेन यत्प्रत्यये-ऽनुबन्धलोपे अदन्तत्वाट्टापि प्रातिपदिकत्वात्सौ सोर्लोपे 'उपसर्या' इति सिद्ध्यति ।

शिष्यः—इत्यत्र 'शास्' इत्यस्माद्धातोः "एतिस्तुशास्वृदृजुषः क्यप्" इत्यनेन क्यप्प्रत्ययेऽनुबन्धलोपे "शास इदङ्हलोः" इत्यनेनाकारस्येत्वे षत्वे च विहिते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे 'शिष्यः' इति सिद्ध्यति ।

विशयी—'वि' इत्युपसर्गपूर्वात् 'शीङ्' इत्यस्माद्धातोः "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इत्यनेन णिनिप्रत्ययेऽनुबन्धलोपे-गुणेऽयादेशे च विहिते णित्वाद् "अचो ञ्णिति" इति सूत्रेण वृद्धौ प्राप्तायां निपातनाद्वृद्ध्यभावे च कृते प्रातिपदिकत्वात्सौ दीर्घे सुलोपे नलोपे च कृते 'विशयी' इति सिद्ध्यति । इह केचिद् षत्वमपीच्छन्ति । तन्मते "विषयी" इति च सिद्ध्यति ।

अरविन्दम्—चक्रे नाभिनेम्योरन्तरालप्रोतानि काष्ठानि अराणि तत्सदृशानि दलानि विन्दतीत्यर्थे 'कर्मण्यणि प्राप्ते तदपवादभूतेन "गवादिषु विन्देः संज्ञायाम्" इति वार्तिकेन शप्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे 'अरविन्दम्' इति सिद्ध्यति ।

सुखप्रतीक्षा—इत्यत्र सुखं प्रतीक्ष्यते या सेति विग्रहे "ईक्षिक्षमिभ्यां च" इति वार्तिकेन णप्रत्ययेऽनुबन्धलोपे अदन्तत्वाट्टापि प्रातिपदिकत्वात्सौ सोर्लोपे 'सुखप्रतीक्षा' इति सिद्ध्यति ।

"नकादेः" इति १४९ पृष्ठे द्रष्टव्यम् ।

## ९—प्रश्नोत्तराणि ।

ग्रामगः—इत्यत्र ग्रामं गच्छतीति विग्रहे 'ग्राम' इत्युपपदात् गम्धातोः "अन्यत्रापि दृश्यत इति वक्तव्यम्" इति वार्तिकेनडप्रत्यये डित्वाट्टिलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च विहिते 'ग्रामगः' इति सिद्ध्यति ।

तमोऽपहः—इत्यत्र तमांसि अपहन्तीति विग्रहे अपपूर्वात् हन्धातोः "अपे क्लेशतमसोः" इत्यनेन डप्रत्यये डित्वाट्टिलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च विहिते 'तमोऽपहः सूर्यः' इति सिद्ध्यति ।

आढ्यम्भावुकः—इत्यत्र न आढ्यः, अनाढ्यः, अनाढ्यः आढ्यो भवतीति विग्रहे "कर्त्तरि भुवः खिष्णुच्खुकञौ" इत्यनेन खुकञ्प्रत्यये खना-

वितौ लोपे च कृते खित्वान्मुमागमे उमावितौ ञित्वाद्वृद्धौ आवादेशे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे 'आढ्यम्भावुकः' इति सिद्ध्यति ।

**दूनवान्**—इत्यत्र ङकारेत्संज्ञक 'दू' इत्यस्माद्धातोः "क्तक्तवतू निष्ठा" इत्यनेन निष्ठासंज्ञायां "निष्ठा" इति सूत्रेण क्तवतुप्रत्ययेऽनुबन्धलोपे स्वादित्वेन चास्य ओदित्वात् "ओदितश्च" इत्यनेन निष्ठातकारस्य नत्वे प्रातिपदिकत्वात्सौ उगित्वान्नुमि उमावितौ दीर्घे सुलोपे संयोगान्तलोपे च विहिते 'दूनवान्' इति सिद्ध्यति ।

**नुन्नः**—प्रेरणार्थकात् 'णुद्' इत्यस्माद्धातोः "णो नः" इति नत्वे 'नुद' इत्यस्माच्च निष्ठाक्तप्रत्ययेऽनुबन्धलोपे "नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्" इत्यनेन विकल्पेन निष्ठातकारस्य नत्वे दकारस्य च नत्वे प्रातिपदिकत्वात्सौ । रुत्वे विसर्गे 'नुन्नः' इति तदभावे—'नुत्तः' इति च सिद्ध्यति ।

**आरिवान्**—'ऋ' इत्यस्माद्धातोर्लिटि "क्वसुश्च" इत्यनेन क्वसुप्रत्ययेऽनुबन्धलोपे द्वित्वेऽभ्याससंज्ञायाम् "उरत्" इत्यत्वे रपरे च विहिते "हलादिः शेषः" इत्यनेन लोपे "ऋच्छत्यॄताम्" इति गुणेऽभ्यासदीर्घे वलादित्वादिडागमे उगित्वान्नुमि दीर्घे सुलोपे सलोपे च कृते 'आरिवान्' इति सिद्ध्यति ।

**बिभ्राणः**—इत्यत्र अकारेत्संज्ञक 'भृ' इत्यस्माद्धातोः "ताच्छील्यवयोवचनशक्तिषु चानश्" इति सूत्रेण चानश्प्रत्ययेऽनुबन्धलोपे शित्वात्सार्वधातुकसंज्ञायां शपि जुहोत्यादित्वादस्य श्लौ "श्लौ" इत्यनेन द्वित्वादिकार्ये च विहिते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च 'बिभ्राणः' इति सिद्ध्यति ।

**गत्यर्थाकर्मकेति**—"गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च" इत्यस्य सूत्रस्य 'गत्यर्थ' अमक, श्लिष, शीङ्, स्था, आस, वस, जन, रुह, जीर्यति, एभ्यः कर्तरि क्तः स्याद्भावकर्मणोश्च इति सूत्रार्थसद्भावात्—कर्तरि भावे कर्मणि चास्य प्रवृत्तिरिति शम् ।

## ६—प्रश्नोत्तराणि ।

**अर्हन्**—इत्यत्र पूजा प्राप्तुं योग्य इत्यर्थे 'अर्ह' इत्यस्माद्धातोः "अर्हः प्रशंसायाम्" इत्यनेन शतृप्रत्ययेऽनुबन्धलोपे उगित्वान्नुमि प्रातिपदिकत्वात्सौ सुलोपे संयोगान्तलोपे च विहिते 'अर्हन्' इति सिद्ध्यति ।

**स्तवः**—इत्यत्र 'स्तु' इत्यस्माद्धातोः "ऋदोरप्" इत्यनेन अप्प्रत्ययेऽनुब-

न्धलोपे गुणेऽवादेशे च विहिते प्रातिपदिकत्वात्सौ रुत्वविसर्गे 'स्तवः' इति सिद्धयति।

विशयः—इत्यत्र "व्युपयोः शेतेः पर्याये" इति सूत्रे 'पर्याये' इति ग्रह-णाभावे 'वि' इत्युपपदात् 'शी' इत्यस्माच्च घञापत्तौ 'विशायः' इत्यनिष्टापत्ति वा-रणाय तद्ग्रहणमिति शम् ।

प्रधिः—इत्यत्र प्रोपसर्गपूर्वकात् ञकारेत्संज्ञक 'धा' इत्यस्माद्धातोः "उपसर्गे घोः किः" इत्यनेन किप्रत्ययेऽनुबन्धलोपे "आतो लोप इटि च" इत्याकार-लोपे च विहिते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे 'प्रधिः' इति सिद्धयति ।

पूनिः—इत्यत्र ञकारेत्संज्ञक 'पू' इत्यस्माद्धातोः "ऋल्वादिभ्यः क्तिन्नि-ष्ठावद्वाच्यः" इति वार्तिकेन क्तिन्प्रत्ययेऽनुबन्धलोपे "ल्वादिभ्यः" इत्यनेन तकारस्य नकारे च विहिते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे 'पूनिः' इति सिद्धयति ।

अजीवनिः-इत्यत्र नञ्युपपदे 'जीव्' इत्यस्माद्धातोः "आक्रोशे नञ्यनिः" इत्यनेन अनिप्रत्यये प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च विहिते "अजीवनिः" इति सिद्धयति ।

लवणङ्कारं भुङ्क्ते इत्यत्र स्वादुपर्याये उपपदे 'कृ' इत्यस्माद्धातोः 'स्वादुमि णमुल्' इत्यनेन णमुल्प्रत्ययेऽनुबन्धलोपे लवणशब्दस्य च निपा-तनान्मान्तत्वे णित्वाद्वृद्धौ प्रातिपदिकत्वात्सौ सोर्लोपे 'लवणङ्कारं भुङ्क्ते' इति सिद्धयति ।

दण्डोपघातम्—दण्डेनोपघातमिति विग्रहे "हिंसार्थानां च समानक-र्मकाणाम्" इत्यनेन तृतीयान्ते उपपदे 'उप' इत्युपसर्गपूर्वकात् 'हन्' इत्य-स्माद्धातोर्णमुलि अनुबन्धलोपे णित्वादुपधावृद्धौ कुत्वे नकारस्य तकारादेशे च विहिते "तृतीया प्रभृतीन्यन्यतरस्याम्" इति विकल्पेन समासे विभक्तेर्लुकि च कृते प्रातिपदिकत्वात्सौ सोर्लोपे 'दण्डोपघातम्' इति । समासाभावपक्षे च 'दण्डे-नोपघातम्' इति च सिद्धयति ।

---

१९३९

४ वर्षे १ पत्रम् ।

१—गति, शौच, क्षरणार्थकजुहोत्याद्यन्तर्गत धातूनां लटि आलिङ्ग-न तनूकरणार्थक दैवादिकधातोश्च लुङि प्रथमपुरुषैकवचने वि-शेषकार्यविधायकसूत्रप्रदर्शनपूर्वकं रूपाणि लेख्यानि ।

२—षद्, धातो भ्वादितुदादिगणकृतकार्यभेदानभिधाय 'हि' वश्च्योर्लिटि तिपि क्षिणुधातोर्लुङि तिपि ते च रूपाणि सविशेषसूत्रं ब्रूत।

३—स्तम्भेश्चौरादिकचिच्वजश्च लोटः सिपि रूपे प्रदर्श्य प्रकृतिवच्च कारकमित्यत्र च शब्दस्य फलं सम्यङ् निरूपणीयम् ।

४—शिव, वा, धातोर्णौ ग्रह्, दिव्, धातोर्सनि, अश्, ग्रह् धातोर्यङि च सूत्रनिर्देशं विनैकैकं रूपं प्रदर्श्य, 'उपधाकार्यं द्वित्वात्प्रबलमिति' पंक्तिर्व्याख्येया ।

५—अज्, ज्वरधातो रूपे यङ्लुकि विचार्य विद्वच्छब्दात् क्यङि लटस्तिपि ते च रूपाण्युक्त्वा यशस्विनं धनवन्तञ्चाचष्टे इति विग्रहे णिचि कीदृग् प्रयोग इति लेखनीयम् ।

६--तृप्तेस्तर्पणायाश्च वेष्टनस्य वेष्टनायाश्चार्थभेदं वर्णयित्वा 'वृद्धेर्लोपो बलीयान्, 'वृद्धौ सत्यां टिलोपः' इत्युभयत्र प्रमाणं फलञ्च प्रदर्शनीयम् । पञ्चैव समाधेया एषु ।

## १—प्रश्नोत्तराणि ।

जुहोत्यादिगणे—'गत्यर्थकात्' 'ऋ' इत्यस्माद्धातोर्लटि तिपि **'इयर्ति'** इति रूपं भविष्यति । साधनप्रकारश्च १५३ पृष्ठे द्रष्टव्यम् ।

जुहोत्यादिगणे शौचार्थकात् इरेत्संज्ञक 'णिज्' इत्यस्माद्धातोर्लटि तिपि **'नेनेक्ति'** इति रूपं भविष्यति । साधनप्रकारश्च १५३ पृष्ठे द्रष्टव्यम् ।

जुहोत्यादिगणे—'क्षरणार्थकात्' 'घृ' इत्यस्माद्धातोर्लटि तिपि । **'जिघर्ति'** इति रूपं भविष्यति । तथाहि—'घृ' धातोर्लटि तिपि सार्वधातुकसंज्ञायां शपि **"जुहोत्यादिभ्यः श्लुः"** इत्यनेन श्लौप्रत्यये अनुबन्धलोपे **"श्लौ"** इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् **"उरत्"** इत्यत्वे रपरत्वे च विहिते **"हलादिः शेषः"** इत्यनेन लोपे **"कुहोश्चुः"** इत्यनेन चुत्वे **"अभ्यासे चर्च"** इत्यनेन जश्त्वे गुणे रपरत्वे च कृते **'जिघर्ति'** इति रूपं सिद्ध्यति ।

दिवादिगणे आलिङ्गनार्थकात् 'श्लिष्' इत्यस्माद्धातोर्लुङि प्रथमपुरुषैकवचने तिपि **'अश्लिक्षत्'** इति रूपं भविष्यति । साधनप्रकारश्च—९१ पृष्ठे द्रष्टव्यम् ।

दैवादिकतनूकरणार्थकात् 'कृश्' इत्यस्माद्धातोर्लुङि प्रथमपुरुषैकवचने तिपि **'अकृशत्'** इति रूपं भविष्यति । तथाहि 'कृश्' धातोर्लुङि तिपि अडागमेऽनु-

बन्धलोपे "च्लि लुङि" इति च्लौ च्लेः सिचि च प्राप्ते "पुषादिद्युताद्यॢदितः परस्मैपदेषु" इत्यनेन अङि 'अकुशत्' इति रूपं सिद्धयति ।

## २—प्रश्नोत्तराणि ।

षद् धातोः तौदादिकत्वे पाठफलमिति १५५ पृष्ठे द्रष्टव्यम् ।

गत्यर्थकात् 'हि' इत्यस्माद्धातोर्लिटि तिपि 'जिघाय' इति रूपं भविष्यति । साधनप्रकाश्च ६९ पृष्ठे द्रष्टव्यम् ।

छेदनार्थकात् ओकार-अकारेत्संज्ञकात् 'व्रश्चु' इत्यस्माद्धातोर्लिटि तिपि 'वव्रश्च' इति रूपं भविष्यति । तथाहि—'व्रश्च्' धातोर्लिटि तिपि । "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इत्यनेन तिपो णलि च कृते "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्याससंज्ञायां "लिट्यभ्यासस्योभयेषाम्" इत्यनेनाभ्यासस्य सम्प्रसारणे 'उरत्' इत्यत्वे रपरे "हलादिः शेषः" इत्यनेन लोपे च विहिते वकारस्यापि पुनः सम्प्रसारणे च प्राप्ते "न सम्प्रसारणे सम्प्रसारणम्" इत्यनेन निषेधे 'वव्रश्च' इति रूपं सिद्धयति ।

हिंसार्थकात्—उकारेत्संज्ञक 'क्षिणु' इत्यस्माद्धातोर्लुङि तिपि 'अक्षेणीत्' इति । आत्मनेपदे तप्रत्यये च—'अक्षित' 'अक्षेणिष्ट' इति चेत्येवं रूपत्रयाणि भविष्यन्ति । तथाहि—'क्षिण्' धातोर्लुङि तिपि "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमेऽनुबन्धलोपे च्लौ च्लेः सिचि च विहिते इचावितौ "आर्द्धधातुकस्येड्वलादेः" इत्यनेनेडागमे 'अस्तिसिचावि'ति ईडागमे च कृते "इट ईटि" इति सकारस्य लोपे लघूपधगुणे 'अक्षेणीत्' इति आत्मनेपदे च तप्रत्यये अडागमे च्लौ च्लेः सिचि इचावितौ 'अ+क्षिण्+स+त' इति जाते "तनादिभ्यस्तथासोः" इति सिचो लुकि "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनेन विकल्पेन अनुनासिकलोपे 'अक्षित' इति । अनुनासिकलोपा भावे सिचो लुगभावे च इडागमे लघूपधगुणे सस्य षत्वे ष्टुत्वे 'अक्षेणिष्ट' इति रूपं सिद्धयति ।

## ३—प्रश्नोत्तराणि ।

चौरादिक 'स्तम्भ' इत्यस्माद्धातोः लोटलकारे मध्यमपुरुषैकवचने सिपि 'स्तम्भय' इति रूपं भविष्यति ।

चयनार्थकात् अकारेत्संज्ञक चौरादिक 'चि' इत्यस्माद्धातोः लोटलकारे मध्यमपुरुषैकवचने सिपि 'चपय' 'चयय' इति रूपे भविष्यतः ।

प्रकृतिवच्च कारकमिति—"आख्यानात् कृतस्तदाचष्टे०" इति वार्तिकव्याख्यानावसरे ४१ पृष्ठे द्रष्टव्यम् ।

## ४—प्रश्नोत्तराणि ।

'श्वि' इत्यस्माद्धातोर्णिचि वृद्ध्यायादेशयोः 'श्वायि' इत्यस्मात् लटि तिपि 'श्वाययति' इति रूपं भविष्यति ।

'ओवै' शोषणे इति धातोः कृतात्वस्य 'वा' इत्यस्माच्च णिचि जुगागमे लटि तिपि 'वाजयति' इति रूपं भविष्यति ।

'ग्रह्' इत्यस्माद्धातोः सनि लटि तिपि 'जिघृक्षति' इति रूपं भविष्यति ।

'दिव्' इत्यस्माद्धातोः सनि लटि तिपि 'दुद्यूषति' 'दिदेविषति' इति च रूपं भविष्यति ।

ऊकारेत्संज्ञक—'अश्' इत्यस्माद्धातोर्यङि 'श्य' इत्यस्य द्वित्वे हलादिः शेषेण अभ्यासे यकारनिवृत्तौ "दीर्घोऽकितः" इत्यनेन दीर्घे "यस्य हलः" इति यकार-लोपे धातुत्वाल्लुटि तासि ङित्वाट्टिलोपे इडागमे 'अशाशिता' इति रूपं भविष्यति ।

'ग्रह्' इत्यस्माद्धातोर्यङि ग्रहिज्येत्यादिना सम्प्रसारणे द्वित्वे उरदत्वे हला-दिःशेषे अभ्यासस्य रीगागमे धातुत्वाल्लटि आत्मनेपदे तप्रत्यये टेरेत्वे 'जरी-गृह्यते' इति रूपं भविष्यति ।

उपधाकार्यं द्वित्वात्प्रबलमिति—अयम्भावः—"रलो व्युपधाद्धलादेः संश्च" इति सूत्रे हलादेः किमिति—'एषिषिषति' इत्युक्तम् । तत्र हि इषधातोः सन इट् हलादित्वाभावेन कित्वाभावाद्गुणे 'एष्+इस+ति' इति स्थिते "अ-जादेर्द्वितीयस्य" इत्यनेन 'षिस्' इत्यस्य द्वित्वे हलादिःशेषे सनः सकारस्य षत्वे 'एषिषिषति' इति रूपं सिद्ध्यति ।

नन्विह सत्यपि कित्वे नित्यत्वात् परमपि गुणं बाधित्वा 'षिस्' इत्यस्य द्वित्वे धात्ववयवस्य इकारस्य उपधात्वाभावादेव गुणाप्रसक्तेर्हलादेरिति व्यर्थमित्यत आह—'इह नित्यमपि द्वित्वं गुणेन बाध्यते' कुत इत्यत आह—'उपधा कार्यं हि द्वित्वात्प्रबलमिति' । तत्र प्रमाणन्तु—ओणे ऋदित्करण मेवे-

ति । तथाहि—ओणृधातोः ण्यन्ताल्लुङि चङि **"णौ चङ्युपधाया ह्रस्वः"** इति ह्रस्वस्य **"नाग्लोपिशास्वृदिताम्"** इति निषेधे सति 'ओणि+अ+त्' इति स्थिते 'णि' इत्यस्य द्वित्वे **'मा भवानोणिणत्'** इति रूपम् । अत्र उपधाह्रस्वस्य निषेधार्थमोणेः ऋदित्करणमिति । उपधाह्रस्वे कृते तु 'उण्+इ+अत्' इति स्थिते "णि" इत्यस्य द्वित्वे 'मा भवानुणिणत्' इति स्यात् ओकारो न श्रूयेत इति स्थितिः । यदि तु नित्यत्वात् उपधाह्रस्वात् प्रागेव 'ओण्+इ+अ+त्' इत्यस्यां दशायां द्वित्वं स्यात् , तदा ओकारस्य उपधात्वाभावादेव ह्रस्वाप्रसक्तेस्तन्निषेधार्थमृदित्करणमनर्थकं स्यात् तस्मादुपधाह्रस्वात्मकमुपधाकार्यं द्वित्वात्प्रबलमिति विज्ञायते । इति । ननु भवतु उपधाह्रस्वो द्वित्वात् प्रबलः प्रकृते तु उपधागुणः कथं द्वित्वात् प्रबलः स्यादित्यत आह—असति बाधके ज्ञापकस्य सामान्यापेक्षत्वादिति शम् ।

## ५—प्रश्नोत्तराणि ।

अज धातोर्यङि यङ्लुकि च कृते लटि **'वेवीयते'** रूपं भविष्यतीति । **"अजेर्व्यघञपोः"** इति वीभावविधौ आर्धधातुके इत्यनुवृत्तं विषयसप्तम्यन्तमाश्रीयते, नतु परसप्तम्यन्तमिति । तेनार्धधातुकविषये यङि विवक्षिते ततः प्रागेव अजेर्वीभाव इत्यर्थः । एवं च कृते वीभावे हलादित्वाद्यङ्लभ्यते इति मत्वा आह–'वेवीयते' इति ।

ननु अजेर्वीभावानन्तरं यङि सति तस्य **"यङोऽचि च"** इति पाक्षिको लुक् कुतो नोदाह्रियते इत्यत आह—अस्य यङ्लुग्नास्तीति । लुका लुप्तयङः भाविज्ञानविषयत्वाभावेन वीभावस्याप्रवृत्तेरिति दिक् ।

ज्वरधातोर्यङि यङ्लुकि लटि तिपि **'जाज्वरीति'** **'जाजूर्ति'** इति च रूपे भविष्यतः ।

विद्वच्छब्दात् क्यङि लटस्तिपि **'विद्वायते'** **'विद्वस्यते'** इति च रूपे भविष्यतः ।

**यशस्विनमाचष्टे** इति विग्रहे णिचि धातुत्वाल्लटि **'यशस्यति'** इति रूपं भविष्यति ।

धनवन्तमाचष्टे इति विग्रहे णिचि धातुत्वाल्लटि **'धनयति'** इति रूपं भविष्यति।

## ६—प्रश्नोत्तराणि ।

'तृप् प्रीणने' इति । अयम्भावः—'प्रीणने' अर्थे धातुरयं साधु इत्यनुशासनात् तृपधातोः प्रीणनमर्थं इति । तत्र 'प्रीणनं' तृप्तिस्तर्पणाचेति । तत्र हेतुमाह—'नाग्निस्तृप्यति काष्ठानाम्' 'पितॄनतार्प्सीत्' इत्युभयत्र भट्टि योगदर्शनात्तथेति शम् ।

यम च परिवेषणे इति—चान्मिदित्यनुकृष्यते । यम्—धातुः परिवेषणे णिचं लभते । मित्कार्यभाक् चेति तदर्थः । 'परिवेषस्तु परिधिः' इति कोषात् परिवेषणमिह वेष्टनमिति । नतु भोजना नापि वेष्टनेति । अयम्भावः—घटादौ "यमोऽपरिवेषणे" इति पठितम् । तत्र परिवेषणमिति हेतुमण्ण्यन्तस्य रूपम् हेतुमण्ण्यन्तस्य हि भोजना-वेष्टना चार्थः तथा च—परिवेषणे इत्यनेन भोजनातो वेष्टनातश्चान्यत्र मित्वनिषेधेऽपि तयोरर्थयोस्त्वमन्तत्वादेव मित्वसिद्धेरिति । यद्यपि घटादौ यच्छति भोजनात्तोऽन्यत्र मिन्नेति व्याख्यातं तथाप्यत्रत्य ग्रन्थानुगुण्येनोपलक्षणतया तद्व्याख्येयमित्याहुः अत्रेदं बोध्यम्—घटादौ "यमोऽपरिवेषणे" इत्यत्र परिपूर्वकविषेर्णिजन्तस्य ल्युटि रूपम् । "यम च परिवेषणे" इत्यत्र तु केवलस्यैव ल्युटि रूपं नतु णिजन्तस्य । तथा च भोजनावद्वेष्टनाया अपि परिवेषणशब्दार्थत्वादुभयाप्यमन्तत्वेनैव मित्वं सिद्ध्यति । वेष्टने तु 'अपरिवेषण' इत्यनेन अमन्तत्वप्रयुक्तमित्वस्य निषेधेपि "यमच परिवेषणे" इत्यनेन मित्वं सिद्ध्यतीति दिक् ।

वृद्धौ सत्यां टिलोप इति अयंभावः परत्वाद्वृद्धौ सत्यां टिलोप इति वदतां मते "अपीपटत्" इति । णौ चङि इत्यत्र भाष्ये तु "वृद्धेर्लोपो बलीयानिति स्थितम् । तन्मते च 'अपपटत्' इति रूपं सिद्ध्यति । एतत्सर्वम् 'अपपटत्' इति साधनावसरे ९३ पृष्ठे द्रष्टव्यम् । तत्र प्रमाणन्तु—हकिकल्योरदन्तत्वनिपातनमेवेति शम् ।

---

१९२१

### ४ वर्षे २ पत्रम् ।

१—मेधारस्योर्यङि लिटि प्रथमपुरुषबहुवचने अपोपसृष्टकिरतेर्लुङि तिपि च रूपाणि संस्कृत्य आक्रमते, परिमृष्यति विवदन्ते, उप,

क्रमते, संगिरते, एषु विशेषकार्याणि वदत ।

२—बुभूषिष्यते, दायिषीष्ट, श्वः शीघ्रं वक्ष्यामः, जगाम किम्, एतानि विशेषकार्यविधायकसूत्रोपन्यासमुखेन साधयित्वा कर्मवत्कर्मणेति सूत्रे कर्मणेति किमिति किमुक्तं लिखत ।

३—इह भुञ्जीत भवान्, प्रवपणीयम, पण्या, लभ्यम्, पापचकः, गायनः, एषु विशेषकार्यं प्रदर्श्य दिवाविभेति सूत्रं सकलं सोदाहरणं विचार्य लिखत ।

४—कालि मन्या, शीतभोजी, दूनः, अभिशीनः, स्वान्तम्, मूर्त्तः, ग्लानः, एतानि साधयित्वा हस्-धातोर्भावकर्मणोः क्ते को विशेष इति स्पष्टमभिधीयताम् ।

५—शक्नोति भोक्तुम्, स्फालः, पूनिः, भुक्त्वा व्रजति ज्ञरीत्वा, एतेषु चतुर्णां तत्तद्विशेषसूत्रोपन्यासमुखेन साधुत्वं प्रतिपाद्यताम् ।

## १—प्रश्नोत्तराणि ।

'मेधा' इत्यस्माद्यकि लिटि प्रथमपुरुषबहुवचने मेधायाञ्चक्रुः—'आशुग्रहणार्थकात् 'मेधा' इत्यस्माद्धातोः "कण्ड्वादिभ्यो यक्" इत्यनेन यक्प्रत्यये अनुबन्धलोपे "सनाद्यन्ता धातवः" इत्यनेन धातुत्वाल्लिटि "कास्प्रत्ययादाममन्त्रे लिटि" इत्यनेनाम्प्रत्यये "अतो लोपः" इत्यनेनाकारस्य लोपे "आमः" इत्यनेन लिटो लुकि च कृते "कृञ्चानुप्रयुज्यते लिटि" इत्यनेन 'कृ' इत्यनुप्रयोगकलिट्प्रयोगे तरस्थाने प्रथमपुरुषबहुवचने झिप्रत्यये "लिटिधातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्याससंज्ञायाम्, "उरत्" इत्यत्वे रपरे च विहिते "हलादिः शेषः" इत्यनेन लोपे "कुहोश्चुः" इत्यनेन चुत्वे "झेर्जुस्" इत्यनेन जुसादेशेऽनुबन्धलोपे यणि च कृते मस्यानुस्वारे परसवर्णे सस्य रुत्वे विसर्गे च "मेधायाञ्चक्रुः" इति सिद्ध्यति ।

अरराञ्चक्रुः—आराकर्मणि इत्यर्थे वर्तमानात् 'अरर' इत्यस्माद्धातोर्यकि लिटि प्रथमपुरुषबहुवचने "अरराञ्चक्रुः" इति रूपं भविष्यति । तथाहि—"अरर्" इत्यस्माद्धातोः "कण्ड्वादिभ्यो यक्" इत्यनेन यक्प्रत्यये अनुबन्धलोपे "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लिटि "कास्प्रत्ययादाममन्त्रे

लिटि" इत्यनेनाम्प्रत्यये "अतो लोपः" इत्यनेनाकारस्य लोपे "यस्य हलः" इत्यनेन यलोपे च विहिते "आमः" इत्यनेन लिटो लुकि च कृते "कृञ्चानुप्रयुज्यते लिटि" इत्यनेन 'कृ' इत्यनुप्रयोगकलिट्प्रयोगे तत्स्थाने प्रथमपुरुषबहुवचने झिप्रत्यये "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्यासंज्ञायाम् "उरत्" इत्यत्वे रपरे च कृते हलादिः शेषे "कुहोश्चुः" इत्यनेन चुत्वे "झेर्जुस्" इत्यनेन जुसादेशेऽनुबन्धलोपे यणि मस्यानुस्वारे परसवर्णे सस्य रुत्वे विसर्गे "अररांचक्रुः" इति सिद्धयति।

अपोपसृष्टकिरतेर्लुङि तिपि "अपाकारीत्" इति रूपम् तथाहि—'अप' इत्युपसर्गपूर्वकात् 'कृ' इत्यस्माद्धातोर्लुङि तिपि अडागमे च विहिते अनुबन्धलोपे "च्लि लुङि" इत्यनेन च्लौ च्लेः सिजादेशे इचावितौ "आर्द्धधातुकस्येड्वलादेः" इत्यनेन इडागमे "अस्तिसिचोऽपृक्ते" इतीडागमे च कृते "इट ईटि" इत्यनेन सस्य लोपे वृद्धौ सवर्णदीर्घे "किरतौ लवने" इत्यनेन छेदेऽर्थे उपात्किरतेः सुडागमविधानात् "हिंसायां प्रतेश्च" इत्यनेन च हिंसायामेव तद्विधानादत्र तदप्रवृत्तौ "अपाकारीत्" इति रूपं सिद्धयति।

आक्रमते—इत्यत्र आङ् इत्युपसर्गपूर्वकात् क्रमूधातोः "आङ उद्गमने" इत्यनेनात्मनेपदे 'आक्रमते' सूर्य इति सिद्धयति। उदयते इति तदर्थः।

परिमृष्यति—परि इत्युपसर्गपूर्वकात् 'मृष्' इत्यस्माद्धातोः "परेर्मृषः" इत्यनेन परस्मैपदे 'परिमृष्यति' इति सिद्धयति।

विवदन्ते—इत्यत्र 'वि' इत्युपसर्गपूर्वात् 'वद्' इत्यस्माद्धातोः विमतौ "भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः" इत्यनेनात्मनेपदे क्षेत्रे 'विवदन्ते' इति सिद्धयति।

उपक्रमते—इत्यत्र उप इत्युपसर्गपूर्वकात् 'क्रम्' इत्यस्माद्धातोः "उपपराभ्याम्" इति नियमादात्मनेपदे 'उपक्रमते' इति सिद्धयति।

संगिरते—'सम्' इत्युपसर्गपूर्वकात् गिरतेः "समः प्रतिज्ञाने" इत्यनेनात्मनेपदे शब्दं नित्यं 'सङ्गिरते' इति सिद्धयति। 'प्रतिजानीते' इति तदर्थः।

## २—प्रश्नोत्तराणि।

बुभूषिष्यते—"भू" इत्यस्माद्धातोः सनन्तात् "सनाद्यन्ता धातवः" इत्यनेन धातुत्वाद्भावे लृटि आत्मनेपदे तप्रत्यये "स्यतासी लृलुटोः" इत्यनेन

स्यप्रत्यये च विहिते "स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च" इत्यनेन चिण्वद्भावे इटि च कृते द्वयोर्सकारयोर्षत्वे टेरेत्वे 'बुभूषिष्यते' इति सिद्ध्यति ।

दायिषीष्ट—"दा" इत्यस्माद्धातोर्भावेऽशीर्लिङि आत्मनेपदे तप्रत्यये "लिङः सीयुट्" इत्यनेन सीयुडागमे "सुट् तिथोः" इत्यनेन सुडागमे च विहितेऽनुबन्धलोपे सस्य षत्वे ष्टुत्वे च जाते "स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च" इत्यनेन चिण्वद्भावे इटि च कृते चिण्वद्भावे पक्षे "आतो युक् चिण्कृतोः" इत्यनेन युगागमेऽनुबन्धलोपे सीयुटोः सस्य षत्वे 'दायिषीष्ट' इति । चिण्वद्भावाभावे युगागमाभावेन "दासीष्ट" इति च सिद्ध्यति ।

श्वः शीघ्रं वप्स्यामः—इत्यत्र "क्षिप्रवचने लृट्" इत्यनेन लृट्लकारे 'श्वः शीघ्रं वप्स्यामः" इति सिद्ध्यति । अत्र सूत्रे "क्षिप्रवचने" इति वक्तव्ये लृड्ग्रहणं लुटोऽपि विषये यथा स्यादिति । अत्रोक्तप्रयोगे अनद्यतनत्वद्योतनाय श्वश्शब्दः । तेनात्र न लुडिति तद्भावः ।

जगाम किम्—इत्यत्र "प्रश्ने चासन्नकाले" इत्यनेन आसन्नकाले पृच्छ्यमानेऽर्थे लिड्विषये लङ्लिटोर्विधानादत्र लिट्लकारे 'जगाम किम्' इति सिद्ध्यति ।

"कर्मवत्कर्मणा तुल्यक्रियः" इति सूत्रे कर्मणेति—किम्–११० पृष्ठे द्रष्टव्यम् ।

## ३—प्रश्नोत्तराणि ।

इह भुञ्जीत भवान्—इत्यत्र निमन्त्रणे "विधिनिमन्त्रणामन्त्रणाऽधीष्टसम्प्रश्नप्रार्थनेषु लिङ्" इत्यनेन लिङ्लकारे 'इह भुञ्जीत भवान्' इति सिद्ध्यति ।

प्रवपणीयम्—"हलश्चेजुपधात्" इति सूत्रे इजुपधाद्ग्रहणाभावे 'प्रवपणीयम्' इत्यत्र प्रोपसर्गात् वप्धातोरनीयरप्रत्यये पूर्वोक्तसूत्रेण विकल्पेन णत्वापत्तिस्तद्वारणार्थमिजुपधाद्ग्रहणं कर्त्तव्यमिति शम् ।

पण्या—इत्यत्र "अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु" इति

सूत्रेण व्यवहारार्थकात् 'पण्' इत्यस्माद्धातोर्निपातनात् यत्प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वाट्टापि सौ सोर्लोपे 'पण्या' इति सिद्ध्यति ।

**लभ्यम्**—इत्यत्र लभ्धातोः "ऋहलोर्ण्यत्" इत्यनेन ण्यत्प्रत्यये प्राप्ते तदपवादभूतेन "पोरदुपधात्" इत्यनेन यत्प्रत्ययनेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे 'लभ्यम्' इति सिद्ध्यति ।

**पापचकः**— १६२ पृष्ठे द्रष्टव्यम् ।

**गायनः**—५३ पृष्ठे द्रष्टव्यम् ।

"दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु" इति निखिलसूत्रस्वरूपम् । अनेन हेतुताच्छील्यानुलोम्येषु अगम्येष्वपि दिवा, विभा, निशा, प्रभा, भास्' कार, अनन्त, आदि, बहु, नान्दी, किम्' लिपि, लिबि, बलि, भक्ति, कर्तृ, चित्र, क्षेत्र, संख्या, जङ्घा, बाहु, अहर, यद्, तद् , धनुस् , अरुस् , एषु उपपदेषु कृधातोष्टप्रत्ययविधानात् "दिवाकरः" इत्यत्र दिवा करोतीति विग्रहे कृधातोष्टप्रत्ययेऽनुबन्ध लोपे गुणे च विहिते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे 'दिवाकरः' इति सिद्ध्यति । एवं–विभां करोतीति 'विभाकरः' निशां करोतीति 'निशाकरः' इति एवं 'प्रभाकरः' इति । 'भास्करः' इत्यत्र भासः करोतीति विग्रहे "अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य" इत्यत्रात इति तपरकरणात्सत्वस्याप्राप्तेः "कुप्वोः ≍क ≍पौ च" इत्यनेन जिह्वामूलीयविसर्गावाशंक्य आह–कस्कादित्वात्स इति । कारकरः, अन्तकरः, अनन्तकरः, आदिकरः, इति सिद्धवत्कृत्य आह 'बहुकरः' इति ।

ननु संख्याग्रहणेनैव सिद्धे बहुग्रहणं व्यर्थमित्यत आह–बहुशब्दस्य वैपुल्यार्थेसंख्यापेक्षया पृथग्ग्रहणमिति । नान्दीकरः, किंकरः इति सिद्धवत्कृत्य आह–लिपिलिबिशब्दौ पर्यायाविति । तथा च–लिपिकरः, लिबिकरः, क्षेत्रकरः, इत्यन्तं सिद्धवत्कृत्य संख्यायां उदाह्रियते—एककरः, द्विकरः, इति । अहस्करः, इत्यत्र नञि जहातेरुत्पन्ने अहन्–शब्दे हन्शब्दस्योत्तरपदतया तद्विसर्गस्य उत्तरपदस्थत्वात् "अतःकृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य" इति सूत्राप्रवृत्तौ अहस्करशब्दे च "कुप्वोः≍क≍पौ च" इति जिह्वामूलीयविसर्गावाशङ्क्याह–कस्कादित्वात् सः । धनुष्करशब्दे प्रत्ययावयवत्वात् "इदुदुपध-

स्यचाऽप्रत्ययस्य" इत्यस्याप्रवृत्तौ "**नित्यं समासेऽनुत्तरपदस्थस्य**" इति षत्वम् । एवं '**अरुष्करः**' इति सिद्धयतीति च शम् ।

## ४—प्रश्नोत्तराणि ।

**कालिं मन्या**—इत्यत्र कालीमात्मानं मन्यते इत्यर्थे "**आत्ममाने खश्च**" इत्यनेन खशप्रत्यये अनुबन्धलोपे शित्वात्सार्वधातुकसंज्ञायां "**दिवादिभ्यः श्यन्**" इति श्यनि अनुबन्धलोपे "**स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणेस्त्रियामपूरणीप्रियादिषु**" इत्यनेन पुंवद्भावे प्राप्ते तम्प्रबाध्य "**खित्यनव्ययस्य**" इत्यनेन ह्रस्वे कृदन्तत्वात्प्रातिपदिकसंज्ञायां टापि प्रातिपदिकत्वात्सौ सोर्लोपे '**कालिं मन्या**' इति सिद्धयति ।

**शीतभोजी**—शीतं भोक्तुं शीलमस्या इति विग्रहे शीतोपपदात् भुज धातोः "**सुप्यजातौ णिनिस्ताच्छील्ये**" इत्यनेन णिनिप्रत्ययेऽनुबन्धलोपे लघूपधगुणे च कृते प्रातिपदिकत्वात्सौ दीर्घे सुलोपे नलोपे च विहिते '**शीतभोजी**' इति सिद्धयति ।

**दूनः**—७७ पृष्ठे द्रष्टव्यम् ।

**अभिशीनः**—अभिपूर्वकात् ङकारेत्संज्ञक 'श्यै' इत्यस्माद्धातोः "**क्तक्तवतू निष्ठा**" इत्यनेन निष्ठासंज्ञायां "**निष्ठा**" इत्यनेन क्तप्रत्ययेऽनुबन्धलोपे आत्वे च विहिते "**विभाषाभ्यवपूर्वस्य**" इत्यनेन विकल्पेन सम्प्रसारणे "**सम्प्रसारणाच्च**" इत्यनेन पूर्वरूपे "**अभि शित**" इति स्थिते "**श्योऽस्पर्शे**" इत्यनेन निष्ठातकारस्य नकारे "**हलः**" इत्यनेन दीर्घे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे "**अभिशीनः**" इति । सम्प्रसारणाभावे च '**अभिश्यानः**' इति च सिद्धयति ।

**स्वान्तम्**—इत्यत्र स्वनधातोः "**क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानिमन्थमनस्तमः सक्ताविस्पष्टस्वरानायासभृशेषु**" इत्यनेन निपातनात् क्तप्रत्ययेऽनुबन्धलोपे "**अनुनासिकस्य क्विझलोः क्ङिति**" इत्यनेन दीर्घे निपातनादिडभावे च कृते प्रातिपदिकत्वात्सौ सोरमादेशे '**स्वान्तम्**' इति सिद्धयति ।

**मूर्त्तः**—इत्यत्र 'मुर्च्छा' इत्यस्माद्धातोः निष्ठसंज्ञायां क्तप्रत्ययेऽनुबन्धलोपे "**राल्लोपः**" इत्यनेन छलोपे "**आदितश्च**" इत्यनेन इडभावे "**रदाभ्यां निष्ठातो नः पूर्वस्य च दः**" इत्यनेन नत्वे प्राप्ते "**न ध्याख्यापृमूर्च्छिम-**

ह्राम्" इत्यनेन निषेधे "हलि च" इत्यनेन दीर्घे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे 'मूर्त्तः' इति सिद्ध्यति ।

ग्लानः—"ग्लै" इत्यस्माद्धातोः निष्ठासंज्ञायां क्तप्रत्ययेऽनुबन्धलोपे "आदेच उपदेशेऽशिति" इत्यनेनात्वे "संयोगादेरातो धातोर्यण्वतः" इत्यनेन निष्ठातकारस्य नत्वे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे 'ग्लानः' इति सिद्ध्यति ।

हसितम्—इत्यत्र हस्—धातोः "नपुंसके भावे क्तः" इत्यनेन अकर्मकेभ्य एव नपुंसके भावे क्तप्रत्ययस्य विधानात् क्तप्रत्ययेऽनुबन्धलोपे वलादित्वादिडागमे प्रातिपदिकत्वात्सौ सोरमादेशे 'हसितम्' इति । "ल्युट् च" इत्यनेन नपुंसके ल्युटि तु 'हसनम्' इति च सिद्ध्यति ।

शक्नोति भोक्तुम्—२४ पृष्ठे द्रष्टव्यम् ।

स्फालः—'स्फुल्' इत्यस्माद्धातोः "भावे" इत्यनेन घञि अनुबन्धलोपे ञित्वादादिवृद्धौ "स्फुरतिस्फुलत्योर्घञि" इत्यनेनात्वे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे "स्फालः" इति सिद्ध्यति ।

पूनिः—१७६ पृष्ठे द्रष्टव्यम् ।

भुक्त्वा व्रजति—८७ पृष्ठे द्रष्टव्यम् ।

जरीत्वा—इत्यत्र 'जॄ' इत्यस्माद्धातोः "समानकर्तृकयोः पूर्वकाले" इत्यनेन क्त्वाप्रत्यये अनुबन्धलोपे वलादित्वादिडागमे प्राप्ते "श्र्युकः किति" इत्यनेन निषेधे "जॄव्रश्च्योः क्त्वि" इत्यनेन इडागमे गुणे रपरे च विहिते "वॄतो वा" इत्यनेन विकल्पेनेटो दीर्घे प्रातिपदिकत्वात्सौ सोर्लोपे 'जरीत्वा' इति दीर्घाभावे 'जरित्वा' इति च सिद्ध्यति ।

---

१९४०

४ वर्षे १ पत्रम् ।

१—आरत्, नेश्व, अमास्त, अमृक्षत्, अरिक्त, सञ्चस्करिव, मवान्धाम्, अपप्रथत्, अचिकीर्त्तत्, एषु पञ्चैव प्रयोगा विशेषशास्त्राणामर्थनिर्देशपुरस्सरं साधनीयाः ।

२—हिम्, जिघ्रातुभ्यां णिचि लटि आभ्शामेव सनि लटि च रूपाणि

स्यचाऽप्रत्ययस्य" इत्यस्याप्रवृत्तौ "नित्यं समासेऽनुत्तरपदस्थस्य" इति षत्वम् । एवं 'अरुष्करः' इति सिद्ध्यतीति च शम् ।

## ४—प्रश्नोत्तराणि ।

कालिं मन्या—इत्यत्र कालीमात्मानं मन्यते इत्यर्थे "आत्ममाने खश्च" इत्यनेन खशप्रत्यये अनुबन्धलोपे शित्वात्सार्वधातुकसंज्ञायां "दिवादिभ्यः श्यन्" इति श्यनि अनुबन्धलोपे "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणेस्त्रियामपूरणीप्रियादिषु" इत्यनेन पुंवद्भावे प्राप्ते तम्प्रबाध्य "खित्यनव्ययस्य" इत्यनेन ह्रस्वे कृदन्तत्वात्प्रातिपदिकसंज्ञायां टापि प्रातिपदिकत्वात्सौ सोर्लोपे 'कालिं मन्या' इति सिद्ध्यति ।

शीतभोजी—शीतं भोक्तुं शीलमस्या इति विग्रहे शीतोपपदात् भुज धातोः "सुप्यजातौ णिनिस्ताच्छील्ये" इत्यनेन णिनिप्रत्ययेऽनुबन्धलोपे लघूपधगुणे च कृते प्रातिपदिकत्वात्सौ दीर्घे सुलोपे नलोपे च विहिते 'शीतभोजी' इति सिद्ध्यति ।

दूनः—७७ पृष्ठे द्रष्टव्यम् ।

अभिशीनः—अभिपूर्वकात् ङकारेत्संज्ञक 'श्यै' इत्यस्माद्धातोः "क्तक्तवतू निष्ठा" इत्यनेन निष्ठासंज्ञायां "निष्ठा" इत्यनेन क्तप्रत्ययेऽनुबन्धलोपे आत्वे च विहिते "विभाषाभ्यवपूर्वस्य" इत्यनेन विकल्पेन सम्प्रसारणे "सम्प्रसारणाच्च" इत्यनेन पूर्वरूपे "अभि शित" इति स्थिते "श्योऽस्पर्शे" इत्यनेन निष्ठातकारस्य नकारे "हलः" इत्यनेन दीर्घे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे "अभिशीनः" इति । सम्प्रसारणाभावे च 'अभिश्यानः' इति च सिद्ध्यति ।

स्वान्तम्—इत्यत्र स्वनधातोः "क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानिमन्थमनस्तमः सक्ताविस्पष्टस्वरानायासभृशेषु" इत्यनेन निपातनात् क्तप्रत्ययेऽनुबन्धलोपे "अनुनासिकस्य क्विझलोः क्ङिति" इत्यनेन दीर्घे निपातनादिडभावे च कृते प्रातिपदिकत्वात्सौ सोरमादेशे 'स्वान्तम्' इति सिद्ध्यति ।

मूर्त्तः—इत्यत्र 'मुर्च्छा' इत्यस्माद्धातोः निष्ठसंज्ञायां क्तप्रत्ययेऽनुबन्धलोपे "राल्लोपः" इत्यनेन छलोपे "आदितश्च" इत्यनेन इडभावे "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इत्यनेन नत्वे प्राप्ते "न ध्याख्यापॄमूर्च्छिम-

द्वाम्" इत्यनेन निषेधे "हलि च" इत्यनेन दीर्घे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे 'मूर्त्तः' इति सिद्धयति।

ग्लानः—"ग्लै" इत्यस्माद्धातोः निष्ठासंज्ञायां क्तप्रत्ययेऽनुबन्धलोपे "आदेच उपदेशेऽशिति" इत्यनेनात्वे "संयोगादेरातो धातोर्यण्वतः" इत्यनेन निष्ठातकारस्य नत्वे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे 'ग्लानः' इति सिद्धयति।

हसितम्—इत्यत्र हस्—धातोः "नपुंसके भावे क्तः" इत्यनेन अकर्मकेभ्य एव नपुंसके भावे क्तप्रत्ययस्य विधानात् क्तप्रत्ययेऽनुबन्धलोपे वलादित्वादिडागमे प्रातिपदिकत्वात्सौ सोरमादेशे 'हसितम्' इति। "ल्युट् च" इत्यनेन नपुंसके ल्युटि तु 'हसनम्' इति च सिद्धयति।

शक्नोति भोक्तुम्—२४ पृष्ठे द्रष्टव्यम्।

स्फालः—'स्फुल्' इत्यस्माद्धातोः "भावे" इत्यनेन घञि अनुबन्धलोपे ञित्वादादिवृद्धौ "स्फुरतिस्फुलत्योर्घञि" इत्यनेनात्वे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे "स्फालः" इति सिद्धयति।

पूनिः—१७६ पृष्ठे द्रष्टव्यम्।

भुक्त्वा व्रजति—८७ पृष्ठे द्रष्टव्यम्।

जरीत्वा—इत्यत्र 'जॄ' इत्यस्माद्धातोः "समानकर्तृकयोः पूर्वकाले" इत्यनेन क्त्वाप्रत्यये अनुबन्धलोपे वलादित्वादिडागमे प्राप्ते "श्र्युकः किति" इत्यनेन निषेधे "जॄव्रश्च्योः क्त्वि" इत्यनेन इडागमे गुणे रपरे च विहिते "वॄतो वा" इत्यनेन विकल्पेनेटो दीर्घे प्रातिपदिकत्वात्सौ सोर्लोपे 'जरीत्वा' इति दीर्घाभावे 'जरित्वा' इति च सिद्धयति।

---

१९४०

## ४ वर्षे १ पत्रम्।

१—आरत्, नेश्व, अमास्त, अमृक्षत्, अरिक्त, सञ्चस्करिव, अवान्धाम्, अपप्रथत्, अचिकीर्त्तत्, एषु पञ्चैव प्रयोगा विशेषशास्त्राणामर्थनिर्देशपुरस्सरं साधनीयाः।

२—हिम, जिघ्रातुभ्यां णिचि लटि आभ्यामेव सनि लटि च रूपाणि

संसाध्य चुत्तावयिषति, इत्यत्र णौ द्वित्वात्प्रागन्तरङ्गत्वात् वृद्ध्या-वावादेशौ कुतो नेति शङ्का सप्रमाणं समाधेया।

३—चञ्चूर्यते, जेघ्नीयते, जङ्गहि, मतातः, एतान् संसाध्य यकारवकारान्तानान्तूठभाविनां यङ्लुङ्नास्तीत्यत्र प्रमाणं लिखत।

४—ओजायते, औजिढत, स्वमनायत, साधयति, एतानि संसाध्य हलिकल्योरदन्तत्वनिपातनस्य प्रयोजनं सोदाहरणं प्रदर्शयत।

५—आख्यानात् कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्ययापत्तिः प्रकृतिवच्च-कारकम् "आचारेऽवगल्भक्लीबहोढेभ्यः क्विब्वा वक्तव्यः" इति वार्तिके सोदाहरणे व्याख्येये।

६—पर्यस्कार्षीत्, न्यषीषहत्, सुष्यूषति, परिसिषिक्षति, एषां प्रयोगाणां साधुत्वमस्ति नवेति सप्रमाणं लिखत।

सूचना—एषु पञ्चैव समाधेयाः।

## १—प्रश्नोत्तराणि।

आरत्—'ऋ' इत्यस्माद्धातोर्लुङि तिपि अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे "च्लि लुङि" इत्यनेन च्लौ "सर्तिशास्त्यर्तिभ्यश्च" इत्यनेन च्लेरङादेशे "ऋदृशोऽङि गुणः" इत्यनेन गुणे रपरे च विहिते सवर्णदीर्घे 'आरत्' इति सिद्ध्यति।

नेश्व—अदर्शनार्थकात् 'णश्' इत्यस्माद्धातोर्लिटि वस्प्रत्यये 'णोनः' इत्यनेन नत्वे "लिटिधातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्याससंज्ञायां "हलादिः शेषः च कृते "अत एकहल्मध्येऽनादेशादेर्लिटि" इत्यनेन एत्वाभ्यासलोपे "रधादिभ्यश्च" इत्यनेन विकल्पे नेडागमे सस्य लोपे "नेशिव" इति इडभावे 'नेश्व' इति च सिद्ध्यति।

अमास्त—प्रक्षेपणार्थकात् मि इत्यस्माद्धातोर्लुङि आत्मनेपदे तप्रत्यये "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे "च्लि लुङि" इत्यनेन च्लौ च्लेः सिजादेशे इचावितौ "मिनातिमिनोतिदीङांल्यपि च" इत्यनेन आत्वे 'अमास्त' इति रूपं सिद्ध्यति।

अमृक्षत्—आमर्शनार्थकात् 'मृश्' इत्यस्माद्धातोर्लुङि तिपि अडागमे अनुबन्धलोपे "च्लि लुङि" इत्यनेन च्लौ "स्पृशमृशकृषतृपदृपां च्लेः सिजवा-

वाच्यः" इत्यनेन विकल्पेन सिजादेशे इचावितौ "अस्तिसिचोऽपृक्ते" इतीडागमे "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" इति विकल्पेनामागमे "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इत्यनेन षत्वे "षढोः कः सि" इत्यनेन षकारस्य ककारादेशे सस्य षत्वे च विहिते "वदव्रजहलन्तस्याचः" इत्यनेन वृद्धौ 'अम्राक्षीत्' इति । अमागमाभावे 'अमार्क्षीत्' इति । सिजभावे "शल इगुपधादनिटः क्सः" इत्यनेन क्सादेशे 'अमृक्षत्' इति च सिद्धयति ।

अरिक्त—विरेचनार्थकात्–इरेत्संज्ञक–'रिचू' इत्यस्माद्धातो लुँङि आत्मनेपदे तप्रत्यये अडागमे "च्लि लुङि" इति च्लौ च्लेः सिजादेशे इचावितौ "झलो झलि" इत्यनेन सलोपे "चोः कुः" इत्यनेन कुत्वे 'अरिक्त' इति सिद्धयति ।

संचस्करिव—'सम्' इत्युपसर्गपूर्वकात् कृ इत्यस्माद्धातोर्लिटि वस्प्रत्यये "सुट्कात्पूर्वः" इत्यनेन सुटि "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वे च प्राप्ते "पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेति" भाष्यात् धातूपसर्गकार्यमन्तरङ्गमिति अन्तरङ्गत्वात्पूर्वं सुटि ततो द्वित्वेऽभ्याससंज्ञायाम् "उरत्" इत्यत्वे रपरे "शर्पूर्वाः खयः" इत्यनेन रेफसकारयोर्निवृत्तौ अभ्यासचुत्वे इडागमे "ऋतश्च संयोगादेर्गुणः" इत्यनेन गुणे च विहिते सस्य लोपे 'संचस्करिव' इति रूपं सिद्धयति ।

ननु 'संचस्करिव' इत्यत्र "कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि" "ऋतो भारद्वाजस्य" इति च नियमादिण्निषेधः स्यादिति चेन्न । "कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि" इति सूत्रे "ऋतो भारद्वाजस्य" इति सूत्रे च "कृञोऽसुट इति वक्तव्यम्" । तेन ससुट्कात्परस्येट् स्यादेवे दिक् ।

अबान्धाम्— ४ पृष्ठे द्रष्टव्यम् ।

अपप्रथत्—६२ " "

अचिकीर्त्तत-५८ " "

## २—प्रश्नोत्तराणि ।

'स्मिङ' धातोर्णिचि लटि 'विस्मापयते' इति रूपं भविष्यति–तथाहि–'वि' इत्युपसर्गपूर्वकात् 'स्मिङ' इत्यस्माद्धातोः "हेतुमति च" इत्यनेन णिचि अनुबन्धलोपे णित्वाद्वृद्धौ "नित्यं स्मयतेः" इत्यनेन आत्वे पुगि च कृते उका-

वितौ "सनाद्यन्ता धातवः" इत्यनेन धातुत्वाल्लटि "भीस्म्योर्हेतुभये" इत्यनेनात्मनेपदे तप्रत्यये गुणेऽयादेशे टेरेत्वे 'विस्मापयते' इति सिद्धयति ।

'ज्ञि' इत्यस्माद्धातोर्णिचि लटि 'ज्ञापयति' इति रूपं भविष्यति । तथाहि-'ज्ञि' इत्यस्माद्धातोर्णिचि अनुबन्धलोपे णित्वाद्वृद्धौ "क्रीङ्जीनांणौ" इत्यनेनात्वे पुकि उकावितौ "सनाद्यन्ता धातवः" इत्यनेन धातुत्वाल्लटि तिपि अनुबन्धलोपे गुणेऽयादेशे 'ज्ञापयति' इति रूपं सिद्धयति । 'स्मि' इत्यस्माद्धातोर्सनि लटि 'सिस्मयिषते' इति रूपं भविष्यति । तथाहि 'स्मि' इत्यस्माद्धातोः "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इत्यनेन सनि अनुबन्धलोपे "सन्यङोः" इत्यनेन द्वित्वेऽभ्याससंज्ञायां हलादिः शेषे च विहिते "सनाद्यन्ता धातवः" इत्यनेन धातुत्वाल्लटि आत्मनेपदे तप्रत्यये "स्मिपूङ्रञ्ज्वशां सनि" इत्यनेन इडागमे गुणेऽयादेशे सस्य षत्वे टेरेत्वे 'सिस्मयिषते' इति रूपं सिद्धयति ।

'जि" इत्यस्माद्धातोर्सनि लटि "जिगीषति" इति रूपं भविष्यति । तथाहि-जिधातोर्सनि अनुबन्धलोपे "सन्यङोः" इति द्वित्वेऽभ्याससंज्ञायां "सनाद्यन्ता धातवः" इति धातुत्वाल्लटि तिपि इकारपकारसयोरित्संज्ञायां लोपे च कृते "सन्लिटोर्जेः" इत्यनेनाभ्यासात्परस्य जकारस्य कुत्वे दीर्घे षत्वे च विहिते 'जिगीषति' इति रूपं सिद्धयति ।

चुक्षावयिषति—इत्यत्र 'क्षु' इत्यस्माद्धातोर्ण्यन्तात्सनि सनो वलादित्वादिडागमे अनुबन्धलोपे द्विर्वचननिमित्तके कार्ये कर्तव्ये णिचि अजादेशो न स्यादिति ज्ञापितेन "ओः पुयण्ज्यपरे" इति सूत्रे वर्गप्रत्याहार-अज्ग्रहलिंगेन अजादेशयोर्वृद्ध्यवादेशयोर्निषेधात् "सन्यङोः" इत्यनेन क्षु शब्दस्य द्वित्वेऽभ्याससंज्ञायां "हलादिः शेषः" इत्यनेन लोपे "कुहोश्चुः" इत्यनेन चुत्वे णित्वाद्वृद्धौ आवादेशे "णेरनिटि" इत्यनेन णिलोपे गुणेऽयादेशे च सस्य षत्वे च विहिते "सनाद्यन्ता धातवः" इत्यनेन धातुत्वाल्लटि तिपि अनुबन्धलोपे 'चुक्षावयिषति' इति सिद्धयति ।

## ३—प्रश्नोत्तराणि ।

चञ्चूर्यते—३१ पृष्ठे द्रष्टव्यम् ।

जेघ्नीयते—"हन्" इत्यस्माद्धातोः "धातोरेकाचो हलादेः क्रिया-

समभिहारे यङ्" इत्यनेन यङि अनुबन्धलोपे "हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः" इत्यनेन घ्नीभावे "सन्यङोः" इत्यनेन द्वित्वेऽभ्याससंज्ञायां "हलादिः शेषः" इति लोपे च विहिते "कुहोश्चुः" इति चुत्वे जश्त्वे "गुणो यङ्लुकोः" इत्यनेनाभ्यासस्य गुणे "सनाद्यन्ता धातवः" इति धातुत्वाल्लटि आत्मनेपदे तप्रत्यये टेरेत्वे 'जेघ्नीयते' इति सिद्धयति ।

जङ्घहि—"हन्" इत्यस्माद्धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्"इत्यनेन यङि "यङोऽचि च" इत्यनेन लुकि प्रत्ययलोपे प्रत्ययलक्षणतया "सन्यङोः" इत्यनेन द्वित्वेऽभ्याससंज्ञाया हलादिः शेषे च विहिते "कुहोश्चुः" इत्यनेन चुत्वे "अभ्यासे चर्च" इत्यनेन जश्त्वे "अभ्यासाच्च" इत्यनेन हन्तर्हकारस्य कुत्वे "नुगतोऽनुनासिकान्तस्य" इति सूत्रेण नुगागमे उकावितौ अनुस्वारे परसवर्णे "सनाद्यन्ता धातवः" इति धातुत्वाल्लोटि सिपि अनुबन्धलोपे "सेर्ह्यपिच्च" इत्यनेन ह्यादेशे "अनुदात्तोपदेशवनोतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनेनानुनासिकलोपे "हन्तेर्जः" इत्यनेन जादेशे प्राप्ते 'श्तिपा शपानुबन्धेनेति' निर्देशान्तन्निषेधे "जङ्घहि" इति रूपं सिद्धयति ।

अतातः—"तॄ" इत्यस्माद्धातोर्यङि यङ्लुकि च कृते प्रत्ययलक्षणेन यङन्तत्वमाश्रित्य "सन्यङोः" इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् "उरत्" इत्यत्वे रपरत्वे "हलादिः शेषे" "दिर्घोऽकितः"इत्यनेन दीर्घे "यङो वा" इत्यनेन विकल्पेनेडागमे 'सनाद्यन्ता धातवः' इति धातुत्वाल्लङि तिपि अडागमे गुणे रपरे च विहिते 'अतातरीत्' इति । इडभावे शपि गुणो रपरे हल्ङ्यादिना सलोपे रेफस्य विसर्गे 'अतातः' इति च रूपं सिद्धयति ।

यकारवकारान्तानामिति—३० पृष्ठे द्रष्टव्यम् ।

## ४—प्रश्नोत्तराणि ।

ओजायते—१०५ पृष्ठे द्रष्टव्यम् ।
मौजिढत्—३१ " " ।
स्वमनायत्—९६ " " ।
साधयति—बाढशब्दाण्णिचि अनुबन्धलोपे अन्तिकबाढयोर्नेदसाधावित्युक्तेः

वाढशब्दस्य णौ साधादेशे धातुत्वाल्लटि तिपि अनुबन्धलोपे गुणे अयादेशे च विहिते 'साधयति' इति सिद्धयति ।

हलिकल्योरदन्तत्वनिपातनप्रयोजनमिति । वृद्धौ सत्यां टिलोप इति स्वीकारे एव हलिकल्योरदन्तत्वनिपातनस्य प्रयोजनं सम्भवतीति । अन्यथा 'अजीकलत्' 'अजीहलत्' इत्यादौ च पूर्वं टिलोपे अग्लोपित्वात् "नाग्लोपिशास्वृदिताम्" इत्यनेन सन्वद्भावनिषेधेन इत्वाप्राप्त्या तत्सिद्धयर्थं हलिकल्योरदन्तत्वं निपात्यते । तस्माच्च—वृद्धौ सत्यां टिलोप इति स्वीकारे पूर्वं वृद्धौ ततो टिलोपे अग्लोपित्वाभावेन निषेधाप्रवृत्त्या सन्वद्भावादित्वे 'अजीकलत्' 'अजीहलत' 'अपीपटत्' इत्यादयश्च सिद्धयन्तीति शम् ।

## ५—प्रश्नोत्तराणि ।

आख्यानात्कृतस्तदाचष्ट इति ४१ पृष्ठे द्रष्टव्यम् ।

"आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः" इति । आचारेर्थे एभ्यः क्विब्वा स्यादित्यर्थः वाग्रहात् क्यङपि अवगल्भादयः पचाद्यजन्ताः क्विप् सन्नियोगेनानुदात्तत्वमनुनासिकत्वं चाचप्रत्ययस्य प्रतिज्ञायते । तेन तङ् । अवगल्भते, क्लीबते होडते । भूतपूर्वादप्यनेकाच आम एतद्वार्तिकारम्भसामर्थ्यात् नच 'अवगल्भते' इत्यादिसिद्धिस्तत्फलम् केवलानामेवाचारेऽपि वृत्तिसम्भवात् । धातूनामनेकार्थत्वात् 'अवगल्भाञ्चक्रे' 'क्लीबाञ्चक्रे' 'होडाञ्चक्रे' ।

## ६—प्रश्नोत्तराणि ।

पर्यस्कार्षीत्—१६६ पृष्ठे द्रष्टव्यम् ।

न्यषीषहत्—'नि' इत्युपसर्गपूर्वकात्—'षह्' इत्यस्माद्धातोः "धात्वादेः षः सः" इत्यनेन सकारे तस्मात् "हेतुमति च" इत्यनेन णिचि अनुबन्धलोपे "सनाद्यन्ता धातवः" इत्यनेन धातुत्वाल्लुङि तिपि अडागमे अनुबन्धलोपे "च्लि लुङि" इत्यनेन च्लौ "णिश्रि द्रुस्रुभ्यः कर्त्तरि चङ्" इत्यनेन चङि "चङि" इत्यनेन द्वित्वेऽभ्याससंज्ञायां हलादिः शेषे च विहिते "णेरनिटि" इति णिलोपे सन्वद्भावे "सन्यतः" इतीत्वे "दीर्घो लघोः" इत्यनेन दीर्घे "परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्" इत्यनेन षत्वे प्राप्ते

"स्तम्भुसिवुसहां चङि" इत्यनेन निषेधे ततो यणि च कृते अभ्यासनिमित्तिकषत्वे "न्यसीषहत्" इति रूपं सिद्धयति । "न्यषीषहत्" इति षत्वघटितप्रयोगस्त्वत्राशुद्ध एवेति शम् ।

सुस्यूषति—उकारेत्संज्ञक सिव्धातोः "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इत्यनेन सनि "सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्" इत्यनेन विकल्पेनेड्विधानात् तदभावे "हलन्ताच्च" इत्यनेन सनः कित्वात् "च्छ्वोः शूडनुनासिके च" इति वकारस्योठि यणि "सन्यङोः" इत्यनेन प्रथमस्यैवकाचो "स्यू" शब्दस्य द्वित्वेऽभ्याससंज्ञायां ह्रस्वे "हलादिः शेषः" सस्य षत्वे च विहिते द्वितीयसकारस्यापि षत्वे प्राप्ते "स्तौतिण्योरेवषण्यभ्यासात्" इति सूत्रनियमात्तन्निषेधे "सुस्यूषति" इति । इट्पक्षे च—अझलादित्वात् सनः कित्वाभावेन "च्छ्वोः शूडनुनासिके च" इत्यस्याप्रवृत्तौ लघूपधगुणे "सिसेविषति" इति च रूपं सिद्धयति ।

परिषिषिक्षति—इत्यत्र 'परि' इत्युपसर्गपूर्वकात् 'षिच्' क्षरणे इत्यस्माद्धातोः "धात्वादेः षः सः" इत्यनेन सत्वे तस्मात्सनि अनुबन्धलोपे "सन्यङोः" इत्यनेन द्वित्वेऽभ्याससंज्ञायां "हलादिः शेषः" इत्यनेन लोपे सनः "हलन्ताच्च" इत्यनेन कित्वाल्लघूपधगुणाऽभावे अभ्यासेणः परस्य सस्य चेत् षत्वं तर्हि स्तौतिण्योरेवेति "स्तौतिण्योरेव षण्यभ्यासात्" इति सूत्रस्थ नियमनात् मध्येऽपवादन्यायात् "आदेशप्रत्यययोः" इति इत्यनेन षत्वाभावेपि उपसर्गात्तु "स्थादिष्वभ्यासेनचाभ्यासस्य" इत्यनेन षत्वे "चोः कुः" इति कुत्वे सस्य षत्वे धातुत्वाल्लटि तिपि "परिषिषिक्षते" इति षत्वघटित प्रयोग एव साधुरिति ।

---

१९४०

४ वर्षे २ पत्रम् ।

१—सपरलाटयोः आङ्पूर्वाद्धन्तेश्च लुङि प्रथमपुरुषैकवचने रूपाणि प्रसाध्य, रामः सीतामुपायत । गर्धयते अध्यापयति, विरमति, वासयते, एषु विशेषकार्याणि प्रकटयत ।

२—भाविषीष्ट, भावयामासे, आरिता, उदशिश्रियत, पुरा भुङ्क्ते, अपि धास्यति द्वारम्, यजतां भवान्, एते प्रयोगाः सूत्रोपन्या-

सपूर्वकं तत्तत्कार्यप्रदर्शनद्वारा संस्करणीयाः। कृत्यक्तखलर्थाः कर्मकर्त्तरि भवन्ति नवेति विविच्योच्यताम्।

अथवा—

बोभूय्यते, घानिषीष्ठ, ओदनः पच्यते, नाहं कलिङ्गाञ्जागाम, कच्चिज्जीवति, ऊर्ध्वं मुहूर्त्ताद् यजतां स्म, एतान् तत्तत्कार्यप्रदर्शकसूत्रोपन्यासपूर्वकं संस्कृत्य "अजां ग्रामं नयति" इत्यत्र कर्मस्थक्रियात्वमुपपाद्य यगात्मनेपदाऽभावावुपपाद्यौ।

३—प्रेङ्खणीयम्, जन्यम्, आज्यम्, द्विषतीतापः" क्षीरपायिणाः उशीनराः, स्त्रीम्मन्यः, समक्नः, प्रमुदितः, दितः, उपेयुषी त्यागी, अजस्रम्, पविश्रम्, एतेषु सप्तैव प्रयोगाः साधनीयाः।

४—अरित भोक्तुम्, उपाध्यायः, कायः, परिघः, भृत्या, निपठतिः, ईषदाढ्यङ्करः, व्रश्चित्वा, प्रणम्य, प्रवाय, लम्भंलम्भम्, दण्डेनोपघातम्, गेहानुप्रवेशमास्ते, मुखतो भूत्वा, एतेषु सप्तैव प्रयोगाः साधनीयाः।

५—"चिण्णमुलोर्दीर्घोऽन्यतरस्याम्" "राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः" इति सूत्रे सोदाहरणे स्पष्टं व्याख्येये।

## १—प्रश्नोत्तराणि।

पूजार्थकात् स्पर—इत्यस्माद्धातोर्लुङि प्रथमपुरुषैकवचने "अस्पारीत्" इति रूपं भविष्यति। तथाहि—स्परधातोर्लुङि तिपि अडागमे अनुबन्धलोपे "च्लि लुङि" इति च्लौ च्लेः सिचि इचावितौ "आर्धधातुकस्येड्वलादेः" इत्यनेन इडागमे "अस्तिसिचोऽपृक्ते" इतीडागमे च विहिते "इट ईटि" इत्यनेन सिचो सकारस्य लोपे वृद्धौ "अस्पारीत्" इति सिद्ध्यति।

'लाट' इत्यस्माद्धातोर्लुङि प्रथमपुरुषैकवचने "अलाटीत्" इति रूपं भविष्यति। तथाहि-जीवनार्थकात् लाट-इत्यस्माद्धातोर्लुङि तिपि अडागमे अनुबन्धलोपे "च्लि लुङि" इति च्लौ च्लेः सिजादेशे इचावितौ वलादित्वादिडागमे ईडागमे च विहिते "इट ईटि" इति सलोपे सवर्णदीर्घे वृद्धौ 'अलाटीत्' इति रूपं सिद्ध्यति।

आङ्पूर्वाद्धन्तेर्लुङि प्रथमपुरुषैकवचने आत्मनेपदे 'आवधिष्ट' "आ-

हत" इति द्वे रूपे भविष्यतः । तथाच—आङ्पूर्वाद्धन्धातोर्लुङि आत्मनेपदे तप्रत्यये अडागमे "च्लि लुङि" इति च्लौ च्लेः सिजादेशे इचाविती वलादित्वादिडागमे "आत्मनेपदेष्वन्यतरस्याम्" इत्यनेन विकल्पेन हनो वधादेशे सस्य षत्वे ष्टुत्वे च विहिते 'आवधिष्ट' इति । वधादेशाऽभावे—"हनः सिच्" इत्यनेन कित्संज्ञायाम् "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनेनानुनासिकनकारस्य लोपे "ह्रस्वादङ्गात्" इति सिचो सस्य लोपे "आहत" इति च रूपं सिद्ध्यति ।

रामः सीतामुपायत—'उप' इत्युपसर्गपूर्वकात् यम् धातोर्लुङि आत्मनेपदे तप्रत्यये अडागमे च्लौ च्लेः सिजादेशे च विहिते अडागमे अनुबन्धलोपे "विभाषोपयमने" इत्यनेन सिचः विकल्पेन कित्संज्ञायामनुनासिकलोपे "ह्रस्वादङ्गात्" इति सलोपे 'रामः सीतामुपायत' इति । किदभावे—मस्यानुस्वारे 'उपायंस्त' इति च सिद्ध्यति ।

गर्धयते—इत्यत्र ण्यन्ताद् "गृधि" इत्यस्माद्धातोः "गृधिवञ्च्योः प्रलम्भने" इत्यनेनात्मनेपदे 'गर्धयते' इति सिद्ध्यति ।

अध्यापयति—'अधि' इत्युपसर्गपूर्वकात् ण्यन्तात् इङ् इत्यस्माद्धातोः "बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः" इत्यनेन परस्मैपदे 'अध्यापयति' इति रूपं सिद्ध्यति ।

विरमति—९१ पृष्ठे द्रष्टव्यम् ।

वासयते—२२ ,, ,,

## २—प्रश्नोत्तराणि ।

भाविषीष्ट—"भू" इत्यस्माद्धातोर्णिचि अनुबन्धलोपे णित्वाद्वृद्धावावादेशे 'भावि' इत्यस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसञ्ज्ञायामाशीर्लिङि तिपि अनुबन्धलोपे सीयुडागमे सुडागमे च विहिते उटाविती 'भावि + सी + स + त्' इति स्थिते परत्वाद्वलादिलक्षणमिटं बाधित्वा चिण्वदिटि तस्याभीयत्वेनासिद्धत्वादनिटीति निषेधाभावाण्णिलोपे द्वयोः सकारयोः षत्वे ष्टुत्वे 'भाविषीष्ट' इति । वलादिलक्षणे इटि कृते तु तस्य अनाभीयत्वेन असिद्धत्वाभावादनिटीति निषेधाण्णिलोपाभावे णेर्गुणायादेशयोः कृतयोः 'भावयिषीष्ट' इति च रूपं सिद्ध्यति ।

भावयामासे—१२९ पृष्ठे द्रष्टव्यम् ।

आरिता— ९८ ,, ,, ।

उदशिश्रियत—इत्यत्र 'उत्' उपसर्गपूर्वकात् "श्रि" इत्यस्माद्धातोर्णिचि अनुबन्धलोपे "सनाद्यन्ता धातवः" इत्यनेन धातुत्वाल्लुङि आत्मनेपदे तप्रत्यये "च्लि लुङि" इत्यनेन च्लौ कर्मवत्वेऽपि चिण्भावात् "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इत्यनेन चङि "चङि" इत्यनेन द्वित्वेऽभ्याससञ्ज्ञायां हलादिःशेषे अडागमे च विहिते "णेरनिटि" इत्यनेन णिलोपे इयङादेशेऽनुबन्धलोपे 'उद-शिश्रियत" इति सिद्ध्यति ।

पुरा भुङ्क्ते—इत्यत्र 'पुरा' पदे प्रयुज्यमाने "यावत्पुरानिपातयोर्लट्" इत्यनेन लट्लकारे "पुरा भुङ्क्ते" इति सिद्ध्यति ।

अपि धास्यति द्वारम्—इत्यत्र "उताप्योः समर्थयोर्लिङ्" इति सूत्रे समर्थयोर्ग्रहणाभावे अत्रापि लिङ्लकारापत्तिस्तद्वारणार्थं समर्थयोरिति ग्रहणमावश्यकमिति ।

यजतां भवान्—इत्यत्र "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च" इत्यनेन लोट्लकारे 'यजतां भवान्' इति सिद्ध्यति ।

कृत्यक्तखलर्थाः कर्मकर्त्तरि भवन्ति नवेति १६० पृष्ठे द्रष्टव्यम् ।

अथवा—

बोभूय्यते—'भू' इत्यस्माद्धातोः "धातोरेकाचोहलादेः क्रियासमभिहारे यङ्" इत्यनेन यङ्प्रत्यये अनुबन्धलोपे "सन्यङोः" इति द्वित्वेऽभ्याससञ्ज्ञायां "ह्रस्वः" इत्यनेन ह्रस्वे "अभ्यासे चर्च" इत्यनेन जश्त्वे गुणे च विहिते बोभूय—इति यगन्ताद्भावे लटि आत्मनेपदे तप्रत्यये सार्वधातुकसञ्ज्ञायां "सार्वधातुके यक्" इत्यनेन यकि अनुबन्धलोपे "अतो लोपः" इत्याकारस्य लोपे टेरेत्वे 'बोभूय्यते' इति रूपं सिद्ध्यति ।

घानिषीष्ट—१४६ पृष्ठे द्रष्टव्यम् ।

'ओदनः पच्यते' इत्यत्र यथा 'देवदत्तः ओदनं पचति' इति किं देवदत्तः ओदनं पचति, ओदनः स्वयमेव पच्यते इति विवक्षायां "कर्मवत्कर्मणा तुल्यक्रियः" इत्यनेन कर्मवद्भावविधानेन यकि कर्तुरभिहितत्वाच्च प्रथमाविधानेन 'ओदनः पच्यते' इति सिद्ध्यति ।

**नाहं कलिङ्गाञ्जगाम**—इत्यत्र "अत्यन्तापह्नवे लिड्वक्तव्यः" इति वार्तिकेन लिट्लकारे "नाहं कलिङ्गाञ्जगाम" इति सिद्ध्यति ।

**'कच्चिज्जीवति'**—इत्यत्र "कामप्रवेदनेऽकच्चिति" इति सूत्रे 'अकच्चिति' ग्रहणाभावे अत्रोक्तप्रयोगेपि लिङापत्तिस्तद्वारणाय तद्ग्रहणमावश्यकमिति ।

**ऊर्द्ध्वं मुहूर्त्ताद् यजतां स्म**—इत्यत्र "स्मे लोट्" इत्यनेन लोयवलकारे विहिते "ऊर्द्ध्वं मुहूर्त्ताद् यजतां स्म" इति सिद्ध्यति ।

**अजा ग्रामं नयति**—इत्यत्र देवदत्तः ग्रामे अजां नयति, इति किं देवदत्तः ग्रामे अजां नयति, स्वयमेव अजा ग्रामं नयति इति विवक्षायां "सकर्मकाणां प्रतिषेधो वक्तव्यः" इति वार्तिकेन नयते द्विकर्मकतया अजारूपकर्मणः कर्तृत्वविवक्षायां कर्मस्थया क्रियया तुल्यक्रियत्वसत्वात् प्राप्तस्य कर्मवद्भावस्य ग्रामरूपकर्मणा सकर्मकत्वान्निषेधे न तत्प्रयुक्तयगादिकमिति शम् ।

## ३—प्रश्नोत्तराणि ।

**प्रेङ्खणीयम्**—प्रोपसर्गपूर्वकात् 'इखू' इत्यस्माद्धातोः "तव्यत्तव्यानीयरः" इत्यनेनानीयर् प्रत्ययेऽनुबन्धलोपे इदित्वान्नुमि उभावितौ "इजादेः सनुमः" इत्यनेन णत्वे नस्यानुस्वारे परसवर्णे गुणे च विहिते प्रातिपदिकत्वात्सौ सोरमादेशे 'प्रेङ्खणीयम्' इति सिद्ध्यति ।

**जन्यम्**—५२ पृष्ठे द्रष्टव्यम् ।

**आज्यम्**—इत्यत्र 'आङ्' इत्युपसर्गपूर्वकात् उकारेत्सञ्ज्ञक 'अञ्ज्' इत्यस्माद्धातोः "आङ्पूर्वादञ्जेः सञ्ज्ञायामुपसंख्यानम्" इति वार्तिकेन बाहुलकात्करणे क्यप्प्रत्ययेऽनुबन्धलोपे "अनिदितां हल उपधायाः क्ङिति" इत्यनेन नलोपे प्रातिपदिकत्वात्सौ सोरमादेशे 'आज्यम्' इति सिद्ध्यति ।

**द्विषतीतापः**—इत्यत्र द्विषतीं तापयतीति विग्रहे "द्विषत्परयोस्तापेः" इत्यनेन यथा 'द्विषन्तपः' इत्यादौ खचि कृते ह्रस्वत्वेन तत्सिद्ध्यति । एवमेव लिङ्गविशिष्टपरिभाषया द्विषतीशब्देऽप्युपपदे तापेः खचि ह्रस्वत्वात् 'द्विषतीतपः' इति स्यात् । 'द्विषतीतापः' इत्यणन्तं च न स्यादत आह—"शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुष्षुग्रहेरुपसंख्यानम्" इत्यत्र घटग्रहणेनैव लिङ्गविशिष्टपरिभाषया घटीशब्दस्यापि सिद्धे पुनर्घटीग्रहणात् लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्नात्र ह्रस्व इति दिक् ।

**क्षीरपायिणः उशीनराः**—इत्यत्र क्षीरं पिबन्तीति विग्रहे "**बहुलमाभीक्ष्ण्ये**" इत्यनेन णिनिप्रत्ययेऽनुबन्धलोपे "**आतो युक् चिण्कृतोः**" इत्यनेन युगागमे उगावितौ णत्वे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च विहिते '**क्षीरपायिणः उशीनराः**' इति सिद्ध्यति ।

**स्त्रीम्मन्यः**—इत्यत्र स्त्रियमात्मानं मन्यत इति विग्रहे मन्–धातोः "**आत्ममाने खश्च**" इत्यनेन खश् प्रत्ययेऽनुबन्धलोपे शित्वात्सार्वधातुकसञ्ज्ञायां श्यनि "**इच एकाचोऽम्प्रत्ययवच्च**" इत्यनेन अम् प्रत्यये "**वाऽम्शसोः**" इत्यनेन विकल्पेनेयङादेशे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे '**स्त्रियम्मन्यः**' इति । इयङादेशाभावे—'**स्त्रीम्मन्यः**' इति सिद्ध्यति ।

**समक्नः**—१३ पृष्ठे द्रष्टव्यम् ।

**प्रमुदितः**—प्रोपसर्गपूर्वकात् 'मुद्' इत्यस्माद्धातोः निष्ठासञ्ज्ञायां "**निष्ठा**" इत्यनेन क्तप्रत्ययेऽनुबन्धलोपे वलादित्वादिडागमे "**उदुपधाद्भावादिकर्मणोरन्यतरस्याम्**" इत्यनेन विकल्पेन किन्निषेधे कित्वाल्लघूपधगुणाभावे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे '**प्रमुदितः**' इति सिद्ध्यति, किन्निषेधे च लघूपधगुणे प्रातिपदिकत्वात्सौ रुत्वविसर्गे '**प्रमोदितः**' इति च सिद्ध्यति ।

**दितः**—इत्यत्र 'दोऽवखण्डने इत्यस्माद्धातोः निष्ठासञ्ज्ञायां क्तप्रत्ययेऽनुबन्धलोपे "**घुमास्थागापाजहातिसां हलि**" इत्यनेन ईत्वं "**दोदद्घोः**" इत्यनेन दद्भावश्चापवादत्वात्प्रबाध्य "**द्यतिस्यतिमास्थादीनामित्ति किति**" इत्यनेन इकारान्तादेशे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे '**दितः**' इति सिद्ध्यति ।

**उपेयुषी**—उपपूर्वात् 'इण्' धातोः लिटः "**उपेयिवाननाश्वाननूचानश्च**" इत्यनेन क्वसुप्रत्ययेऽनुबन्धलोपे नित्यत्वाद्द्वित्वे वलादित्वादिडागमे प्राप्ते तस्य च "**नेड्वशि कृति**" इति निषेधे पुनः क्रयादिनियमादिडागमे प्राप्ते "**वस्वेकाजाद्घसाम्**" इत्यनेन च नियमान्निषेधे प्राप्ते तस्यानेन सूत्रेण निपातनादिडागमे स्त्रीत्वविवक्षायां "**उगितश्च**" इत्यनेन ङीपि वसोः सम्प्रसारणे षत्वे च विहिते प्रातिपदिकत्वात्सौ सोर्लोपे '**उपेयुषी**' इति सिद्ध्यति ।

**त्यागी**—इत्यत्र त्यज्धातोः "**सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसञ्ज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुह-**

दुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च" इत्यनेन घिनुण्प्रत्यये अनुबन्धलोपे णित्वादादिवृद्धौ "चजोः कुघिण्ण्यतोः" इत्यनेन कुत्वे निष्पन्नस्य त्यागिन् शब्दस्य कृदन्तत्वात्प्रातिपदिकसञ्ज्ञायां सौ दीर्घे सुलोपे नलोपे च विहिते 'त्यागी' इति सिद्ध्यति ।

अजस्रम्—इत्यत्र 'जसु मोक्षणे' अयं नञ्पूर्वः शक्तिस्वभावात्क्रियासातत्ये वर्तते । निपातनाद्धातुना नञः समासे 'नलोपो नञः' इति नलोपे निष्पन्नात् अजस् इत्यस्मात् "नमिकम्पिस्म्यजसकमहिंसदीपो रः" इत्यनेन रप्रत्यये कृदन्तत्वात्प्रातिपदिकसञ्ज्ञायां सौ सोरमादेशे 'अजस्रम्' इति सिद्ध्यति ।

पवित्रम्—१३१ पृष्ठे द्रष्टव्यम् ।

## ४—प्रश्नोत्तराणि ।

अस्ति भोक्तुम्—इत्यत्र "शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्" इति सूत्रे अर्थग्रहणमस्तिनैव सम्बध्यते । अनन्तरत्वात् । ततश्चात्रोक्तसूत्रेण भुज्धातोस्तुमुन्प्रत्यये अनुबन्धलोपे लघूपधगुणे कुत्वे चर्त्वे च विहिते प्रातिपदिकत्वात्सौ सोरमादेशे 'अस्ति भोक्तुम्' इति सिद्ध्यति ।

उपाध्यायः—७८ पृष्ठे द्रष्टव्यम् ।

कायः—इत्यत्र शरीरे चीयतेऽस्मिन्नस्थ्यादिकमिति विग्रहे 'चि' धातोः "निवासचितिशरीरोपसमाधानेष्वादेश्च कः" इत्यनेन घञ्प्रत्यये अनुबन्धलोपे आदेश्च ककारादेशे ञित्वादादिवृद्धौ आयादेशे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च विहिते 'कायः' इति सिद्ध्यति ।

परिघः—इत्यत्र 'परि' इत्युपसर्गपूर्वकात् 'हन्' धातोः करणे "परौ घः" इति सूत्रेण अप् प्रत्ययेऽनुबन्धलोपे घशब्दश्चादेशे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे 'परिघः' इति सिद्ध्यति ।

भृत्या—इत्यत्र अकारेत्सञ्ज्ञक 'भृ' इत्यस्माद्धातोः "सञ्ज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः" इत्यनेन क्यप्प्रत्ययेऽनुबन्धलोपे तुगागमे उकावितौ कृदन्तत्वात्प्रातिपदिकसञ्ज्ञायां टापि सौ सोर्लोपे 'भृत्या' इति सिद्ध्यति ।

निपठितिः—इत्यत्र 'नि' इत्युपसर्गपूर्वकात् 'पठ्' इत्यस्माद्धातोः "स्त्रियां क्तिन्" इत्यनेन क्तिन्प्रत्ययेऽनुबन्धलोपे वलादित्वादिडागमे प्राप्ते "तितुत्रतथ-

सिसुसरकसेषु च" इत्यनेन निषेधे पुनः "तितुत्रेष्वग्रहादीनामिति वाच्यम्" इति वार्तिकेनेडागमे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे 'निपठितिः' इति सिद्धयति ।

**ईषदाढयङ्करः**—इत्यत्र "कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम्" इत्यनेन खल्प्रत्ययेऽनुबन्धलोपे खित्वान्मुमागमे उमावितौ मस्यानुस्वारे परसवर्णे च विहिते गुणे प्रादिपदिकत्वात्सौ रुत्वे विसर्गे 'ईषदाढयङ्करः' इति सिद्धयति ।

**व्रश्चित्वा**—इत्यत्र व्रश्च् धातोः क्त्वाप्रत्ययेऽनुबन्धलोपे "जॄव्रश्च्योः क्त्वि" इत्यनेन इडागमे प्रातिपदिकत्वात्सौ सोर्लोपे 'व्रश्चित्वा' इति सिद्धयति ।

**प्रणम्य**—इत्यत्र प्रोपसर्गपूर्वकात् 'नम्' धातोः क्त्वाप्रत्यये "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इत्यनेन विकल्पेन ल्यबादेशेऽनुबन्धलोपे "वा ल्यपि" इत्यनेन विकल्पेनानुनासिकलोपे तुकि प्रातिपदिकत्वात्सौ सोर्लोपे 'प्रणत्य' इति । अनुनासिकलोपाभावे—'प्रणम्य' इति सिद्धयति ।

**प्रवाय**—प्रोपसर्गपूर्वकात् 'वे' इत्यस्माद्धातोः क्त्वाप्रत्यये तस्य ल्यबादेशे सम्प्रसारणे प्राप्ते "ल्यपि च" इत्यनेन निषेधे आत्वे च विहिते प्रातिपदिकत्वात्सौ सोर्लोपे 'प्रवाय' इति सिद्धयति ।

**लम्भं लम्भम्**—इत्यत्र 'ल' इत्यस्माद्धातोः "आभीक्ष्ण्ये णमुल् च" इत्यनेन णमुलि अनुबन्धलोपे "चिण्णमुलोर्दीर्घोऽन्यतरस्याम्" इत्यनेन विकल्पेन दीर्घे प्रातिपदिकत्वात्सौ सोरमादेशे 'लाभं लाभम्' इति । दीर्घाभावे "विभाषा चिण्णमुलोः" इत्यनेन विकल्पेन नुमागमे उमावितौ नस्यानुस्वारे परसवर्णे च विहिते प्रातिपदिकत्वात्सौ सोरमादेशे 'लम्भं लम्भम्' इति च सिद्धयति ।

**दण्डेनोपघातम्**—१७६ पृष्ठे द्रष्टव्यम् ।

**गेहानुप्रवेशमास्ते**—इत्यत्र सर्वाणि गेहान्यनुप्रविश्येति पुनःपुनर्गेहमनुप्रविश्येति वा विग्रहे द्वितीयान्त उपपदे विश्यादिभ्यो व्याप्यमाने आसेव्यमाने चार्थे "विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः" इत्यनेन णमुलि अनुबन्धलोपे लघूपधगुणे प्रातिपदिकत्वात्सौ सोर्लोपे 'गेहानुप्रवेशमास्ते' इति सिद्धयति ।

**मुखतो भूत्वा**—इत्यत्र तस्प्रत्ययान्ते स्वाङ्गे उपपदे भूधातोः "स्वाङ्गे तस्प्रत्यये कृभ्वोः" इत्यनेन क्त्वाप्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ सोर्लोपे 'मुखतो भूत्वा' इति सिद्धयति ।

## ९—प्रश्नोत्तराणि ।

च्विएणमुलोर्दीर्घोऽन्यतरस्याम्—१२ पृष्ठे द्रष्टव्यम् ।

"राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याऽव्यथ्याः" इति—एते सप्त क्यबन्ता निपात्यन्ते इति सूत्रार्थः । तत्र "राजसूयः" इत्यत्र राज्ञा सोतव्योऽभिषवद्वारा निष्पादयितव्य इति विग्रहे 'राजन्' इत्युपपदात् 'सु' इत्यस्माद्धातोः पूर्वोक्तसूत्रेण निपातनात् क्यप्प्रत्ययेऽनुबन्धलोपे निपातनात् दीर्घे च विहिते प्रातिपदिकत्वात्सौ सोर्लोपे 'राजसूयः' इति सिद्धयति ।

सूर्यः—इत्यत्र सरत्याकाशे इति विग्रहे सृधातोः पूर्वोक्तसूत्रेण क्यपि अनुबन्धलोपे निपातनादुत्वे दीर्घे च विहिते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे 'सूर्यः' इति सिद्धयति ।

मृषोद्यम्—इत्यत्र मृषोपपदाद्वदेः कर्मणि नित्यं क्यपि "वचिस्वपियजादीनां किति" इति सम्प्रसारणे प्रातिपदिकत्वात्सौ सोरमादेशे 'मृषोद्यम्' इति सिद्धयति ।

रुच्यः—इत्यत्र रुच्धातोः क्यपि प्रातिपदिकत्वात्सौ रुत्वे विसर्गे 'रुच्यः' इति सिद्धयति ।

कुप्यः—इत्यत्र पूर्वोक्तसूत्रेण गुप्धातोः क्यपि निपातनात् प्रकृतेरादिवर्णस्य ककारादेशे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे 'कुप्यः' इति सिद्धयति ।

कृष्टपच्याः—इत्यत्र कृष्टप्रदेशे ये स्वयं पच्यन्ते फलन्ति ते इति विग्रहे उक्तसूत्रेण क्यप्प्रत्यये अनुबन्धलोपे प्रातिपदिकत्वाज्जसि जकारस्येत्संज्ञायां लोपे पूर्वसवर्णदीर्घे सस्य रुत्वे विसर्गे 'कृष्टपच्याः' इति सिद्धयन्ति ।

अव्यथ्यः—इत्यत्र न व्यथते इति विग्रहे उक्तसूत्रेण निपातनात् कर्त्तरि क्यपि अनुबन्धलोपे नञ्समासे नलोपे च विहिते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे 'अव्यथ्यः' इति सिद्धयति ।

अशेषफलदातारं विद्याध्वान्तविनाशकम् ।
ध्यायं ध्यायं [श्री] गुरुपदं सादरं समर्प्यते भक्त्या ॥

इति शुभम् ।

---

# व्याकरणमध्यमाचतुर्थखण्डे प्रश्नाः ।

## १९०१ । १ पत्रम् ।

१—विपूर्त्तः, ऐयः, घत्तः, दिद्वीये, एधिता, चिक्राय, उद्विजिष्यते, इमानि रूपाणि साधनीयानि ।

२—इन्धे, विस्कभ्नाति, विस्कभ्नोति, आयष्ट, ब्रवीमि, इमानि साधनीयानि ।

३—अववेष्टत्, प्राणिणत्, ईप्सति, दित्सति, चञ्चूर्यते, एतानि रूपाणि साध्यन्ताम् ।

४—चर्कर्यात्, तोतूर्त्तः, गार्गीयति, इदामति, स्वमनायते, इति रूपाणि सम्यक् साधनीयानि ।

## १९०१ । २ पत्रम् ।

१—कृष्णाय, शपते, उद्यायत, संविद्रते, सविषो, जानीते, उद्युङ्क्ते, इमानि साधनीयानि ।

२—परिरमति, आशयति, गोपी कृष्णं शाययति, अत्र परस्मैपदं शास्त्रप्रदर्शनपूर्वकं लिखत ।

३—कृष्णश्चेद् भुङ्क्ते त्वं गाश्चारय, अपि जायां त्यजसि गर्हितमेतत् । आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति त्वं समाध्यापय, भारं त्वं वहेः—एषु लकारविधायकसूत्राणि तदर्थाश्च लेख्यानि ।

४—आलम्भ्यो गौः, शिष्यः, बुधः, रजकः, विश्वम्भरः, श्येनचित्, पीनम्, एते प्रयोगाः साधनीयाः ।

५—जरन्, वर्तिष्णुः तृष्णक्, प्रस्तावः, जयः, कृत्या, सातिः, उदपेषं पिनष्टि कथमेतेषां सिद्धिः? सशास्त्रं लिखत ।

## १९०४ । १ पत्रम् ।

१—पप्रतुः, पपरतुः, अशासीत्, अश्लिक्षत्, अश्लिषत्, जिघ्राय, इन्धे, अपास्किरत्, वधान-इमानि साधुसाधनीयानि ।

२—अचीकृतत्, अजीगणत्, कंसमजीघनत्, इति रूपाणि साधयत ।

३—अजूहवत्, अजूहावत्-इति रूपे प्रसाध्य विस्मापयन् विस्मितमात्मवृत्ताविह्यत्र कानुपपत्तिः किं च समाधानम् इति वदत ।

४—जिघृक्षति धिप्सतिः ऊर्णुनविषति, इमानि रूपाणि संसाध्य अन्त्ये द्विर्वचनेऽचीति निषेधः कुतो नेति ब्रूत ।

५—सोसूयाञ्चक्रे, चञ्चूर्यते, जङ्गहि, जागृढः, मामृमः-एतानि रूपाणि साधयत ।

६—गार्गीयति, उदपुपुच्छत, अभिषिषेणयिषति, स्वापयति, तिरायति-इमानि साधनीयानि ।

२ पत्रम् ।

१—अपस्किरते वृषो हृष्टः, विप्रवदन्ते वैद्याः, न्यायमपवदते, कृष्णं गोपी शाययति, अभाविषाताम्-इमानि रूपाणि साधयत ।

२—कं कतरं भोजयसि भोजयिष्यसि, भोजयितासि वा, अपि जायां त्यजसि, त्वं स्माध्यापय, त्वं कन्यां वहेः अत्र सूत्राणि वदत ।

३—पुरीमवस्कन्देत्यादि श्लोके केन सूत्रेण लोट् , अन्येषां व्याख्या च कुतो न ।

४—प्रयाम्यम् , नियम्यम् , कुप्यम् , आनाय्यः, अग्निचित्याकथमिमानि रूपाणि सिध्यन्ति ।

५—प्रियः, प्रेष्ठः, स्तम्बकरिः, रथन्तरम् , पितृघाती—अत्र कैः प्रत्ययाः ।

६—विद्यते भोक्तुम् संयावः, विष्टरः, द्रुघणः, अटाट्या, दुष्प्रलम्भः ज्ञात्वा, चोरङ्कारमाक्रोशति, केशग्राहं युध्यन्ते अत्र विशेषसूत्राणि वाच्यानि ।

१९०५ । १ पत्रम् ।

१—ऐयरुः, रेधुः, वव्रश्च, रियति, ममङ्क्थ, आनञ्जिथ-इमानि साधनीयानि ।

२—अस्ज थल् अत्र किं किं रूपं कथं चेत्युक्त्वा असाथाः सञ्चस्करिथ, अबाद्धाम्-साधनं विधेयम् ।

३—चयर्यति, अचुकुत्सत, घोषति, पताञ्चकार, अशूशवत् औब्जिजत्—इमानि संसाध्यन्ताम् ।

४—औननदिति, अपीपटदिति च सशङ्कासमाधि साधनीयेसधातुसूत्रप्रदर्शनपूर्वकं साधनीये ।

५—ईर्ष्यिषिषति, मित्सति, उचिच्छिषति, अरार्यते, अवागल्भिष्ट,शुनयति साधनीये।

२ पत्रम् ।

१—पराक्रमे, मुमूर्षति, आद्यत्यन्नम् , अन्वतप्त पापेन, उदम्बरः फलं पच्यते ।

२—णेरणाविति सूत्रस्यार्थमसाधारणं प्रयोजनं च प्रदर्श्योदाहरणे कक्ष्या विवेक्तव्याः ।

३—वृष्टिश्चेत् क्षिप्रमायास्यति श्वः शीघ्रं वप्स्यामः, योऽयं वत्सर आगामी तत्र यत् परमाग्रहायण्यास्तत्राऽध्येष्यामहे, अपि गिरिं शिरसा भिन्द्यात्, सोमयाज्यस्य पुत्रो भवितेत्येषु सूत्रार्थोत्सर्गप्राप्तिदर्शनपूर्वकं के के लकारा इति वाच्यम् ।

४—प्रष्ठ्यानीयम् , अजर्यम् , अमावस्या, अवाच्यम् , नीतम् इमानि साधनीयानि ।

१९०६ । १ पत्रम् ।

१—अपिपरुः, धत्तः, अभेष्यत्, आनर्छ, आनशे, आतथाः इमानि रूपाणि साध्यन्ताम् ।

२—दुधर्विव, शिण्ढि, तृणेढि, कुर्वन्ति, तस्तरतुः, अजीगणत्, इमे, प्रयोगाः साधु साधनीयाः ।

३—कंसमजीघतत्, अचीचकासत्, अचचकासत्, ऐधिष्यत्, ऐर्ष्यियत्, धिप्सति, अरिरिषति, ईत्सति इति सिद्धिं लिखत ।

४—अरियति, अजर्वाः, संश्चेस्क्रियते, वेवीयते इमे साध्याः ।

५—पुत्रकाम्यिता, अवगल्भाञ्चक्रे, सुखायते, विदयति-इमे प्रयोगाः-सम्यक् साध्याः ।

## वाक्परीक्षायाम् ।

अरावप्युचितं कार्यमातिथ्यं गृहमागते, छेत्तुः पार्श्वगतश्छायां नोपसंहरते द्रुमः । अत्र आतिथ्यं आगते-छेत्तुः-इति प्रयोगत्रयं सम्यग् वाच्यम् ।

## २ पत्रम् ।

१—अपस्किरते वृषो हृष्टः, दास्याः संयच्छते, आहसत, आयामयते इमे सम्यक् साधनीयाः ।

२—वत्सान् पाययति, भावयामास, अभाविषाताम्, आरिता, संस्क्रियते, घानिषीष्ट, शामिता एषां साधुत्वं प्रदर्शनीयम् ।

३—गम्यते, मासमास्यते, माणवकः, करिष्यते घटः स्वयमेव, गां पयो दोग्धि एषां साधनं विधेयम् ।

४—स्मरसि कृष्ण ! यद् वने वत्स्यामस्तत्र गाश्चारयिष्यामः, कृष्णश्चेद् भुङ्क्ते त्वं गाश्चारय, न मर्षये किं किलत्वं शूद्रान्नं भोक्ष्यसे, ऊर्ध्वं मुहूर्त्ताद्यजतां स्म, यातयातेति यूयं यात-साधनीया इमे ।

५—निर्विण्णः, प्रेन्वनम्, प्रयाप्यमाणम्, आज्यम्, विनियम्यम्, साधनीयम् ।

६—आह्वः, शंस्थः, ऊर्णुतः, निकेचायः, अधीत्य, मूषिकाविलम्, इमे साधु साधनीया ।

## १९११ । १ पत्रम् ।

१—ऐयः, देभतुः, असाद्धाम्, कुर्यात्, सञ्चस्करिव एते धातुसूत्राद्युपन्यासमुखेन साधनीयाः ।

२—अवृष्टं, अबान्धाम्, खौनीहि, औननत्, अपपटत्, कंसमजीघतत्—एते साधनीयाः ।

३—ऐर्षिष्यत्, ऊर्णुनविषति, उचिच्छिषति, अरिरिषति, जङ्घनीति, सास्वपीति इमे साधु साधनीयाः ।

४—आरियारीत्, अवर्वृतीत्, औजढत्, अतितिरायत्, एते सम्यक् साध्याः ।

५—विह्वस्यते, स्वमनायते, त्वादृयतीति, संसाध्य ज्ञापकस्य सजातीयापेक्षत्वे प्रमाणमुपपाद्यताम् ।

६—लोहितादिडाज्भ्यः क्यष्वचनमिति वार्त्तिकस्याभिप्रायं ब्रूत ।

१९११ । २ पत्रम् ।

१—कण्ड्वादीनां धातुत्वं प्रातिपदिकत्वोभयस्वीकारे फलं प्रमाणं च निरूप्य इन्द्र-शब्दप्रकृतिकक्यजन्तात् णिचि सनि णिति लुङि तिपि सिद्धिः प्रदर्शनीया ।

२—विजपते पाणिम्, समार्त, क्रोधं विनयते, शास्त्रे वदते, वासयते एतानि संसाध्य णेरणाविति सूत्रं सोदाहरणं व्याख्यायताम् ।

३—शप्यते युज्यते ब्रह्मचारी योगम्, अहं तु करोमि, त्वं स्म अध्यापय, अपि गिरिं शिरसा भिन्द्यात्, जन्यम्, एतानि साध्यानि ।

४—अवद्यं पापम्, खेयम्, लाभ्यम्, गेयः साम्नामयम्, पटूपटः, रजिकः लिम्पः—एते प्रयोगाः साधनीयाः ॥

५—त्रिष्ठा, बहुकरः, घटिन्धमः, पदसङ्घाटः, आशीः, श्रिमन्यं कुलम्, वृश्चणः, पीनं मुखम्, सहिष्णुः योगी—रूपाणीमानि साध्यन्ताम् ।

६—नेत्रम्, निगारः, पलित्रः, इक्षुमक्षिकां मे धारयसि, क्रिया, कन्यादर्शं वरयति, अपमित्य याचते, अस्यपगारं युध्यन्ते, अन्वग्भावम्—एषां सिद्धिप्रकारो दर्शनीयः ।

१९१२ । १ पत्रम् ।

१—बिभर्ति, जहीतः, जहाहि, अश्विरुक्षत्कन्यां। देवदत्तः, पसति एतेषां साधनप्रकारं लिखत ।

२—जिघाय, देभतुः, वव्रश्च, निष्कुरति, अबान्धाम् साधयेतानि रूपाणि ।

३—असिस्वदत, अशिश्वयत, दुद्यूषति, अरारिता, अवधीत्—निदर्शयत एतेषां सिद्धिम् ।

४—अजर्घाः, मिमीते, पुत्रीयति, समिधिता, क्षीरस्यति बालः, लोहितायति—एतेऽपि साधनीयाः ।

५—यकारवकारान्तानां तूङ्भाविनामिति फक्किका साधुव्याख्यायताम् ।

६—शैषिकान्मतुबर्थीयाच्छैषिकोमतुवर्थिकः । सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते । कारिकामिमामुदाहरणानि प्रदर्शनपुरस्सरं प्रपञ्चयत ।

१९१३ । २ पत्रम् ।

१—प्रापिपयिषति, महीयते, व्याददते पिपीलीकाः पतङ्गस्य मुखम् शतं संजानीते, वस्त्रमायच्छते, एषां सिद्धिः प्रदर्श्यताम् ।

२—नाशयति दुःखम्, अभाविषाताम्, अवरुद्ध गौः, कृष्णश्चेद् भुङ्क्ते त्वं गाश्चारय, यच्चयत्रवा त्वं शूद्रं याजयेः अधीष्व अधीष्व अधीते, कथं सिध्यन्तीमानि रूपाणि ।

३—चर्यम्, अध्यर्थ्यः, धाय्या, प्रक्रन्ता वदावदः पार्ष्णित्रम्, त्रिष्ठः, भुजङ्गः, अश्वयुक्, एषां साधुत्वमुपपाद्यताम् ।

४—भाष्यकृत, वृक्णः, विरिब्धः, जक्षिवान्, योगी, नप्त्री, कथमेषां सिद्धिः ।

५—द्वौ शूर्पनिष्पावौ, निग्राहस्ते भूयात्, पर्वतोपपन्नः पयःपानंसुखम्, आगम्य, अजकनाशं नष्टः, गेहमनुप्रवेशम्, एते प्रयोगाः साधनीयाः ।

१९१६ । १ पत्रम् ।

१—ऐयः, दधनति, प्रण्यपादि, उच्यति, स्तरिषीष्ट एते साध्यन्ताम् ।

२—म्रियते, तृणेढि, सञ्चस्कार, अवान्धाम्, पारयति एतेषां सिद्धिः कार्या ।

३—अजगणत्, चोरयति, क्नोपयति विलापयति, घटयति, विशेषसूत्रोपन्यासपूर्वकमेते साध्याः ।

४—ऊर्णुनुविषतीत्यत्राभ्यासे कथमिकारोच्चारणं नेति समाधाय, धातोरेकाचो हलादेः क्रियासमभिहारे यङित्यत्र धातुग्रहणस्य फलं निर्दशयत ।

५—वरीवृत्यते, जाग्रहिता, वेवीयते, तिरायति एषां सिद्धिप्रकार उपपादनीयः ।

१९१६ । २ पत्रम् ।

१—मुक्तावुत्तिष्ठते, निह्नुयते, रामः सीतामुपायत, एतानि रूपाणि संसाध्य आहध्वं मा रघूत्तममितिप्रयोगे शङ्कासमाधि निरूप्येताम् ।

२—कम्पयति, प्रालम्भि,ग्रन्थते ग्रन्थः, रूपाण्येतानि विशेष सूत्रोपन्यासेन साध्यन्ताम्

३—आचर्य्यः, त्याज्यम्, जनकः, नखम्पचा, शंस्थाः साधुसाध्यन्ताममी प्रयोगाः ।

४—खातम्, जग्धः, पवित्रमेतानि संसाध्य सुप्यजातौ णिनिस्ताच्छील्ये इति सूत्रे वृत्तिकारभाष्यकारयोः कथं को मतभेद इति स्पष्टमभिधीयताम् ।

५—प्रक्षः, नीवाराः, प्रधिः, आस्वादः, जीवनाशं नश्यति, अन्वग्भूय आस्ते, एते प्रयोगाः साध्यन्ताम् ।

६—कण्ड्वादीनां द्विधात्वे किं मानं किञ्च फलमिति स्पष्टमभिधीयताम् ।

१९१७ । १ पत्रम् ।

१—बिभृध्वे, जायात्, दिदीये, तप्यते, ववरिथ एते साधनीयाः ।

२—अकृष्ट, छुर्यात्, इन्धे, कुर्वः, श्रेथतुः एषां साधनप्रकारो लेख्यः ।

३—कथं तुलयति तुलना, घोषति, रामो राज्यमचीकरत्, श्वेतयते कथमेषां साधुत्वम् ?

४—अजीजवत्, असूषुपत्, रोपयति, विविदिषति, सिस्मयिषते उपपादयतैषां साधनप्रकारम् ।

५—अरारिता, अजङ्गमीत्, गव्यति, क्ष्णुति, अचकलत् । एते साधनीयाः ।

१९१७ । २ पत्रम् ।

१—उत्तपते, उत्कुरुते उपक्रमते, रूपाण्येतानि संसाध्य, णेरणावित्यादिसूत्रं सफलं सोदाहरणञ्च साधु व्याख्यायताम् ।

२—प्रवहति, अशमि, अवारुद्ध गौः, भवान् यजतामेतानि विशेषसूत्रोपन्यासेनसाध्यन्ताम् ।

३—शप्यम्, अवगृह्यम्, भव्यः, रद्धा, विवृत्सिता, साधुसाध्यन्तामभी प्रयोगाः।
४—आखूत्थः, सूत्रग्रहः, द्विकरः, पक्वः, एतानि साधयित्वा निष्ठायां सेटीति सूत्रे सेड्ग्रहणस्य प्रयोजनं विलिख्यताम्।
५—नेमिः, छित्, धवित्रम्, शारः, प्रवरः, न्यादः, एतेषु कः प्रत्ययः, स च किमर्थकः-केनेति च निरूप्यताम्।

१९१८। १ पत्रम्

१—नेनिजानि-प्रनङ्क्ष्यति-अनाशे-चवृष्ठ-अम्राक्षीत्-एते प्रयोगा विशेषकार्योपन्यासपूर्वकं साधनीयाः।
२—संल्कियात्- जानीहि-अपपर्थत्-कंसमजीघनत्, एतेषां सिद्धिः प्रदर्शनीया।
३—ओः पुरण्ज्यपरे इति सूत्रे वर्गप्रत्याहारजग्रहोलिङ्गमिति फक्किका विशदं व्याख्यायताम्।
४—विलाल्यति-भीषयते-ऊर्णुनुविषति-उचिच्छिषति एतानि साधु साधयत।
५—चञ्चूर्यते, पाप्रष्टः-अकवयीत्- त्वादयति एषां साधनप्रकारं सम्यगुपवर्णयत॥

१९१८। २ पत्रम्।

१—चन्द्रीयितुमिच्छतीति विग्रहे कथं कानि रूपाणि।
२—आक्रीडते-आहत-प्रक्रमते-संचरते, एषु पदकार्य्यमभिलक्ष्यकर्तृस्थे चाशरीरेकर्मणीति सूत्रं व्याख्यायताम्।
३—विरमति, तायते, भिद्यत काष्ठम्, पुरा भुङ्क्ते-एषु विशेषकार्य्यमभिधीयताम्।
४—देयम्-याप्यम्-चराचरः-ब्रह्मज्यः-पतितः, स्मरः। एतानि साध्यन्ताम्।
५—इचेति ह्रस्वः, सुपठः, नेड्वशि कृतीतीण् निषेधः, अर्थग्रहणमस्ति नैव सम्बध्यते, कर्तरीति किं गुरोः स्नापनं सुखम् कुत्रत्यानि केन ।चाभिप्रायेणोपस्थिता नीमानि वाक्यानि।

१९१९। १ पत्रम्।

१—धत्तः, आस्थत्, वरिषीष्ट, मरूद्वृध, असिचत्, एते प्रयोगा विशेषकार्योपन्यासपूर्वकं साधनीयाः।
२—अचच्छृदत्, सञ्चस्करतुः, एषिता, अपीपिडत्, अजीगणत्, एतेषां सिद्धिः दर्शनीया।
३—अशूशुवत् अध्यजीगपत्, ईप्सति, अरिरिषति, एषां साधनप्रकारः साधूपपादनीयः।
४—पंफुल्यते, शाशय्यते, अबोभूवीत्, सास्वपीति एतानि सम्यगुल्लिखत।
५—वशायते, स्वमनायते, शावयति, एते सविशेषं साध्याः।

१९१९ । २ पत्रम् ।

१—आज्नुते, वितपते, संविते दुःखशतानि भुङ्क्ते, एषु विशेषकार्य्यमभिधीयताम् ।

२—कर्म्मवत् कर्म्मणातुल्यक्रिय इति सूत्रस्य कोऽर्थः किञ्चोदाहरणम्, सूत्रकर्म्मणेत्यस्य वा किम्फलम् ।

३—पुराभुङ्क्ते, इच्छेत्, मा कार्षीः 'एषु विशेषकार्य्यमभिधाय, अनुपराभ्यां कृञ इति सूत्रे कर्तरीत्येव भावकर्मणोर्माभूत्, इत्यादि फक्किका विशदं व्याख्यायताम् ।

४—भव्यः, नायः, द्विकरः, शत्रुंसहः-एतानि साधयत ।

५—सांराविणं, स्तम्बघनः, शिरोर्तिः एतानि संसाधयत ।

१९२० । १ पत्रम् ।

१—वक्ष्यति, रराधिथ, देभतुः, अतर्पीत्, कुर्यात्, एतानि रूपाणि विशेषकार्योपन्यासपूर्वकं साधनीयानि ।

२—अतत, शश्रतुः, अबान्धाम्, अचिकीर्तत्, पादयते, एषां साधनोपायः साधूपपादनीयः ।

३—अवातस्तम्भत, ऐर्ष्यियत् अधिजिगांस्यते, पुस्फारयिषति एतेषां सिद्धिर्निरूपणीया।

४—अरार्यते, सनीस्रस्यते, जङ्घनीति, मामीति एते सविशेषं साध्याः ।

५—सपतीयते, अमालासीत्, तिरायति, एतानि सम्यगुल्लिखत ।

१९२० । २ पत्रम् ।

१—तपस्तपः कर्म्मकस्यैवेतिसूत्रस्य किमुत्थानबीजम्, वृत्तिकारमतञ्चात्र कीदृशम् तदायुष्मते रोचते न वा ।

२—उपक्रमते, निर्विविक्षते, गां जानीते, स्वं पुत्रमपवदते, एषु पदकृत्यमात्रं विनिर्दिश्यप्रकृतोमितां ह्रस्व एव तु न विकल्पितः, इत्यादिफक्किकाविशदं व्याख्यायताम् ।

३—कन्यां वहः, जन्यम्, भार्य्या वधूः, उपचेयम्, एतानि साध्यन्ताम् । ब्रह्मज्यः, आखूत्थः, स्तम्बकरिः, विहगः, शीतभोजी, एतान्यपि ।

४—धृषिशसीवैयात्ये, उपदंशस्तृतीयायामेते सूत्रे साथ सोदाहरणे । सपदकृत्ये व्याख्यायेताम् ।

१९२१ । १ पत्रम् ।

१—पिपूर्तः, प्रनङ्क्ष्यति, पर्यास्थत, ममङ्क्थ, ववष्ठ, एतानि रूपाण विशेषकार्योपन्यासमुखेन साधनीयानि ।

२—संस्कृषीष्ट, स्तरिषीष्ट, अपपटत्, असंग्रामत एतेषां साधनप्रकारः प्रदर्शनीयः ।

३—औब्जिजत्, अपीप्यत, दुद्यषति, शोशूयते, बाभ्राम्यते एषां सिद्धिर्निरूपणीया।

४—शोभवीति, तोतोर्ति, श्यामायते, शुनयति एते सविशेषं साध्याः ।
५—उपसर्गसमा नाकारमिति ज्ञापकस्य मूलोक्तं फलं विशदमुपवर्ण्य विशेषविषयत्वे भाष्यवार्तिकयोः प्रामाण्यं साधूपपाद्यताम् ।

१९२१ । २ पत्रम् ।

१—उपदेशे योऽच् तदन्तानामित्युक्तत्वादारितेत्यादौ चिण्वद्भावः कथमित्यभिधाय द्विकर्मकेषु सोदाहरणं कर्म्मप्रत्ययविचारः प्रस्तूयताम् ।
२—सम्प्रतिश्यामनाध्याने, शकिलिङ्चेति सूत्रयोरनाध्याने च शब्दोपादानप्रयोजनं विनिरूप्य पुरीमवस्कन्देत्यादौ कथय किमर्थकं किं सूत्रं प्रवृत्तमित्यभिधीयताम् ।
३—लावकः, वतः, सिनः, स्वान्तम्, पीनमेतानि संसाध्य घिनुण उकार उच्चारणार्थः प्रयोजनार्थो वेत्यभिधीयताम् ।
४—नेड्वशिकृतीतीण्निषेधः अर्थग्रहणमस्ति नैव सम्बध्यते । प्राचां ग्रहणं पूजार्थम् । शमिधातोरित्यचं बाधितुं सूत्रम् । कुत्रत्यानि केन चाभिप्रायेणोपस्थितानीमानिवाक्यानि ।

१९२३ । १ पत्रम् ।

१—बब्धः, दिदीये, अमासीत्, अक्षृष्ट, परिवेत्ता, रुन्धः, अकृत अबान्धाम्, अलुलोचत्, पादयते एतेषां सिद्धिर्निरूपणीया ।
२—अदृदुरत्, प्राणणत्, ईप्सति, शुशावयिषति, सासद्यते, सनीस्रस्यते, जङ्घनीति, तोतोर्ति एषां साधनप्रकारः साधूपपादनीयः ।
३— यङ्लुक्प्रकरणे ङित्वस्यात्मनेपदनिमित्तत्वाभावोमूलोक्तदिशास्फुटी क्रियताम् ।
४—विद्वायते, अकबयीत्, लोहिनीयति, स्वापयति, एतानि सम्यक् साधयत ।

१९२३ । २ पत्रम् ।

१—भिदेलिमाः, कार्य्यम्, याज्यम् रम्भकः, पुष्पाहर, कार्तिः, जिष्णुः, धुवित्रम्, घस्मरः कः एषां साधनप्रकारः ।
२—सप्रकृताभिप्रायमधोनिर्दिष्टवाक्यानि व्याक्रियन्ताम् इचेति ह्रस्वः सुपठः । अच्वावित्युत्तरार्थम् । शमिधातोरित्यचं बाधितुं सूत्रम् । नेड्वशिकृतीतीण् निषेधः ।
३—तन्तुः, तन्तिः, अजकनाशम्, नामग्राहम्, चेलक्नोपम्, अन्वग्भावम्, एतानि संसाध्य संज्ञासु धातुरूपाणीत्यनेन किं प्रतिपाद्यते लभ्यते चेदं कथमित्यभिधीयताम् ।
४—आहध्वं मा रघूत्तममित्यत्र शङ्कासमाधीविनिर्दिश्य चन्द्रीयितुमिच्छतीति विग्रहे कथं कानि रूपाणीति सयुक्तिकमुपपाद्यताम् ।
५— विरमति, अभाजि, नमते पुरा भुङ्क्ते, एषु विशेषकार्य्यमभिलप्य, धातोरर्थान्तरेवृत्तेर्धात्वर्थेनोपसंग्रहात् प्रसिद्धो विपक्षातः कर्म्मणोऽकर्म्मका क्रिया, पद्यस्यैतस्योल्लेखप्रयोजनं समुल्लिख्योदाहरणानि प्रदर्शनीयानि ।

१९२४ । १ पत्रम् ।

१—जह्मात्, सृक्षीष्ट, अइलेषि, आनशे, ससर्जिथ, परिवेत्ता, सञ्चस्करतुः, शशरिव, प्रणिचयति, आहूयते, एतानि रूपाणि विशेषकार्योपन्यासपूर्वकं साधनीयानि ।

२—चितिधातोरिदित्करणस्य णिचः पाक्षिकत्वे ज्ञापकत्वं, मतभेदेन विशेषापेक्षसामान्यापेक्षत्वयोः प्रमाणं फलप्रदर्शनपुरस्सरं सोपपत्तिकं निरूपणीयम् ।

३—जटाभिर्लापयते औञ्जीजत् ईर्त्सति पंफुल्यते चलीक्लृप्यते आरति प्रापद्धनः जिघृक्षति एषां सिद्धिः प्रदर्शनीया ।

४—सपतीयते, सुमनायते, पटपटायते, अजहलत्, प्रशस्यति, एते सविशेषं साध्याः ।

१९२४ । २ पत्रम् ।

१—आरिताभावावितेत्यादि सङ्ग्रहाय 'स्यसिच्' इति । सूत्रस्य निर्दिष्टार्थमुपवर्ण्य सम्प्रतिभ्यामनाध्याने' इति सूत्रेऽनाध्यानग्रहणं सफलयन्तु ।

२—नामादेशम्, जीवनाशम्, तथाकारम्, लवणङ्कारम्, ऋतित्वा रन्तिः, शमः, परीहारः, मूलः, एषु का प्रकृतिः कः प्रत्ययः किमर्थकं किञ्च प्रवृत्तं सूत्रम् ।

३—पुरीमवस्कन्देति पद्ये केन लोट्? तदर्थश्च कः सू न्तरेण वा विद्धौ को दोष इत्यादि सकलमर्थजातं प्रपञ्चय सप्रकृताभिप्रायप्रपञ्चमधस्तनानि वाक्यानि विविच्यन्ताम् । इचेति ह्रस्वः सुपठः । नेड्वशिकृतीतोणिनिषेधः । अर्थग्रहणमास्त नैवासम्भवत्यते ।

४—सुप्यजातौ णिनिरिति सूत्रे वृत्तिकारभाष्यकारयोर्मतभेदं प्रदर्श्य 'निष्ठायां सेटि' 'श्किलिङ् च' इति सूत्रयोः सेड्ग्रहणं च शब्दग्रहणयोः फलमभिलप्यताम् । अनुपयुक्तलेखाडम्बरो निषिद्धः ।

---

प्राप्तिस्थानम्—

चौखम्बा-संस्कृत-पुस्तकालय,

बनारस सिटी ।

शीघ्रता करें ! अनमोल रत्न !! प्रकाशित हो गया !!!

# "श्रीकोष"

## ( हिन्दी से संस्कृत जेबी कोष )

प्रिय छात्र गण !

यों तो कोश ग्रन्थों में संस्कृत से हिन्दी के तो कई एक कोष ग्रन्थ देखने में आते हैं मगर विद्यार्थियों के उपयुक्त हिन्दी से संस्कृत अनुवाद करने के लिए कोई भी हिन्दी-संस्कृत कोश प्रकाशित नहीं हुआ था। इस भारी न्यूनता को दूर करने के लिए हमने "श्रीकोष" (हिन्दी से संस्कृत जेबी कोष) का प्रकाशन किया है इस "श्रीकोष" के द्वारा आपको एक शब्द के कई अर्थ एवं पर्याय पर्याप्तरूपेण मिल सकेंगे। इसमें लिङ्ग, क्रिया, क्रियाविशेषण, संज्ञा, भाववाचकसंज्ञा, आदि का निर्देश समुचितरूप से दिया गया है। 'एकसरे, कुर्सी, टेबुल, आलमारी, बेंच, म्युन्सपलिटी, कचहरी, जज, कोतवाल, थानेदार' आदि वर्तमान चलते-फिरते शब्दों की ओर (जिनकी संस्कृत बनाने में आप लोगों को अत्यन्त कठिनाई पड़ती थी) विशेष ध्यान दिया गया है। यह 'श्रीकोष' संस्कृत तथा अंग्रेजी पढ़ने वाले छात्रों का समानरूप से ध्यान रख कर ही तैयार किया गया है। इसलिए 'श्रीकोष' दोनों के बड़े काम की पुस्तक हो गयी है। अब संस्कृत तथा अंग्रेजी के छात्रों को लेशमात्र भी हताश होने की आवश्यकता नहीं। आनन्द से इस जेबी "श्रीकोष" के द्वारा अनुवाद में सफलता प्राप्त कर परीक्षा में उत्तीर्ण हो जाइए।

हे छात्रजन ! यदि चाहते, अनुवाद में उत्तीर्णता,  
'श्रीकोष' से करिये तुरत, व्युत्पत्ति की विस्तीर्णता।  
श्रीकोष वालो से यथा, दारिद्र्य डरता है सदा,  
'श्रीकोष' वालो सें तथा, अज्ञान भगता सर्वदा॥

मूल्य ॥)

प्राप्तिस्थानम्—चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी।

प्रकाशित हो गया ! प्रकाशित हो गया !!

# वेणीसंहारनाटकम्—

## 'प्रबोधिनी'—'प्रकाश' संस्कृत-हिन्दी टीकाद्वयोपेतम् ।

गवर्नमेन्ट संस्कृत कालेज बनारस, के शास्त्री प्रथम खण्ड में तथा कलकत्ते के साहित्य उपाधिपरीक्षा द्वितीय पत्र में निर्धारित यह 'वेणीसंहार" का नूतन संस्करण परीक्षार्थियों के लिए बहुत ही उपयोगी हुआ है ।

अब तक इस नाटक के ऊपर परीक्षार्थियों के उपयुक्त इस तरह की विस्तृत और सरल कोई व्याख्या नहीं हुई थी । परीक्षा में आये हुए प्रश्नों का समीचीन उत्तर देने में कोमलमति वाले परीक्षार्थियों की अत्यन्त कठिनाइयों को देखकर ही हमारे इस ग्रन्थके टीकाकारों ने सभी नवीन व प्राचीन प्रकाशित टीकाओं का गुण-दोष विवेचन करके नाटकीय व्याख्या के ढङ्ग पर श्लोकान्वय, विग्रह, पर्याय, सुन्दर अर्थ, भावार्थ, अलङ्कार तथा कोषादि प्रमाण से शब्दान्तर देकर समन्वय करते हुए प्रबोधिनी और प्रकाश (संस्कृत-हिन्दी) टीकाओं से, श्लोक, प्राकृत तथा गद्य को इस तरह समझाया है कि, शास्त्री तथा मध्यमा के सुकोमल विद्यार्थी भी स्वयं इससे ज्ञान प्राप्त कर सकते हैं । इसमें प्रत्येक पात्र का लक्षण तथा नाटक, चम्पु, काव्य और महाकाव्य आदि का लक्षण भी जगह २ पर दे दिया गया है जो कि आजतक किसी भी अन्य संस्करणों में नहीं पाया जाता । इतनाही नहीं विस्तृत 'भूमिका' में सम्पूर्ण ग्रन्थ की समालोचना कर के सभी अङ्क का संक्षिप्त 'कथासार' भी अलग लिख दिया गया है, जिससे संक्षेप में इस ग्रन्थ का कथानक समझने में बड़ी सुगमता हो गई है । किं बहुना, जिन स्थलों पर अन्य टीकाकारों ने ग्रन्थाशय न समझ कर मन गढन्त पाठ और टीका कर दी है उन स्थलों को भलि भाँति सप्रमाण विस्तृत रूपसे 'कविवर-भट्टनारायण' के यथार्थ आशय का वर्णन कर के समन्वय किया गया है ।

'हाथ कंगन को आरसी क्या' हमारा नम्र निवेदन है कि वेणीसंहार खरीदने के पूर्व इन प्रबोधिनी और प्रकाश टीकाओं को देख कर ही आप पुस्तक खरीदने का कष्ट करें अन्यथा बाद पश्चाताप से क्या लाभ होगा ।

मूल्य भी बहुत अल्प १॥) मात्र

---

प्राप्तिस्थानम्—

**चौखम्बा-संस्कृत-पुस्तकालय, बनारस सिटी ।**